त्वया हत्वा महाबाहो वनं निष्कण्टकं कृतम् ॥ ५

आपदं चापि सम्प्राप्ता द्रौपदी चारुहासिनी ।
जटासुरवधं कृत्वा [1]त्वया च परिमोक्षिता ॥ ६

मत्स्यराजान्तिके तात वीर्यपूर्णोऽप्यमर्षणः ।
वृकोदर विराटस्य [2]बलवानबलीयसः ॥ ७

समीपे नगरे [3]तस्य रंस्यसे केन कर्मणा ॥ ७॥

भीमः—

सूदोऽहं बल्लो नाम्ना सूपकारो [4]नराधिप ।
उपस्थास्यामि राजानं विराटमिति रोचये ॥ ८॥

रसान् नानाविधांश्चापि [5]स्वादून् सुमधुरांस्तदा ।
सूपांश्चापि करिष्यामि कुशलोऽस्मि महानसे ॥ ९॥

पूर्वमप्राशितांस्तेन कर्तास्मि सुगुणान्वितान् ।
स्वादु व्यञ्जनमास्वाद्य [6]मन्ये प्रीतो भविष्यति ॥ १०॥

आहरिष्यामि दारूणां पाटितानां शतं शतम् ।

---

1. क-ख-म—वयं च परिमोक्षिताः ।
2. क—बलवान्दुर्बलीयसः    ख-ङ-च-म—बलीयान्दुर्बलीयसः ।
   घ—बलीयानबलीयसः ।
3. क-म—तात    4. क-म—नियोधक:
5. क-च-म—स्वादुवन्मधुरांस्तथा    ख—स्वादून्वा मधुरांस्तथा ।
   घ—स्वादुकान्मधुरांस्तथा ।
6. ख-घ-म—मात्स्यः

राजा कर्माणि मे दृष्ट्वा न मां परिभविष्यति ॥ ११॥

ये च तस्य महामल्लास् समरेष्वपराजिताः ।
कृतप्रतापा बहुशो राज्ञः प्रत्यायका बले ॥ १२॥

[1]रङ्गोपजीविनस्सर्वे परेषां च भयावहाः ।
[2]सर्वांस्तान् निहनिष्यामि रतिं राज्ञः प्रवर्धयन् ॥ १३॥

न च तान् युध्यमानोऽहं नयिष्ये यमसादनम् ।
तथा तान् निहनिष्यामि जीविष्यन्ति यथाऽऽतुराः ॥ १४॥

वृषो वा महिषो वाऽपि नागो वा षाष्टिहायनः ।
सिंहो व्याघ्रो [3]यथा चान्यो ग्रहीतव्यो भविष्यति ॥ १५॥

तान् सर्वान् दुर्ग्रहानन्यैर् आशीविषविषोपमान् ।
बलादहं ग्रहीष्यामि मत्स्यराजस्य पश्यतः ॥ १६॥

आरालिका वा सूदा वा येऽस्य युक्ता महानसे ।
तानहं प्रीणयिष्यामि [4]मानुषान् स्वेन कर्मणा ॥ १७॥

[5]आरालिको गोविकर्ता सूपकर्ता नियोधकः ।
आसं युधिष्ठिरस्याहम् इति वक्ष्यामि मानुषान् ॥ १८॥

---

1. अ—कोशे इदमर्धं नास्ति ।　　2. ख-ङ-च-म—तानहं
3. क-ख-ङ-म—यदा चास्य ।　घ—सदा चास्य ।　च—वने चास्य
4. ख—मानुषेणैव ।　　मानुषांस्तेन ।
5. घ—आरालिकोऽपूपकर्ता ।

[1]इत्येवं मत्प्रतिज्ञातं [2]विहरिष्याम्यहं यथा ॥
विराटनगरे च्छन्नो विराटस्य समीपतः ॥ १९॥

युधिष्ठिरः—
अग्निर्ब्राह्मणरूपेण [3]प्रच्छन्नो यमयाचत ।
महाशनं ब्राह्मणं मां प्रमुञ्चार्जुन खाण्डवे ॥ २०॥
संशुश्रुवे च धर्मात्मा यस्तमर्थं चकार ह ।
तस्मै ब्राह्मणरूपाय हुताशाय महायशाः ॥ २१॥
यस्तु देवान् मनुष्यांश्च सर्वानेकरथोऽजयत् ।
स भीमधन्वा श्वेताश्वः पाण्डवः किं करिष्यति ॥ २२॥
आशीविषसमस्पर्शो नागानामिव वासुकिः ।
[4]अहीनां दृष्टिविषवद् अग्निस्तेजस्विनामिव ॥ २३॥
समुद्र इव सिन्धूनां शैलानां हिमवानिव ।
महेन्द्र इव देवानां दानवानां बलिर्यथा ॥ २४॥
सुप्रतीको गजानां च युग्यानां तुरगो यथा ।
कुबेर इव यक्षाणां मृगाणां केसरी यथा ॥ २५॥
राक्षसानां दशग्रीवो दैत्यानामिव शम्बरः ।

---

1. ख—आत्मानमात्मना रक्षंश्चरिष्यामि विशाम्पते । [अधिकः पाठः]
2. क-च-म—विचरि
3. क-म—छद्ममश्रमयाचत । घ—छन्नो ह्यश्रमयाचत ।
   ख-ङ-च—प्रच्छन्नोऽश्रमयाचत ।
4. क-म—दृष्टीविष इवाहीनामग्निस्तेजस्विनामिव ।
   अ—आशीविषो यथाऽहीनां ।

रुद्राणामिव कापाली विष्णुर्बलवतामिव ॥ २६॥
रोषामर्षसमायुक्तो भुजङ्गानां च तक्षकः ।
वायुवेगबलोद्धूतो गरुडः पततामिव ॥ २७॥

तपतामिव चादित्यः प्रजानां ब्राह्मणो यथा ।
ह्रदानामिव पातालं पर्जन्यो ददतामिव ॥ २८॥

आयुधानां वरो वज्रः ककुद्मांश्च गवां वरः ।
धृतराष्ट्रश्च नागानां हस्तिष्वैरावतो वरः ॥ २९॥

पुत्रः प्रियाणामधिको भार्या च सुहृदां वरा ।
गिरीणां प्रवरो मेरुर् देवानां मधुसूदनः ॥ ३०॥
ग्रहाणां प्रवरश्चन्द्रस् सरसां [1]मानसं वरम् ॥ ३१
[2]यथैतानि विशिष्टानि स्वस्वजात्यां वृकोदर ।
एवं युवा गुडाकेशश् श्रेष्ठस्सर्वधनुष्मताम् ॥ ३२

सोयमिन्द्रादनवमो वासुदेवाच्च भारत ॥ ३२॥
उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि ।
[3]ब्रह्मचारी व्रते युक्तस् सर्वशस्त्रभृतां वरः ॥ ३३॥
अवाप चात्ममकाङ्क्षस् सर्वं सर्वज्ञसम्मतः ॥ ३४

---

1. क-घ-च-म—मानसो वरः। ख—मानसं सरः।
2. अ—कोशे इदमर्धं नास्ति।
3. क-ख-म—ब्रह्मचर्यव्रते युक्तः सर्वशस्त्र

क्षिप्रं चाणु च चित्रं च ध्रुवं च वदतां वरः ॥ ३४॥

अनुज्ञातस्सुरेन्द्रेण पुनः प्रत्यागतो महीम् ॥ ३५

धार्तराष्ट्रविनाशाय पाण्डवानां जयाय च ।
यं मन्ये द्वादशं रुद्रम् आदित्यानां त्रयोदशम् ॥ ३६

[1]यस्य दीर्घौ समौ बाहू [2]ज्याघातकठिनत्वचौ ॥ ३६॥

[3]दक्षिणश्चैव सव्यश्च [4]बाहावनडुहो यथा ।
तलाङ्गुलित्राभ्युषितौ नागराजकरोपमौ ॥ ३७॥

[5]श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः ।
गाण्डीवधन्वा श्वेताश्वः किरीटी वानरध्वजः ॥ ३८॥

किंरूपधारी किंकर्मा किंचेष्टः किंपरायणः ।
बीभत्सुर्भीमधन्वा च किं करिष्यति चार्जुनः ॥ ३९॥

कुन्तीपुत्रो विराटस्य [6]रमते केन कर्मणा ॥ ४०

अर्जुनः—

इमौ किणकृतौ बाहू ज्याघात[7]कठिनत्वचौ ।
नित्यं कञ्चुकसञ्छन्नौ नान्यथा गोप्तुमुत्सहे ॥ ४१

1. ख—वसूनां नवमं मन्ये गिरीणामष्टमं स्मृतम् । [अधिकः पाठः]
2. क—ज्याघातौ किङ्किणीकृतौ । ख-ग-ङ-म—ज्याघातेन किणीकृतौ ।
3. अ—कोशे इदमर्धं नास्ति । 4. ङ—बाहू च नमुचेर्यथा ।
5. ख-ङ—पीनौ परिघसङ्काशौ मृदुताम्रतलौ शुभौ । [अधिकः पाठः]
6. क-ङ—रंस्यते 7. क-ख-ङ-च-म—तलपीडनात् ।

किं तु कार्यवशादेतद् आचरिष्यामि कुत्सितम् ।
[1]आख्यातषण्डकोऽस्मीति प्रतिज्ञातं हि पातकम् ॥ ४२

बाहू मे भरतश्रेष्ठ महाव्यञ्जनलक्षितौ ।
ज्याघातेन महान्तौ मे गूहितुं नान्यथोत्सहे ॥ ४३

[2]उभौ कम्बू प्रतीमुच्य कुण्डले परिपातुके ।
वेणीकृतशिरा भूत्वा भविष्यामि बृहन्नला ॥ ४४

पठन्नाख्यायिकां नाम स्त्रीभावेन पुनः पुनः ।
प्रजानां समुदाचारं [3]बहु नर्मकृतं वदन् ॥ ४५
रमयिष्यामि राजानम् अन्यं चान्तःपुरे जनम् ॥ ४५॥

नृत्तं गीतं च वादित्रं दिव्यं च विविधं तथा ।
शिक्षयिष्याम्यहं राजन् विराटनगरे स्त्रियः ॥ ४६॥

स्त्रीभावसमुदाचारान्नृत्तगीतकथाश्रयैः ।
छादयिष्यामि राजेन्द्र माययाऽऽत्मानमात्मना ॥ ४७॥

---

1. च-कोशे—इदमर्धं नास्ति-स्थलान्तरे वर्तते see foot-note 2.
2. ख-च—वासुदेवसमो लोके यशसा विक्रमेण च ॥
सोऽयं राज्ये विराटस्य भवने भरतर्षभ ।
मेरुः प्रच्छादित इव निर्घोसं शृणु सुष्ठिना ॥ [अधिकः पाठः]
म—सोऽहं क्लैब्येन रूपेण षण्डकोऽहमिति ब्रुवन् ।
च—आख्यातषण्डकोऽस्मीति प्रतिज्ञातं हि पातकम् ॥
[अधिकः पाठः]

3. क-ख-ध-ङ-ग—सुनिकर्मकृत् ।

युधिष्ठिरस्य गेहेऽस्मिन् द्रौपदीपरिचारिका ।
[1]उषिताऽस्मीति वक्ष्यामि धर्मराजस्य सम्मता ॥ ४८॥
[2]उर्वश्या अपि शापेन प्राप्तोऽस्मि नृप षण्डताम् ।
शक्रप्रसादान्मुक्तोऽहं वर्षाणां तत्त्रयोदशम् ॥ ४९॥
एतेन विधिना च्छन्नः कृतकेन यथाबलम् ।
विहरिष्यामि राजेन्द्र विराटनगरे सुखम् ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ ४५ ॥ वैराटपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ५०॥ श्लोकाः]

## ॥ चतुर्थोऽध्यायः ॥

युधिष्ठिरं प्रति नकुलेन विराटनगरे अश्वपालकतया स्वस्य निवासकथनम् ॥ १ ॥ सहदेवेन गोपालकतया स्वस्य निवासकथनम् ॥ २ ॥ द्रौपद्या सैरन्ध्रीभावेन स्वस्य निवासकथनम् ॥ ३ ॥

युधिष्ठिरः—
[3]किंकर्ता किंसमाचारो नकुलोऽयं भविष्यति ।
सुकुमारश्च शूरश्च दर्शनीय[4]स्सुखे रतः ॥ १

1. क-ख—भावितास्मीति चाख्यामि ।
2. च-म—कोशयोः श्लोकोऽयं नास्ति ।
3. क—किं त्वं नकुल कुर्वाणस् तस्य तात चरिष्यसि ।
ख-ग-च-म—किंकर्मा ।
4. क-ख-ग-म—सुखैधितः । छ—सुखोचितः ।

अदुःखार्हश्च बालश्च लालितश्चापि नित्यशः ।
सोऽयमार्तश्च शान्तश्च किं नु रोचयिता त्विह ॥ २

नकुलः—

अश्वाध्यक्षो भविष्यामि विराटस्येति मे मतिः ।
दामग्रन्थीति नाम्नाऽहं कर्मैतत् सुप्रियं मम ॥ ३
दामग्रन्थी परिज्ञाता कुशलो दामकर्मणि ॥ ३॥
[1]कुशलोस्म्यश्वशिक्षायां तथैवाश्वचि[2]कित्सिते ।
प्रियाश्च सततं मेऽश्वाः कुरुराज यथा तव ॥ ४॥
न मां परि[3]हरिष्यन्ति किशोरा वडवास्तथा ।
न दुष्टाश्च भविष्यन्ति पृष्ठे धुरि च मद्गताः ॥ ५॥
प्रेक्षन्ते ये च मां केचिद् विराटनगरे जनाः ।
तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्यहं सुखम् ॥ ६॥

वैशम्पायनः—

नकुलेनैवमुक्तस्तु धर्मराजोऽब्रवीद्वचः ॥ ७

युधिष्ठिरः—

बृहस्पतिसमो बुद्ध्या नये चोशनसा समः ।
मन्त्रैर्नानाविधैर्नीतः पथ्यैस्सुपरिनिष्ठितः ॥ ८

---

1. ख-ब-ङ—न मां परिभविष्यन्ति जना आत्विह कर्हिचित् ।
[अधिकः पाठः]

2. ख—चिकित्सने ।    3. च-म—भवि

सुप्रणीतैस्सुमार्गस्थो राजतन्त्रमपालयत् ॥ ८॥

न चास्य [1]स्वलितं किञ्चिद् ददृशुस्ताद्विदो जनाः ।

[2]सुनीतिमान् सुशूरश्च सर्वमन्त्रविशारदः ॥ ९॥

अधिकं मातुरस्माकं कुन्त्याः प्रियतरस्सदा ।

सहदेव कथं कर्म तस्य राष्ट्रे करिष्यसि ॥ १०॥

किं वा त्वं तात कुर्वाणः प्रच्छन्नो विचरिष्यसि ॥ ११

सहदेवः—

गोसङ्ख्याता भविष्यामि विराटस्येति रोचये ॥ ११॥

प्रतिमोक्ता च दोग्धा च सङ्ख्यानकुशलो गवाम् ।

तन्त्रीपालेति मे नाम स्वयं प्रोक्तं भविष्यति ॥ १२॥

अरोगा बहुलाः पुष्टाः क्षीरवत्यो बहुप्रजाः ।

निष्पन्नसत्त्वास्सुभृता व्यपेतज्वरकिल्बिषाः ॥ १३॥

नष्टचोरभया नित्यं व्याधिव्याघ्रविवर्जिताः ।

[3]गावश्च सुसुखा राजन् निरुद्विग्ना निरामयाः ॥ १४॥

भविष्यन्ति मया गुप्ता विराटपशवो नृप ॥ १५

1. क-ङ-म—चलितं । ख-च—सदृशं । घ—चरितं ।

2. क-म—सुनीतनायी शूरश्च । ङ—सुनीतिरतिधीरश्च ।
ख—सुनीतिमश्च शूरश्च । च—सुविनीताधिशूरश्च ।

3. क—गावस्तु सुखिता । घ—गावस्तुसुहिता ।
ङ-च—गावस्तुसहिता ।

[1]निपुणश्च चरिष्यामि प्रीतिरत्र परा हि मे ॥ १५॥
[2]अहं हि भवतो गोषु प्रकृतस्सततं पुरा ॥
तत्र मे कौशलं सर्वम् अवबुद्धं विशाम्पते ॥ १६॥
रक्षणं चरितं चैव गवां मङ्गललक्षणम् ।
तत् सर्वं मे सुविदितम् अन्यच्चापि महीपते ॥ १७॥
ऋषभानपि जानामि राजन् पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ १८॥
सोऽहमेवं चरिष्यामि प्रीतिरत्र परा हि मे ।
न च मां वेत्स्यति परस् तत् ते रोचतु पार्थिव ॥ १९॥

युधिष्ठिरः—

केनात्र कर्मणा कृष्णा द्रौपदी विचरिष्यति ।
[3]न हि किञ्चन जानाति कर्म कर्तुं यथा स्त्रियः ॥ २०॥
माल्यान् गन्धानलङ्कारान् वस्त्राणि विविधानि च ।
एतान्येवाभिजानाति यतोजाता च भामिनी ॥ २१॥
इयं तु नः प्रिया भार्या प्राणेभ्योऽपि गरीयसी ।
मातेव परिपाल्या च पूज्या ज्येष्ठा स्वसेव च ॥ २२॥

---

1. ख-निपुणं च चरिष्यामि ।　　घ-ङ—निपुणं विचरिष्यामि ।
च—निपुणत्वं चरि
2. अ—कोशे सार्धश्लोकत्रयं नास्ति ।
3. च—कोशे इतः श्लोकद्वयं नास्ति ।

सुकुमारी सुशीला च राजपुत्री यशस्विनी ।
कथं वत्स्यति कल्याणी विराटनगरे सती ॥ २३॥

द्रौपदी—

अहं वत्स्यामि राजेन्द्र निर्वृतो भव पार्थिव ।
यथा ते मत्कृते शोको न भवेन्नृप तच्छृणु ॥ २४॥

[1]यथा तु मां न जानन्ति तत् करिष्याम्यहं विभो ।
छन्ना वत्स्याम्यहं [2]यन्मां न विज्ञास्यन्ति केचन ॥ २५॥

वृत्तं [3]तच्च समाख्यास्ये शमाप्नुहि विशाम्पते ।
सैरन्ध्रीजातिसम्पन्ना नाम्नाऽहं व्रतचारिणी ॥ २६॥

[4]सैरन्ध्र्यो रक्षितास्त्रीणां भुजिष्यास्सन्ति भारत ।
एकपत्न्यस्स्त्रियश्चैता इति लोकस्य निश्चयः ॥ २७॥

साऽहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि ।
[5]नाऽहं तव भविष्यामि दुर्भरा राजवेश्मनि ॥ २८॥

कृता चैव सदा रक्षा व्रतेनैव नराधिप ।

---

1. क-म—तेषां तथाज्ञानां च । ख-ङ—तेषां तु मनुजानां यत् ।
2. क-म—राजन् । घ—यथात् ।
3. क-घ-ङ—तस्य ।
4. क-ख-ङ-च—भविष्यति महाराज विराटस्येति मे मतिः ।
[अधिकः पाठः]
5. क-ख-घ-ङ-च-म—प्रमदाहारिका लोके पुरुषाणां प्रवासिनाम् ।
[अधिकः पाठः]

सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ॥ २९॥
सा रक्षिष्यति मां प्राप्तां मा ते भूद्दुःखमीदृशम् ।
अनुगुप्ता चरिष्यामि यन्मां त्वमनुपृच्छसि ॥ ३०॥

[1]युधिष्ठिरः—
[2]कल्याणं भाषसे कृष्णे यथा कौलेयकी तथा ।
न पापमनवद्याङ्गी भाषसे चारुहासिनी ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

॥ ४५ ॥ वैराटपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये ३१॥ श्लोकाः]

---

## ॥ पञ्चमोऽध्यायः ॥

पाण्डवैरिन्द्रसेनादीन् प्रति द्वारकादिगमनचोदना ॥ १ ॥ पाण्डवान् प्रति धौम्येन राजगृहवासप्रकारानुशासनम् ॥ २ ॥

---

युधिष्ठिरः—
कर्माण्युक्तानि युष्माभिर् यानि तानि चरिष्यथ ।
मम चापि यथा बुद्धिर् उचिता हि विनिश्चयात् ॥ १
पुरोहितोऽयमस्माकम् अग्निहोत्राणि रक्षतु ।
सूदाः पौरोगवैस्सार्धं द्रुपदस्य निवेशने ॥ २

---

1. ख—इत्येतन्मत्प्रतिज्ञातं यन्मां त्वं परिपृच्छसि । [अधिकः पाठः]
2. म—इत्येवं मत्प्रतिज्ञातं विहरिष्याम्यहं यथा । [अधिकः पाठः]

इन्द्रसेनमुखाश्चैते रथानादाय केवलान् ।
यान्तु द्वारवतीं शीघ्रम् इति मे वर्तते मतिः ॥ ३
इमाश्च नार्यो द्रौपद्यास् सर्वतः परिचारिकाः ।
पाञ्चालानेव गच्छन्तु सूदाः पौरोगवैस्सह ॥ ४
सर्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः ।
गता ह्यस्मानपाहाय सर्वे द्वैतवनादिति ॥ ५

वैशम्पायनः—

तानन्वशासद् धर्मात्मा सर्वधर्मविशेषवित् ।
[1]धौम्यः पुरोहितो राजन् पाण्डवान् पुरुषर्षभान् ॥ ६

धौम्यः—

[2]विदिते चापि वक्तव्या सुहृद्भिरनुरागतः ।
अतोऽहमपि वक्ष्यामि हेतुमात्रं निबोधत ॥ ७
हन्तेमां राजवसतिं राजपुत्रा ब्रवीमि वः ।
यथा राजकुलं प्राप्य चरन् प्रेष्यो [3]भविष्यति ॥ ८
दुर्वासं चैव कर्तव्यं जातेन कुरुवेश्मनि ।
अमानितेन मानार्हे गूढेन परिवत्सरम् ॥ ९

---

1. अ-ब-छ-च—कोशेषु इदमर्धं नास्ति ।
2. म—विदिते चापि वक्तव्यं ब्राह्मणेषु सुहृत्सु च ।
यानेषु वाहने चैव तथैवाग्निषु भारत ॥
त्वया रक्षा विधातव्या कृष्णायाः फल्गुनेन च ॥ [अधिकः पाठः]
3. क-ब—न दुष्यति। ख-च—न रिष्यति।

पाण्डवाग्निरयं लोके सर्वशस्त्रमयो महान् ।
भर्ता गोप्ता च भूतानां राजा पुरुषविग्रहः ॥ १०

सर्वात्मना वर्तमानं यथा दोषो न संस्पृशेत् ।
राजानमुपजीवन्तं तस्य [1]वृत्तिं निबोधत ॥ ११

नातिवर्तेत मर्यादां पुरुषो राजसम्मतः ।
व्यवहारं पुनर्लोके मर्यादां पण्डिता विदुः ॥ १२

न हि पुत्रं न नप्तारं न भ्रातर[2]मरिन्दम ।
समतिक्रान्तमर्यादं पूजयन्ति नराधिपाः ॥ १३

गच्छन्नपि परां [3]भूमिं भूमिपालनियोजितः ।
जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ॥ १४

धृष्टो द्वारं सदा पश्येन्न च राजसु विश्वसेत् ।
तदेवासनमन्विच्छेद् यत्र नाभिलषेत् परः ॥ १५

यत्रोपविष्टस्सङ्कल्पं नोपहन्या[4]द्बलीयसाम् ।
तदासनं राजकुले ईप्सेत पुरुषो वसन् ॥ १६

यथैनं यत्र चासीनं शङ्केरन् दुष्टचारिणः ।
न तत्रोपविशेज्जातु यो राजवसतिं वसेत् ॥ १७

स्वभूमौ काममासीत तिष्ठेद्वा राजसन्निधौ ।

---

1. क-च—वृत्तं ।　　2. क-च-म—मरिन्दमाः
3. क-ख-च—भूतिं ।　　4. क-ख-च-ङ-म—बलीयसः ।

न त्वेवासनमन्यस्य प्रार्थयेत कदाचन ॥ १८

परासनगतं ह्येनं परस्य परिचारकाः ।

[1]परिषद्यपकर्षेयुः परिहास्येत शत्रुभिः ॥ १९

नित्यं विप्रतिषिद्धं तु पुरस्तादासनं मतम् ॥ १९॥

अर्थार्थं हि यदा भृत्यो राजानमुपतिष्ठते ॥ २०

दक्षिणं वाऽपि वामं वा [2]भागमाश्रित्य पण्डितः ।

तिष्ठेद्विनीतवद्राजन् न पुरस्तान्न पृष्ठतः ॥ २१

रक्षिणामात्तशस्त्राणां पश्चात्स्थानं विधीयते ॥ २१॥

मातृगोत्रे स्वगोत्रे वा नाम्ना शीलेन वा पुनः ।

सङ्ग्रहार्थं मनुष्याणां नित्यमाभाषिता भवेत् ॥ २२॥

पूज्यमानोऽपि यो राज्ञा [3]नरान् न प्रतिपूजयेत् ।

[4]नैतमाराधयेज्जातु शास्ता शिष्यानिवालसान् ॥ २३॥

नास्य युग्यं न पर्यङ्कं नासनं न रथं तथा ।

आरोहेत् सान्त्वितोऽस्मीति यो राजवसतिं वसेत् ॥ २४॥

यो वै गृहेभ्यः प्रवसन् क्रियमाणमनुस्मरेत् ।

उत्थाने नित्यसङ्कल्पो निस्तन्द्रीस्संयतात्मवान् ॥ २५॥

---

1. घ—पदं तस्यापकर्षेयु रपहास्येत। अ—प्रतिपद्यापकर्षेयुः।
2. क-ख-घ-म—बाहु।
3. क—नरो न। ख-घ-ङ— न चैनं।
4. क—नैनमाराधयिष्यन्ति। ख-घ-ङ-च-म—नैन।

परीतः क्षुत्पिपासाभ्यां विहाय परिदेवनम् ।
दुःखेन सुखमन्विच्छेद् यो राजवसतिं वसेत् ॥ २६॥

अन्येषु प्रेष्यमाणेषु पुरस्ताद्धीर उत्पतेत् ।
करिष्याम्यहमित्येवं यस्स राजसु सिद्ध्यति ॥ २७॥

उष्णे वा यदि वा शीते रात्रौ वा यदि वा दिवा ।
आदिष्टो न विकल्पेत यस्स राजसु सिद्ध्यति ॥ २८॥

[1]नैव प्राप्तोऽवमन्येत सदा मर्त्यो विशारदः ।
मानं प्राप्तो न हृष्येत न व्यथेच्च विमानितः ॥ २९॥

ऋजुर्मृदुस्सत्यवादी यस्स राजसु सिद्ध्यति ॥ ३०

नैव लाभाद्धर्षमियान्न व्यथेच्च विमानितः ।
समः पूर्णतुलेव स्याद् यो राजवसतिं वसेत् ॥ ३१

अल्पेच्छो [2]धृतिमान् राज्ञश् छायेवा[3]नपगस्सदा ।
दक्षः प्रदक्षिणो धीरो यो राजवसतिं वसेत् ॥ ३२

[4]इतिहासपुराणज्ञः कुशलस्सत्कथासु च ।
वदान्यस्सत्यवाक् चापि यो राजवसतिं वसेत् ॥ ३३

1. म—कोशे अयं श्लोको नास्ति
2. क-म—मतिमाञ्छ्रीमान्
3. ख-ङ—नुगतः। च—नुपमः।
4. अ-ब—कोशयोः अयं श्लोको नास्ति।

न मिथो भाषितं राज्ञो मनुष्येषु प्रकाशयेत् ।
यं चासूयन्ति राजानः पुरुषं न वदेच्च तम् ॥ ३४

नैषां कर्मसु संयुक्तो धनं किञ्चिदुपस्पृशेत् ।
प्राप्नुयाद्दाददानो हि बन्धं वा वधमेव वा ॥ ३५

तुल्योपस्थितयोः पश्यन् मम चान्यस्य चोभयोः ।
अन्यं पुष्णाति मद्धीनम् इति धीरो न मुह्यति ॥ ३६

श्रेयांसं हि परित्यज्य वैद्यं कर्मणि [1]कर्मणि ।
पापीयांसं प्रकुर्वीरन् शीलमेषां तथाविधम् ॥ ३७

नैषां दारेषु कुर्वीत प्राज्ञो मैत्रीं कथञ्चन ।
रक्षणं तु न सेवेत यो राजवसतिं वसेत् ॥ ३८

यदा ह्यभिसमीक्षेत प्रेष्यं स्त्रीभिस्समागतम् ।
बुद्धिः परिभवेत् तस्य राजा शङ्केत वा पुनः ॥ ३९

शङ्कितस्य पुनस्स्त्रीषु कस्य भृत्यस्य भूमिपः ।
जीवितं साधु मन्येत प्रकृतिस्थो बलात्कृतः ॥ ४०

हर्षवस्तुषु चाप्यत्र वर्तमानेषु केषु चित् ।
नातिगाढं प्रहृष्टस्स्यात् तान्येवास्यानुपूजयेत् ॥ ४१

हर्षाद्धि मन्दः पुरुषस् स्वैरं कुर्वीत वैकृतम् ।
तस्य चान्तःपुरे वृत्तम् ईक्षाङ्कुर्वीत भूमिपः ॥ ४२

---

1. क-म—निश्चितम्

अन्तःपुरगतं ह्येनं स्त्रियः क्लीबाश्च सर्वशः ।
वर्तमानं यथावच्च कुत्सयेयुरसंशयम् ॥ ४३

तस्माद्गम्भीरमात्मानं कृत्वा हर्षं नियम्य च ।
नित्यमन्तःपुरे राज्ञो न वृत्तं कीर्तयेद्बहिः ॥ ४४

यथा हि सुमहामन्त्रो भिद्यमानो हरेत् सुखम् ।
[1]एवमन्तःपुरे वृत्तं श्रूयमाणं बहिर्भवेत् ॥ ४५
या तु वृत्तिरबाह्यानां बाह्यानामपि केवलम् ।
उभयेषां समस्तानां शृणु राजोपजीविनाम् ॥ ४६
न स्त्रियो जातु मन्येत बाह्ये वाऽऽभ्यन्तरेऽपि वा ।

अनुजीविनां नरेन्द्रस्तु सृजेद्धि सुमहद्भयम् ॥ ४७
मत्वाऽस्य प्रियमात्मानं राजरत्नानि राजवत् ।
अराजा राजयोग्यानि नोपयुञ्जीत पण्डितः ॥ ४८
अराजानं हि रत्नानि राजकान्तानि राजवत् ।

[2]भुञ्जानं न नरं राजा तितिक्षेतानुजीविनम् ॥ ४९
तस्मादव्यक्तभोगेन भोक्तव्यं भूतिमिच्छता ।
तुल्यभोगं हि राजा तु भृत्यं कोपेन योजयेत् ॥ ५०

न चापल्येन सम्प्रीतिं राज्ञः कुर्वीत केनचित् ।

---

1. अ-क—कोशयोः इदमर्धं नास्ति ।
2. क-म—अभुञ्जानं हि को राजा

अधिक्षिप्तमनर्थं च द्वेष्यं च परिवर्जयेत् ॥ ५१
एतां हि सेवमानस्य नरसीमां चतुर्विधाम् ।
द्विधा [1]विभिद्यते मूलं राजमूलोपसेविनः ॥ ५२
एतैस्तु विपरीता या नरसीमा नराधिपैः ।
तथा कुर्वीत संसर्गं न विरोधं कथञ्चन ॥ ५३
बन्धुभिश्च नरेन्द्रस्य बलवद्भिश्च मानवैः ।
साधु मन्येत संसर्गं न विरोधं कथञ्चन ॥ ५४
आभ्यां तु नरसीमाभ्यां विरुद्धस्याल्पतेजसः ।
प्रथमं छिद्यते निद्रा द्वितीयं जायते भयम् ॥ ५५
उद्धतानां च यो वेषः कुहकानां च यो भवेत् ।
राजवेषं च विस्पष्टं [2]सेवमानो न वर्धते ॥ ५६
इतराभ्यां तु वेषाभ्यां परिहास्येत बान्धवैः ॥ ५६॥
अपुम्भिश्चैव पुम्भिश्च स्त्रीभिस्त्रीदर्शिभिर्नरैः ।
शक्ये सति न सम्भाषां जातु कुर्वीत कर्हिचित् ॥ ५७॥
प्रतिसम्भाषमाणो ऽपि त्रिभिरेतैरचेतनः ।
श्येनः पेशीमिवादत्ते पुरुषो भूतिमात्मनः ॥ ५८॥
ये तु राज्ञा ह्यसत्कारं लभेरन् [3]कारणार्थिनः ।

1. क—विच्छिद्यते । घ—हि छिद्यते ।
2. म—तान् सर्वान् परिवर्जयेत् ।
3. क—कारणादिव । ङ—कारणानि च ।

तैश्च सामन्तदूतैश्च न [1]संसज्जेत कर्हिचित् ॥ ५९॥
न चान्याचरितां भूमिम् असन्दिष्टो महीपतेः ।
उपसेवेत मेधावी यो राजवसतिं वसेत् ॥ ६०॥
न च सन्दर्शने राज्ञां प्रबन्धमभिसञ्जपेत् ।
अपि चैतद्दरिद्राणां व्यलीकस्थानमुत्तमम् ॥ ६१॥
अर्थकामा च या नारी राजानं स्यादुपस्थिता ।
[2]अनुजीवी तथायुक्तां निध्यायन् [3]दुष्यते च सः ॥ ६२॥
तस्मान्नारीं न निध्यायेत् तथायुक्तां विचक्षणः ॥ ६३
तथा क्षुतं च वातं च निष्ठीवं चाचरेच्छनैः ॥ ६३॥
न नर्मसु हसेज्जातु मूढवृत्तिर्हि सा स्मृता ।
स्मितं तु मृदुपूर्वेण दर्शयीत प्रसादजम् ॥ ६४॥
न चाक्षौ न भुजौ जातु न च वाक्यं समाक्षिपेत् ।
न च तिर्यगवेक्षेत चक्षुर्भ्यां सम्यगाचरेत् ॥ ६५॥
भ्रुकुटिं च न कुर्वीत न चाङ्गुष्ठैर्महीं लिखेत् ।
न च गाढं विजृम्भेत जातु राज्ञस्समीपतः ॥ ६६॥
न प्रशंसेन्न चासूयेत् प्रियेषु च हितेषु च ।
स्तूयमानेषु वा तत्र दूष्यमाणेषु वा पुनः ॥ ६७॥

---

1. क-म—पूज्यमानो मुनिर्भवेत्। ख—न स सज्जेत कर्हिचित्।
2. घ-ङ—अनुजीवितया युक्ता यं यं दूयेत चेतसः।
3. क-म—दूयते नरः। ख—जुषते च सः।

अथ सन्दृश्यमानेषु प्रियेषु च हितेषु च ।
श्रूयमाणेषु वाक्येषु वर्णयेदमृतं यथा ॥ ६८॥
न राज्ञः प्रतिकूलानि सेवमानस्सुखी भवेत् ।
पुत्रो वा यदि वा भ्राता यद्यप्यात्म[1]समो भवेत् ॥ ६९॥
अप्रमत्तो हि राजानं रञ्जयेच्छीलसम्पदा ।
उत्थानेन तु मेधावी शौचेन [2]द्विविधेन तम् ॥ ७०॥
स्नानं हि वस्त्रशुद्धिश्च शारीरं शौचमुच्यते ।
असक्तिः प्राकृतार्थेषु द्वितीयं शौचमुच्यते ॥ ७१॥
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एतैस्स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ७२॥
तस्माद्भक्तो हि युक्तस्सन् सत्यवादी जितेन्द्रियः ।
मेधावी धृतिमान् प्राज्ञस् संश्रयीत महीपतिम् ॥ ७३॥
कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
[3]वर्धमानं स्थितं स्थाने संश्रयीत महीपतिम् ॥ ७४॥
एष वस्समुदाचारस् समुद्दिष्टो यथाविधि ।
यथाऽर्थान् सम्प्रपत्स्यन्ते पार्थ राजोपजीविनः ॥ ७५॥
संवत्सरमिमं तावद् एवंशीला बुभूषत ।

---

1. क-म—समस्सखा
2. क-ङ-च—विविधेन तु । ब—विनयेन च ।
3. च—इतः श्लोकद्वयं नास्ति ।

ततस्स्वविषयं प्राप्य यथाकामं चरिष्यथ ॥ ७६॥

**वैशम्पायनः—**

तं तथेत्यब्रुवन् पार्थाः पितृकल्पं यशस्विनम् ।
प्रहृष्टाश्चाभिवाद्यैनम् उपातिष्ठन् परन्तपाः ॥ ७७॥

[1]तेषां प्रतिष्ठमानानां मन्त्रांश्च ब्राह्मणोऽजपत् ।
[2]भवाय राष्ट्रलाभाय पराय विजयाय च ॥ ७८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ ४५ ॥ वैराटपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ७८॥ श्लोकाः]

---

## ॥ षष्ठोऽध्यायः ॥

---

पाण्डवैर्धौम्यविसर्जनपूर्वक विराटनगरसमीपगमनम् ॥ १ ॥ पाण्डवैर्वनमध्ये श्मशानसंनिहिते शमीवृक्षे स्वायुधनिक्षेपः ॥ २ ॥ तथा स्वेषां साङ्केतिकनामकल्पनेन विराटनगरपरिसरगमनम् ॥ ३ ॥

---

**वैशम्पायनः—**

तेऽग्निं प्रदक्षिणं कृत्वा ब्राह्मणं च पुरोहितम् ।
अभिवाद्य ततस्सर्वे [3]प्रस्थातुमुपचक्रमुः ॥ १

---

1. क-म—सर्वविघ्नप्रशमनान् अर्थसिद्धिकरांस्तथा । [अधिकःपाठः]
2. क—स्वद्रव्यप्रतिलाभाय शत्रूणां मर्दनाय च ।
स्वस्ति वोऽस्तु शिवं चास्तु द्रक्ष्यामि पुनरागतान् ॥
[अधिकः पाठः]
3. क—प्राव्रजन् सह कृष्णया ।

युधिष्ठिरः—

अनुशिष्टोऽस्मि भद्रं ते नैतद्वक्ताऽस्ति कश्चन ।
कुन्तीमृते मातरं नः [1]पितरं च यशस्विनम् ॥ २

यदेवानन्तरं कार्यं तद्भवान् [2]कर्तुमर्हति ।
तारणाय तु दुःखस्य प्रस्थानाया[3]भयस्य च ॥ ३

वैशम्पायनः—

तेषां प्रतिष्ठमानानां धौम्यो मन्त्रानथाजपत् ।
सर्वविघ्नप्रशमनान् अर्थसिद्धिकरांस्तथा ॥ ४
ततः पावकमुज्ज्वाल्य मन्त्रहव्यपुरस्कृतम् ॥ ४॥
याज्ञसेनीं पुरस्कृत्य सर्व एव महारथाः ।
प्राद्रवन् सह धौम्येन बद्धशस्त्रा वनाद्वनम् ॥ ५॥
ते वीरा बद्धनिस्त्रिंशा धनुर्बाणकलापिनः ।
अगच्छन् भीमधन्वानः काम्यकाद्यमुनां नदीम् ॥ ६॥
उत्तरेण दशार्णानां पाञ्चालान् दक्षिणेन तु ।
अन्तरेण यकृल्लोम्नश् शूरसेनांश्च पाण्डवाः ॥ ७॥
[4]ते तस्या दक्षिणं तीरम् अन्वगच्छन् पदातयः ।
ततः प्रत्यक्प्रयातास्ते सङ्क्रामन्तो वनाद्वनम् ॥ ८॥

1. क-म—विदुरं च महामतिम् । ख-घ-ङ—पितरं च महीपतिम् ।
2. ख-ङ-म—वक्तु
3. क-ख-ग—भयाय च । ख-घ-ङ-म—थ भवाय च ।
4. क-म—कालिन्दी

वसाना वनदुर्गेषु रमणीयेषु धन्विनः ।
पल्वलेषु च रम्येषु नदीनां सङ्गमेषु च ॥ ९॥

द्रुमान् नानाविधाकारान् नानाविधलताकुलान् ।
कुसुमाढ्यान् मनःकान्तान् शुभगन्धान् मनोरमान् ॥ १०॥

[1]पार्थो निरीक्षमाणाश्च तान् द्रुमान् पुष्पशालिनः ।
जिघ्रन्तः पुष्पगन्धांश्च सुसुगन्धान् मनोरमान् ॥ ११॥

विध्यन्तो मृगजातानि महेष्वासा महाबलाः ।
उषित्वा द्वादश समा वने परपुरञ्जयाः ॥ १२॥

वेदं ब्रुवाणा मात्स्यस्य विषयं प्राविशंस्तदा ॥ १३

तत्र धौम्यं महात्मानं पाण्डवेया व्यसर्जयन् ।
अग्निहोत्रं परिचरन् सोऽबुद्धोऽवसदाश्रमे ॥ १४

ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत् ॥ १४॥

द्रौपदी—

पश्यैकपद्यो दृश्यन्ते क्षेत्रे गोष्ठं समावृताः । •
वृक्षांश्चोपवनोपेतान् ग्रामाणां नगरस्य च ॥ १५॥

व्यक्तं दूरे विराटस्य राजधानी भविष्यति ।
वसामेहापरां रात्रिं बलवान् मे परिश्रमः ॥ १६॥

युधिष्ठिरः—

इमां कमलपत्राक्षीं द्रौपदीं माद्रिनन्दन ।

---

1. अ-क—कोशयोरयं श्लोको नास्ति ।

[1]बाहुभ्यां परिगृह्यैनां मुहूर्तं नकुल व्रज ॥ १७॥

[2]ततोऽदूरे विराटस्य नगरं भरतर्षभ ।
राजधान्यां निवत्स्यामस् सुमुक्तमिव नो वनम् ॥ १८॥

नकुलः—

पूर्वाह्णे मृगयां गत्वा [3]वने विद्धा महामृगाः ।
अटवी च मया दूरं सृता मृगवधेप्सुना ॥ १९॥

विषमा ह्यतिदुर्गा च वेगवत् परिधावता ।
सोऽहं घर्माभितप्तो वै नैनामादातुमुत्सहे ॥ २०॥

युधिष्ठिरः—

सहदेव त्वमादाय मुहूर्तं द्रौपदीं नय ।
राजधान्यां निवत्स्यामस् सुमुक्तमिव नो वनम् ॥ २१॥

सहदेवः—

अहमप्यस्मि तृषितः क्षुधया च प्रपीडितः ।
[4]परिश्रान्तश्च भद्रं ते नैनामादातुमुत्सहे ॥ २२॥

युधिष्ठिरः—

एहि वीर विशालाक्ष वीरसिंह इवार्जुन ॥ २३

1. क—बाहुभ्यां नकुलादाय मुहूर्तं द्रौपदीं नय ।
ख-ग-ङ-च-म—मुहूर्तं परिगृह्यैनां बाहुभ्यां नकुलोद्वह ।
2. क-ग—इतो
3. ख—मया विद्राविता मृगाः । घ-ङ-च-म—मया विद्धा वने मृगाः।
4. क-ख-ग-म—श्रान्तो घर्माभितप्तो वै

इमां कमलपत्राक्षीं द्रौपदीं द्रुपदात्मजाम् ।
परिगृह्य मुहूर्तं त्वं बाहुभ्यां कुशलं व्रज ॥ २४
राजधान्यां निवत्स्यामस् सुमुक्तामिव नो वनम् ॥ २४॥

वैशम्पायनः—

गुरोर्वचनमाज्ञाय सम्प्रहृष्टो धनञ्जयः ।
तामादायार्जुनः पार्थो द्रौपदीं हस्तिराडिव ॥ २५॥
प्रवव्राज महाबाहुर् अर्जुनः [1]प्रियदर्शनः ॥ २६
जटिलो वल्कलधरश् शरतूणीधनुर्धरः ।
स्कन्धे कृत्वा वरारोहां बालामायतलोचनाम् ॥ २७
आनीय नगराभ्याशम् अवातारयदर्जुनः* ॥ २७॥
स राजधानीं सम्प्राप्य पार्थिवोऽर्जुनमब्रवीत् ॥ २८

युधिष्ठिरः—

इमानि पुरुषव्याघ्र आयुधानि परन्तप ।
कस्मिन् न्यासयितव्यानि गुप्तिश्चैषां कथं भवेत् ॥ २९
सायुधा हि वयं तात प्रवेक्ष्यामः पुरं यदि ।
समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥ ३०

1. क-च-म—प्रियदर्शनम् । घ—परवीरहा
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

गाण्डीवं हि नरव्याघ्र त्रिषु लोकेषु विश्रुतम् ।
कथं नाविष्कृतास्स्यामो धार्तराष्ट्रस्य मारिष ॥ ३१

यदीदं धनुरादाय चरेम सजने पुरे ।
क्षिप्रं नः प्रतिजानीयुर् मनुष्या नात्र संशयः ॥ ३२

एकस्मिन्नपि विज्ञाते समयं नो व्यतीत्य च ।
भूयो द्वादश वर्षाणि प्रविशेम वनं वयम् ॥ ३३

तस्मात् सर्वाणि शस्त्राणि प्रच्छाद्यान्यत्र यत्र वा ।
प्रविशेम पुरश्रेष्ठं तदा सम्यक् कृतं भवेत् ॥ ३४

वैशम्पायनः—

अजातशत्रोर्वचनं श्रुत्वा चैव महायशाः ।
उवाच धर्मपुत्रं तम् अर्जुनः परवीरहा ॥ ३५

अर्जुनः—

इयं वने मनुष्येन्द्र महती दृश्यते शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ ३६

उत्पथे चापि जातेयम् अमनुष्यनिषेविते ।
न चास्यां [1]सञ्चरिष्यन्ति मनुष्याः पार्थ केचन ॥ ३७

धनुर्भिः पुरुषं कृत्वा चर्मकेशास्थिसंवृतम् ।
उद्बन्धमिव कृत्वा च धनुर्ज्यापाशसंवृतम् ॥ ३८
अस्यामायुधमासज्य गच्छाम नगरं वयम् ॥ ३८॥

1. क—च चरिष्यन्ति । घ-च-भ—चारयिष्यन्ति।

एवं परिहरिष्यन्ति मनुष्या वनचारिणः ।
एवमत्र यथाजोषं विहराम यथासुखम् ॥ ३९॥
अत्रैवं नावबुध्यन्ते मनुष्याः केचिदायुधम् ॥ ४०

वैशम्पायनः—

एवमुक्त्वा स राजानं धर्मात्मानं धनञ्जयः ।
प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ॥ ४१
तानि सर्वाणि सन्नह्य पञ्च पञ्चाचलोपमाः ।
आयुधानि कलापांश्च [1]निस्त्रिंशांश्चातुलप्रभान् ॥ ४२
[2]येन देवान् मनुष्यांश्च पिशाचोरगराक्षसान् ।
निवातकवचांश्चापि पौलोमांश्च परन्तपः ॥ ४३
कालकेयांश्च दुर्धर्षान् सर्वांश्चैकरथोऽजयत् ॥ ४३॥
स्फीताञ्जनपदांश्चान्यान् अजयत् कुरुनन्दनः ॥ ४४
[3]एतदुग्रं महाघोरं सपत्नगणसूदनम् ।
[4]विज्यं समकरोत् पार्थो गाण्डीवमभयङ्करम् ॥ ४५

---

1. क-म—निस्त्रिंशांश्चानलोपमान्
2. ख—ततो युधिष्ठिरो राजा सहदेवमुवाच ह ।
आरुह्येमां शमीं वीर निधत्स्वेहायुधानि नः ।
इति सन्दिश्य तं पार्थः पुनरेव धनञ्जयम् ।
अब्रवीदायुधानीह निधातुं भरतर्षभ । [अधिकः पाठः]
3. ख-घ—तमुदग्रं महाघोषम् । ङ—तदुदग्रं ।
4. क-ख-घ-ङ-च-म—असज्य ।

येन वीरः कुरुक्षेत्रम् अभ्यरक्षत् परन्तपः ।
जृम्भिते च धनुःश्रेष्ठे न्यासार्थे नृपसत्तमः ॥ ४६

धर्मपुत्रो महातेजास् सर्वलोक[1]वशङ्करम् ।
भुजङ्गभोगसदृशं मणिकाञ्चनभूषणम् ॥ ४७

वित्रासनं दानवानां राक्षसानां च नित्यशः ।
धनूरत्नं महातेजा जृम्भयामास पाण्डवः ॥ ४८

पाञ्चालान् येन सङ्ग्रामे भीमसेनोऽजयत् प्रभुः ।
प्रत्यषेधद्बहूनेकस् सपत्नांश्चापि दिग्जये ॥ ४९

निशम्य यस्य विष्फारं विद्रवन्ति रणे परे ।
पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव ॥ ५०

सैन्धवं येन राजानं जित्वा क्रुद्धः परामृशत् ।
येन क्रोध[2]वशाज्जघ्ने राक्षसान् गन्धमादने ॥ ५१

दिव्यं सौगन्धिकं पुष्पं येनाजैषीत् स पाण्डवः ।
त्रिगर्तान् येन सङ्ग्रामे जित्वा त्रैगर्तमानयत् ॥ ५२

इन्द्रायुधसमस्पर्शं वज्रहाटकभूषितम् ।
ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत् ॥ ५३

नकुलं पुनराहूय धर्मराजो युधिष्ठिरः ।
उवाच येन सङ्ग्रामे सर्वान् शत्रूञ्जिघांससि ॥ ५४

---

1. क-घ-च-म—वशी। ख—वशंकरः
2. अ-क-ग-ङ-च-म—वशाञ्जघ्ने पर्वते।

सुराष्ट्राञ्जितवान् येन शार्ङ्गगाण्डीवसन्निभम् ।
सुवर्णविकृतं सारम् इन्द्रायुधनिभं वरम् ॥ ५५
तवानुरूपं सुदृढं चापमेतदलङ्कृतम् ।
तत् स्रंसयित्वा ज्यापाशं निधातुं धनुराहर ॥ ५६
[1]अजयत् पश्चिमामाशां धनुषा येन पाण्डवः ।
सुवर्णविकृतं सारम् इन्द्रायुधवरोपमम् ॥ ५७
तत् स्रंसयित्वा ज्यापाशं निधातुं धनुराहरत् ॥ ५७॥
सहदेवं च सम्प्रेक्ष्य पुनर्धर्मसुतोऽब्रवीत् ॥ ५८
कलिङ्गान् दाक्षिणात्यांश्च मगधांश्चापि दिग्जये ।
येनैव शत्रून् समरेष्ववधाक्षीरारिमर्दन ॥ ५९
तत् स्रंसयित्वा ज्यापाशं निधातुं धनुराहर ॥ ५९॥
अजयद्दक्षिणामाशां धनुषा येन पाण्डवः ।
तत् स्रंसयित्वा ज्यापाशं निधातुं धनुराहरत् ॥ ६०॥
दीर्घांश्च खड्गान् सुदृढान् निशितान् कनकत्सरून् ।
विविधान् क्षुरनाराचान् निस्त्रिंशांश्च शरानपि ॥ ६१॥
आयुधानि कलापांश्च गदाश्च विपुलास्तदा ।
तानि सर्वाणि सन्नह्य वासोभिः परिवेष्ट्य च ॥ ६२॥
[2]आरोह यावदेतानि निधातुं विहगैर्वृताम् ।
शमीमारुह्य महतीं निक्षिपाद्यायुधानि नः ॥ ६३॥

1. अ-ख-ङ-च-कोशेषु सार्धश्लोकचतुष्टयं नास्ति ।

स हि धर्मेण धर्मात्मा तथा घोरतरे वने ।
[1]तान्यायुधान्युपादाय [2]प्रोवाच मधुराक्षरम् ॥ ६४॥
[3]युधिष्ठिरश्शुचिर्भूत्वा मनसाऽभिप्रणम्य च ॥ ६५

युधिष्ठिरः—

ब्रह्माणमिन्द्रं वरदं कुबेरं वरुणानिलौ ।
रुद्रं यमं च विष्णुं च सोमार्कौ धर्ममेव च ॥ ६६

पृथिवीमन्तरिक्षं च दिशश्चोपदिशस्तथा ।
वसूंश्च मरुतश्चैव ज्वलनं चातितेजसम् ॥ ६७

दिवाचरा रात्रिचराणि वाऽपि
यानीह भूतान्यनुकीर्तितानि ।
तेभ्यो नमस्कृत्य च सुव्रतेभ्यः
प्रणम्य तेषां शरणं गतोऽहम् ॥ ६८

सर्वायुधानीह महाबलानि
न्यासं महादेवसमीपतो वै ।
न्यस्याम्यहं वायुसमीपतश्च
वनस्पतीनां च [4]सपर्वतानाम् ॥ ६९

---

1. क-ब-ङ-च-म—अरणीपर्वणः काले भरद्वाजः परन्तपः । [अधिकः पाठः]
2. क-ब-ङ-च—कुन्तीपुत्रो युधिष्ठिरः ।
3. क-ब-ङ-च—सुवचः पुरुषव्याघ्रः प्रोवाच मधुराक्षरम् [अधिकः पाठः]
4. अ-ङ—सरित्पतीनाम् ।

एष न्यासो मया [1]न्यस्तस् सूर्यसोमानिलान्तिके ।
मह्यं पार्थाय वा देयं पूर्णे वर्षे त्रयोदशे ॥ ७०

[2]नेदं भीमाय दातव्यम् अयं क्रुद्धो वृकोदरः ॥ ७०॥

अमर्षान्नित्यसङ्क्रुद्धो धृतराष्ट्रसुतान् प्रति ।
अपूर्णकाले प्रहरेत् क्रोधसञ्जातमत्सरः ॥ ७१॥

पुनः प्रवेशो नस्स्यात् तु वनवासाय सर्वदा ॥ ७२
समये परिपूर्णे तु धार्तराष्ट्रान् निहन्महि ॥ ७२॥

एष पार्थश्च धर्मश्च कामः कीर्तिः कुलं यशः ।
ममायत्तमिदं सर्वं [3]जीवितं च न संशयः ॥ ७३॥

वैशम्पायनः—

सोऽवतीर्य महाप्राज्ञः पाण्डवस्सत्यविक्रमः ।
भीमं कण्ठे परिष्वज्य चानुनीय नराधिपः ॥ ७४॥

दैवतेभ्यो नमस्कृत्य शमीं कृत्वा प्रदक्षिणम् ।
नगरं गन्तुमायातास् सर्वे ते भ्रातरस्सह ॥ ७५॥

आगोपालाविपालेभ्यः कर्षकेभ्यः परन्तपाः ।
आजग्मुर्नगराभ्याशं श्रावयन्तः पुनः पुनः ॥ ७६॥

---

1. क-ङ-म—दत्तस्

2. ख-घ—नैते भीमे अदातव्या महाक्रोधो।
क-ङ-च-म—नेदं भीमे प्र। 3. अ—विदितं

अशीतिशतवर्षेयं माताऽस्माकमिहान्तिके ।
[1]हन्त कालपरीणामा मृत्योस्तु वशमेयुषी ॥ ७७॥

न चाग्निसंस्कारमियं प्रापिता कुलधर्मतः ॥ ७८

यस्समासाद्यते कश्चित् तस्मिन् देशे यदृच्छया ।
अचिरात् तस्य मरणं भविष्यति न संशयः ॥ ७९

[2]तदैवमूचु[3]स्ते तत्र कुलधर्मो न ईदृशः ॥ ७९॥
अथाब्रवीद्धर्मराजस् सहदेवं परन्तपः ॥ ८०

युधिष्ठिरः—

इदं गोमृगमभ्याशे गतसत्त्वमचेतनम् ।
एतदुत्कृत्य वै वीर धनूंषि परिवेष्टय ॥ ८१

वैशम्पायनः—

एवमुक्तो महाबाहुस् सहदेवो यथोक्तवत् ।
शमीमारुह्य त्वरितो धनूंषि परिवेष्टयन् ॥ ८२

शीतवातातपभयाद् वर्षत्राणाय दुर्जयः ।
तानि वीरो [4]यथा चक्रे निरासाद्यानि सर्वशः ॥ ८३

---

1. क—मृता। ख-घ-ङ—हृह काले । च-म—बहु
2. घ-ङ-च-म—तमेवमूचु
3. क-ख-घ-ङ—धर्मज्ञाः।
4. क-ख-ङ-च-म—यदा जानाबिराबाधानि सर्वशः।
   घ—महाराज निराबाधानि सर्वशः।

पुनः पुन[1]स्स सम्प्रेक्ष्य कृत्वा सुदृढमग्रतः ॥ ८४
अथापरमदूरस्थम् उञ्छघृत्तिकलेबरम् ।
प्रायोपवेशादुच्छुष्कं स्नायुधर्मास्थिसंयुतम् ॥ ८५
तत्रानीय धनुर्मध्ये [2]विनिबद्ध्य च पाण्डवाः ।
उपायकुशलास्सर्वे सप्रहासमथाब्रुवन् ॥ ८६
[3]अस्य बद्धस्य दौर्गन्ध्यान्मनुष्या वनचारिणः ।
दूरात् परिहरिष्यन्ति [4]ससत्त्वेयं शमीति ह ॥ ८७
अथाब्रवीन्महाराजो धर्मात्मा स युधिष्ठिरः ॥ ८७॥

युधिष्ठिरः—

रज्जुभिस्सुकृतं प्राज्ञ विनिर्बध्नीहि पाण्डव ॥ ८८
[5]यानि चात्र विशालानि रूढमूलानि मन्यसे ।
तेषामुपरि बध्नीहि इदं विप्रकलेबरम् ॥ ८९

वैशम्पायनः—

विश्रावयन्तस्ते सर्वे दिशस्सर्वा व्यनादयन् ।
स्वर्गतेयमिहास्माकं जननी शोकविह्वला ॥ ९०
वने विचरमाणानां लुब्धानां वनचारिणाम् ।

---

1. ख-घ-ङ—स्सुसंवेष्ट्य कृत्वा सुकृतमापतत् ।
2. अ—विनिपीड्य च । च—निबबन्धुश्च । म—विनिबन्धुश्च ।
3. ल-ङ—अस्य गन्धस्य । घ—अस्य देहस्य दुर्गन्धं ।
4. क-ख-च—सशवेयं शमी इति । च—सवेष्टेयं शमी इति ।
5. ख-घ—कोशयोः अयं श्लोको नास्ति ।

कुलधर्मोऽयमस्माकं पूर्वैराचरितः पुरा ॥ ९१
एवं ते समयं कृत्वा समन्तादवघुष्य च ।
भीमसेनार्जुनौ चैव माद्रीपुत्रावुभावपि ॥ ९२
युधिष्ठिरश्च कृष्णा च राजपुत्री सुमध्यमा ।
ततो यथासमाज्ञप्तं नगरं प्राविशंस्तदा ॥ ९३
मत्स्यराज्ञो विराटस्य समीपं वस्तुमञ्जसा ।
अज्ञातचर्यां चरितुं वर्षं राष्ट्रे त्रयोदशम् ॥ ९४
अतश्छन्नानि नामानि चकारैषां युधिष्ठिरः ।
जयो जयेशो विजयो जयत्सेनो जयद्बलः[1] ॥ ९५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ ४५ ॥ वैराटशपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ९५ श्लोकाः]

## ॥ सप्तमोऽध्यायः ॥

युधिष्ठिरेण यतिवेषपरिग्रहेण विराटसभाप्रवेशः ॥ १ ॥ प्रत्युत्थानादिना सत्कृतेन युधिष्ठिरेण विराटभवने निवासः ॥ २ ॥

वैशम्पायनः—

ततस्तु ते [2]पुण्यतमां शिवां शुभां
महर्षिगन्धर्वनिषेवितोदकाम् ।

---

1. म—आपत्सु नामभिस्त्वेतैस् समाहूताः परस्परम् । [अधिकः पाठः]
2. क-ङ—पुण्यजलां ।

त्रिलोककान्तामवतीर्य जाह्नवीम्
ऋषींश्च देवांश्च पितॄनतर्पयन् ॥ १

वरप्रदानं ह्यनुचिन्त्य पार्थिवो
हुताग्निहोत्रः कृतजप्यमङ्गलः ।
दिशं तथैन्द्रीमभितः प्रपेदिवान्
कृताञ्जलिर्धर्ममुपाह्वयच्छनैः ॥ २

युधिष्ठिरः—

वरप्रदानं मम दत्तवान् पिता
प्रसन्नचेता वरदः प्रजापतिः ।
जलार्थिनो मे तृषितस्य सोदरा
मया प्रयुक्ता विविशुर्जलाशयम् ॥ ३

निपातिता यक्षवरेण ते वने
महाहवे वज्रभृतेव दानवाः ।
मया च गत्वा वरदो हि तोषितो
विवक्षता प्रश्नसमुच्चयं गुरुः ॥ ४

स मे प्रसन्नो भगवान् वरं ददौ
परिष्वजंश्चाह तथैव सौहृदात् ।
वृणीष्व यद्वाञ्छसि पाण्डुनन्दन
स्थितोऽन्तरिक्षे वरदोऽस्मि पश्य माम् ॥ ५

स वै मयोक्तो वरदः पिता प्रभुस्
सदैव मे धर्मरता मतिर्भवेत् ।
इमे च जीवन्तु ममानुजाः प्रभो
[1]वयश्च रूपं च बलं तथाऽऽप्नुयुः ॥ ६

क्षमा च कीर्तिश्च [2]तथेष्टतो भवेद्
व्रतस्य सत्यस्य समाप्तिरेव च ।
वरो [3]मयैषोऽस्तु यथा तु कीर्तितो
न तन्मृषा देववरो यथाऽब्रवीत् ॥ ७

वैशम्पायनः—
[4]इत्येवमुक्त्वा धर्मात्मा धर्ममेवानुचिन्तयन् ।
तदैव तत्प्रसादेन रूपमेवाभजत् स्वकम् ॥ ८

स वै द्विजातिस्तरुणस्त्रिदण्डभृत्
कमण्डलूष्णीषधरो व्यजायत ।
सुरक्तमाञ्जिष्ठवराम्बराङ्गिशखी
पवित्रपाणिर्ददृशे तदाऽद्भुतम् ॥ ९

1. ख—वयं च रूपं च तथाऽऽप्नुमो बलम् ।
च—वयश्च रूपं च जयं च
2. अ-ङ-च—यथेष्टतो भवेद्व्रतं च सत्यं च समाप्तिरेव च ।
क—यथेष्टतो भवेद्धृतिश्च सत्येन ।
म—यथेष्टतो भवेद्धृतिश्च सत्यं च
3. क-ख-ङ-म—ममैषोऽस्तु यथा तु
4. च-म—कोशयोः नास्त्ययं श्लोकः

तथैव तेषामपि धर्मचारिणां
[1]यथोचिताहाभरणाम्बरस्रजः ।
क्षणेन राजन्नभवन्महात्मनां
प्रशस्तधर्माग्र्यफलाभिकाङ्क्षिणाम् ॥ १०

[2]नवेन रूपेण विशाम्पतिर्वृतस्
स्वधर्मरूपेण बभौ प्रतापवान् ।
निबद्धवैडूर्यसितान् सकाञ्चनान्
नृपस्तथाऽक्षान् परिवेष्ट्य वाससा ॥ ११

ततो विराटं प्रथमं युधिष्ठिरो
ददर्श दूरात् सुसमृद्धतेजसम् ।
अनन्ततेजोज्वलितं हुताशनं
दुरासदं तीक्ष्णविषं यथोरगम् ॥ १२

सभागतं प्राञ्जलिभिर्जनैर्वृतं
विचित्रनानाविधशस्त्रपाणिभिः ।
उपायनौघैः प्रविशद्भिराचितं
द्विजैश्च शिक्षाक्षरमन्त्रधारिभिः ॥ १३

---

गजैरुदीर्णैस्तुरगैश्च सङ्कुलं
मृगाद्विपैः कुब्जगणैस्समावृतम् ।

1. क-ख-घ-ङ-म—यथेप्सिताह्याभरणा । 2. ञ-नतेन

सितोच्छ्रितोष्णीषनिरुद्धमूर्धजं
विचित्रवैडूर्यविकारकुण्डलम् ॥ १४

विराटमा[1]याच्च युधिष्ठिरस्तदा
बृहस्पतिश्शक्रमिव त्रिविष्टपे ॥ १४॥

तमाव्रजन्तं प्रसमीक्ष्य पाण्डवं
विराटराजो मुदितेन चक्षुषा ।
पप्रच्छ चैनं स नराधिपो मुहुर्
[2]द्विजाश्च ये चास्य सभासदस्तदा ॥ १५॥

विराटः—

को वा विजानाति पुराऽस्य दर्शनं
युवा सभां योऽयमुपैति मामिकाम् ।
[3]रूपेण सारेण विदारयन् महीं
श्रिया ह्ययं वैश्रवणो द्विजो यथा ॥ १६॥

मृगेन्द्रराड्वारणयूथपोपमः
प्रभात्ययं काञ्चनपर्वतो यथा ।
[4]विराजते पावकसूर्यसन्निभस्
सचन्द्रनक्षत्र इवांशुमान् ग्रहः ॥ १७॥

---

1. ञ-ङ—साद्य।  घ—नर्च।
2. क-ख-ङ-म—द्विजाश्च ये चास्य तदा सभासदः।
3. ख-च—पद्मा गजेनेव।  4. ख-घ-ङ—विरोचते।

न दृश्यतेऽस्यानुचरो न कुञ्जरो
न चोष्णरश्म्यावरणं समुच्छ्रितम् ।
न [1]कुण्डलं नाङ्गदमस्य न स्रजो
विचित्रिताङ्गश्च रथश्चतुर्युजः ॥ १८॥
क्षात्रं च रूपं हि बिभर्त्ययं भृशं
गजेन्द्रशार्दूलमहर्षभोपमः ।
अभ्यागतोऽस्माननलङ्कृतोऽपि सन्
[2]विराजते भानुरिवाचिरोदयः ॥ १९॥

वैशम्पायनः—
विभात्ययं क्षत्रिय एव सर्वथा
विराट इत्येवमुवाच तं प्रति ॥ २०

विराटः—
ससागरान्तामयमद्य मेदिनीं
प्रशासितुं चार्हति वासवोपमः ॥ २०॥
नाक्षत्रियो नूनमयं भविष्यति
मूर्धाभिषिक्तः प्रतिभाति मां प्रति ।
तुल्यं हि रूपं प्रतिदृश्यतेऽस्य
व्याघ्रस्य सिंहस्य तथर्षभस्य ॥ २१॥
यदेष कामं परिमार्गते द्विजस्
[3]तदस्य सर्वं क्रियतामसंशयम् ।

1. क-म—कुण्डले
2. क-ख-घ-ङ-च-म—विरोचते भानुरिवाचिरोदितः ।
3. ख—स चास्य सर्वः

प्रियं च मे दर्शनमीदृशे जने
द्विजेषु मुख्येषु तथाऽतिथिष्वपि ॥ २२॥

धनेषु रत्नेष्वथ गोषु वेश्मसु
प्रकामतो मे विचरत्ववारितः ॥ २३

वैशम्पायनः—

एवं ब्रुवाणस्तमनन्ततेजसं
विराजमानं सहसोत्थितो नृपः ।
[1]अन्येन रूपेण समीपमागतं
त्रिदण्डकुण्ड्यङ्कुशशिक्यधारिणम् ॥ २४

समुत्थिता सा च सभा सपार्थिवा
सविप्रराजन्यविशा सशूद्रका ।
सभागतं प्रेक्ष्य तपन्त[2]मर्चिषा
विनिस्सृतं राहुमुखाद्यथा रविम् ॥ २५

स तेन पूर्वं [3]जयताद्भवानिति
द्विजातिनोक्तोऽ[4]भिमुखं कृताञ्जलिः ।
जयं जयार्हेण समेत्य वर्धितो
विराटराजो ह्यभिवादयच्च तम् ॥ २६

---

1. क-ङ—अनेन। 2. अ-ङ-च—मर्चिषा
3. क-ख-ग-च-म—जयतां। 4. क-ख-ग-म—ऽभिमुखः

तमब्रवीत् प्राञ्जलि[1]रेव पार्थिवो
विराटराजो मधुराक्षरं वचः ॥ २६॥

विराटः—

प्राप्तः कुतस्त्वं भगवन् किमिच्छसि
क [2]वास्यसे किं करवाणि ते द्विज ॥ २७

श्रुतं च शीलं च कुलं च शंस मे
गोत्रं तथा नाम च देशमेव ते ।
सत्यप्रतिज्ञा हि भवन्ति साधवो
विशेषतः प्रव्रजिता द्विजातयः ॥ २८

[3]यथानुरूपं प्रचरामि ते त्वहं
न चावमन्ता [4]च शुभाभिभाषिता ।
अपूजिता ह्यग्निसमा द्विजातयः
कुलं दहेयुस्सविषा इवोरगाः ॥ २९

सर्वां च भूमिं तव दातुमुत्सहे
सदण्डकोशं विसृजामि ते पुरम् ।

---

1. अ-ङ—दैव । 2. घ—वास्यते ।
3. अ-क-ख-ङ—तवानुरूपं ।
4. क-म—हि श्रुताभिभाषितः ।
घ—न चावमन्ताऽस्मि तवाभिभाषितम् ।
ख-ध—न तवाभिभाविता

[1]कस्यासि राज्ञो विषयादिहागतः
किं कर्म चात्राचरसि द्विजोत्तम ॥ ३०

वैशम्पायनः—

एवं ब्रुवाणं तमुवाच [2]पार्थिवो
युधिष्ठिरो धर्ममवेक्ष्य चासकृत् ॥ ३०॥

युधिष्ठिरः—

सत्यं वचः को न्विह वक्तुमुत्सहेद्
यथाप्रतिज्ञं तु शृणुष्व पार्थिव ।
श्रुतं च शीलं च कुलं च कर्म च
शृणुष्व मे जन्म च देशमेव च ॥ ३१॥

गुरूपदेशा[3]न्नियमं दृढव्रतं
कुल[4]क्षमार्थं पितृभिर्नियोजितम् ।
द्विजो व्रतेनास्मि न च द्विजः प्रभो
सुमुण्डितः प्रव्रजितस्त्रिदण्डभृत् ॥ ३२॥

इदं शरीरं मम पश्य मानुषं
समावृतं पञ्चभिरेव धातुभिः ।
ममेह पञ्चेन्द्रियगात्रदर्शिनो
वदन्ति पञ्चैव पितॄन् यथाश्रुति ॥ ३३॥

---

1. क—किं चापि कर्मं समुदाचरन् भवान् ।
कस्यासि राज्ञो विषयादिहागतः । [पाठान्तरम्]
2. क—पाण्डवो ।
3. क-च-म—न्नियमाच्च मे । घ—न्नियमाच्च ते । ख—न्नियमाच्चने ? ।
4. ख-च—क्रमार्थं ।

मनुष्यजातित्वमचिन्तयन्नहं
न चास्मि तुल्यः पितृभिस्स्वभावतः ।
कङ्को हि नाम्ना विषयं तवागतो
व्रती द्विजातिस्स्वकृतेन कर्मणा ॥ ३४॥

द्यूतप्रसङ्गा[1]द्वनगोऽस्मि राजन्
सत्यप्रतिज्ञा व्रतिन[2]श्चरामः ।
युधिष्ठिरस्यापि सखाऽभवं पुरा
गृहप्रवेशी च शरीरमेव च ॥ ३५॥

गृहे च तस्योषितवानहं [3]चिरं
राजाऽस्मि तस्य स्व[4]शरीरवान् पुरा ॥ ३६

मदाज्ञया तत्र विचेरुरङ्गना
मम प्रियार्थं दमयन्ति वाजिनः ।
मया कृतं तस्य पुरे तु यत् पुरा
न तत् कदाचित् कृतवाञ्जनोऽन्यथा ॥ ३७

सोऽहं पुरा तस्य वयस्समस्सखा
चरामि सर्वां वसुधां सुदुःखितः ।

---

1. क-च-म—दधनो ।
2. क-ख-घ-म—श्चरामहे ।
3. ख-घ-म—सुखं ।
4. क-ख-घ—पुरेऽभवं पुरा । क—गृहे पुराऽभवम् ।

न वै प्रशान्तिं कश्चिदाप्तवानहं
व्रतोपवेशान्नियमेन [1]हारितः ॥ ३८

वैयाघ्र[2]पद्योऽस्मि नरेन्द्र गोत्रतस्
तदेव सौख्यं मृगयामहे वयम् ।
कृतज्ञभावेन मयाऽनुकीर्तितं
युधिष्ठिरस्यात्मसमस्य चेष्टितम् ॥ ३९

इमं हि मोक्षाश्रममाश्रितस्य मे
युधिष्ठिरस्तुल्यगुणो भवानपि ।
न मेऽ[3]स्ति माता न पिता न बान्धवा
न मेऽस्ति रूपं न रतिर्न सन्ततिः ॥ ४०

सुखं च दुःखं च हि तुल्यमद्य मे
प्रियाप्रिये [4]तुल्यगते गतागते ।
मुक्तोऽस्मि कामाच्च धनाच्च साम्प्रतं
त्वदाश्रये वस्तुमिहाभ्युपागतः ॥ ४१

संवत्सरेणेह समाप्यते त्विदं
मम व्रतं दुष्करकर्मकारिणः ।

---

1. ख—मारितः । घ—हारिकः । म—भारिकः
2. घ—पाद्यो 3. घ—ऽद्य ।
4. क-ग-च—तुल्यगतिः । ख—तुल्यगतागते गते ।

ततो भवन्तं परितोष्य कर्मभिः
पुनर्व्रजिष्यामि कुतूहलं यतः ॥ ४२

अक्षान् [1]निवप्तुं कुशलोऽस्म्यहं सदा
पराजित[2]श्शकुनिरुतानि चिन्तयन् ।
मृगद्विजानां च रुतानि चिन्तयन्
निराश्रयः प्रव्रजितोऽस्मि भिक्षुकः ॥ ४३

वैशम्पायनः—

तेनैवमुक्ते वचने नराधिपः
कृताञ्जलिः प्रव्रजितं समीक्ष्य च ।
अथाब्रवीद्धृष्टमनाश्शुभाक्षरं
मनोनुगं सर्वसभागतं वचः ॥ ४४

विराटः—

ददामि ते हन्त वरं यदीप्सितं
प्रशाधि मत्स्यान् यदि मन्यते भवान् ।
प्रिया हि धूर्ता मम चाक्षकोविदास्
त्वं चापि [3]देवो मम राज्यमर्हसि ॥ ४५

समानयानासनवस्त्रभोजनं
प्रभूतमाल्याभरणानुलेपनम् ।

1. क—निवस्तुं ।　　अ—दिदीव्यन्
2. ख—श्शकुनिरवानि　　घ-ङ—श्शत्रुकृतानि ।
3. क-ख-च—देवोपम ।

स सार्वभौमोपम सर्वदाऽर्हसि
प्रियं हि मन्ये तव नित्यदर्शनम् ॥ ४६

ये त्वाऽभिधावेयुरनर्थपीडिता
द्विजातिमुख्या यदि वेतरे जनाः ।
सर्वाणि कार्याण्यहमर्थितस्त्वया
तेषां करिष्यामि न मेऽत्र संशयः ॥ ४७

ममान्तिके यश्च तवाप्रियं चरेत्
प्रवासये तं प्रविचिन्त्य मानवम् ।
यच्चापि किञ्चिद्वसु विद्यते मम
प्रभुर्भवांस्तस्य [1]वशी वसेह च ॥ ४८

युधिष्ठिरः—

अतोऽभिलाषःपरमो न विद्यते
न मे [2]व्रतं किञ्चन धारये धनम् ।
न भोजनं किञ्चन [3]संस्पृशे त्विह
हविष्यभोजी निशि च क्षितीशयः ॥ ४९

व्रतोपदेशात् समयो हि नैष्ठिको
न क्रोधितव्यं नरदेव कस्यचित् ।

---

1. क—वशी भवेह च । घ—च जीवसे भव । ङ—च जीवितस्य च ।
2. क-ख-म—जितं । ब—धनं ।
3. ख—संस्पृशाम्यहं ।

एवंप्रतिज्ञस्य ममेह भूपते
निवासबुद्धिर्भविता तु नान्यथा ॥ ५०
एवं वरं मात्स्य वृणे [1]प्रदापितं
कृती भविष्यामि वरेण तेन वै ॥ ५०॥

वैशम्पायनः—

एवं तु राज्ञः प्रथमस्समागमो
[2]बभूव मात्स्यस्य युधिष्ठिरस्य च ।
विराटराजस्य हि तेन सङ्गमो
बभूव विष्णोरिव वज्रपाणिना ॥ ५१॥

तमासनस्थं प्रियरूपदर्शनं
निरीक्षमाणो न ततर्प भूमिपः ।
सभां च तां प्रज्वलयन् युधिष्ठिरः
श्रिया यथा शक्र इव त्रिविष्टपम् ॥ ५२॥

एवं स लब्ध्वा नृपतिस्समागमं
विराटराजेन नरर्षभस्तदा ।
उवास वीरः परमार्चितस्सुखी
न चास्य कश्चिच्चरितं बुबोध [3]तत् ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
॥ ४५ ॥ वैराटपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ५३॥ श्लोकाः]

---

1. म—प्रवारितः। ख-ब—प्रपूर्यतां। ब—प्रतारितं
2. म—इदं पादद्वयं नास्ति 3. अ-ब-म—यत

## ॥ अष्टमोऽध्यायः ॥

भीमेन सूदवेषपरिग्रहेण विराटसभाप्रवेशः ॥ १ ॥ विराटेन भीमस्य पाकाधिकारे नियोजनम् ॥ २ ॥

वैशम्पायनः—

अथापरस्यां दिशि भीम[1]विक्रमो
वृकोदरोऽदृश्यत [2]भीमरूपः ।
असिप्रवेशे प्रतिमुच्य शाणके
खजं च दर्वीं च करेण धारयन् ॥ १

त्वचं च गोचर्ममयीं समुक्षितां
सुमर्दितां पानकरागषाडवैः ।
किलासमालम्ब्य करेण पायसं
सशृङ्गबेरार्द्रकभूस्तृणाङ्कुरम् ॥ २

[3]गभीररूपः परमेण तेजसा
रविर्यथा लोकमिमं प्रभासयन् ।
सुकृष्णवासा गिरिराजसारवान्
स मत्स्यराजं समुपेत्य तस्थिवान् ॥ ३

1. क-ख-घ-च-म—दर्शनो । 2. क-ख-ग-च-म—सिंहविक्रमः ।
3. खजं च दर्वीं च करेण धारयन्नसिं च काळ्यसकोशमव्रणम् ॥
[सर्वेषु कोशेषु अधिकः पाठः पुनरुक्तश्च]

सभागतो वारणयूथपोपमस्
तमिस्रहा रात्रिमिवावभासयन् ।
सहस्रनेत्रावरजान्तकोपमस्
त्रिलोकपालाधिपतिर्यथा हरिः ॥ ४

तमाव्रजन्तं गजयूथपोपमं
निरीक्षमाणो नवसूर्यवर्चसम् ।
भयात् [1]समुद्विग्नविषण्णचेतनो
दिशश्च सर्वाः प्रसमीक्ष्य चासकृत् ॥ ५

तमेकवस्त्रं परसैन्यवारणं
सभाऽविदूरान्नृपतिर्नृपात्मजम् ।
समीक्ष्य वैक्लब्यमुपेयिवाञ्शनैर्
जनाश्च भीताः परितः प्रसर्पिरे ॥ ६

अथाब्रवीन्मात्स्यपतिस्सभागतान्
भृशातुरोष्णं परिनिश्वसन्निव ॥ ६॥

विराटः—

कोऽयं युवा वारणराजसन्निभस्
सभामभिप्रैति हि मामिकां [2]शुभाम् ।
को वा विजानाति पुराऽस्य दर्शनं
मृगेन्द्रशार्दूलगतेर्हि मामकः ॥ ७॥

---

1. क—समुद्वीक्ष्य विषण्णलोचनो। म—समुद्विग्नविषण्णलोचनो
2. क-ख-घ—मिमाम्।

व्यूढान्तरांसो मृगराडिवोत्कटो
य एष दिव्यः पुरुषः प्रकाशते ।
राजश्रिया ह्येष विभाति राजवद्
वि[1]राजते रुक्मगिरिप्रभोपमः ॥ ८॥

नाक्षत्रियो नूनमयं भविष्यति
सहस्रनेत्रप्रतिमस्तथा ह्यसौ ॥ ९

रूपेण यश्चाप्रतिमो ह्ययं महान्
महीमिमां शक्र इवाभिपालयेत् ।
नाभूमिपोऽयं हि मतिर्ममेति च
[2]च्युतस्समृद्ध्या नभसीव नाहुषः ॥ १०

वैशम्पायनः—

वितर्कमाणस्य च तस्य पाण्डवस्
सभामतिक्रम्य वृकोदरोऽब्रवीत् ।
जयेति राजानमभिप्रमोदयन्
सुखेन सभ्यं च समागतं जनम् ॥ ११

ततो नृपं वाक्यमुवाच पाण्डवो
यथाऽऽनुपूर्व्यात् कृपयाऽन्वितोत्तरम् ॥ ११॥

---

1. क-ख-घ—रोचते ।
2. घ—च्युतो हि मध्यान्नभसीव ।

भीमः—

त्वां जीवितुं शक्र समागतोऽस्म्यहं
त्वमेव लोके परमो हि संश्रयः ॥ १२॥
नरेन्द्र [1]सूदोऽस्मि चतुर्थवर्णभाग्
गुरूपदेशात् परिचारकर्मकृत् ॥ १३
जानामि सूपांश्च रसांश्च संस्कृतान्
मांसान्यपूपांश्च पचामि शोभनान् ।
शागप्रकारांश्च बहून् फलाश्रयान्
महानसे मे न समोऽस्ति सूपकृत् ॥ १४

वैशम्पायनः—

तमब्रवीन्मत्स्यपतिः प्रहृष्टवत्
प्रियं प्रगल्भं मधुरं विनीतवत् ॥ १४॥

विराटः—

न शूद्रतां काञ्चन लक्षयामि ते
कुबेरचन्द्रेन्द्रदिवाकरप्रभ ॥ १५
हुताशना[2]विष्कृततुल्यतेजसो
न कर्म ते योग्यमिदं महानसे ।
न सूपकारीभवितुं त्वमर्हसि
सुपर्णगन्धर्वमहोरगोपम ॥ १६

1. क-ख-घ-ङ-च-म—शूद्रोऽस्मि ।
2 क-खं-ध-ङ-च-म—वीविष

अनीककर्णाग्रधरो ध्वजी रथी
[1]भवार्य मे वारणवाहिनीपतिः ।
न नीचकर्मा भवितुं त्वमर्हसि
प्रशासितुं भूमिमिमां त्वमर्हसि ॥ १७

भीमः—

चतुर्थवर्णोऽस्म्यहमित्युवाच तं
[2]नान्यं वृणे त्वामहमीदृशं पदम् ।
जात्या [3]हि शूद्रो वललो हि नाम्ना
जिजीविषुस्त्वद्विषयं समागतः ॥ १८

युधिष्ठिरस्यास्मि महानसे पुरा
बभूव सर्वप्रभुरन्नपानदः ।
अथापि मामुत्सृजसे महीपते
व्रजाम्यहं यावदितो यथागतम् ॥ १९

त्वमन्नसंस्कारविधौ प्रशाधि मां
भवामि तेऽहं नरदेव सूपकृत् ।
बलेन तुल्यश्च न विद्यते मया
नियुद्धशीलोऽस्मि सदा हि पार्थिव ॥ २०

---

1. क-ख-ङ-च-म—भवाद्य
2. क-ख-घ-ङ-च-म—न वै
3. क-ख-घ-ङ-च-म—ऽस्मि शूद्रो वललेति

गजांश्च सिंहांश्च समेयिवानहं
सदा करिष्यामि तवानघ प्रियम् ।
न नीचकर्मा तव मादृशः प्रभो
बलस्य नेताऽप्यबलो भवेदिति ॥ २१

स्वकर्मतुष्टाश्च वयं नराधिप
प्रशाधि मां सूदपदे यदीच्छसि ।
ये सन्ति मल्ला बलवीर्यसम्मतास्
तानेव योत्स्यामि तवाभिहर्षयन् ॥ २२

वैशम्पायनः—
तमेवमुक्ते वचने नराधिपः
प्रत्यब्रवीन्मत्स्यपतिः प्रहृष्टवत् ॥ २२॥

विराटः—
एवं न मन्ये तव कर्म [1]कुत्सितं
समुद्रनेमिं पृथिवीं त्वमर्हसि ।
त्रिलोकपालो हि यथा विरोचते
तथाऽद्य मे विष्णुरिवाभिरोचसे ॥ २३॥

यथा तु कामस्तव तत् तथा कृतं
महानसे मे भव वै पुरस्कृतः ।
नराश्च मे तत्र मया सदाऽर्चिता
[2]भवस्व तेषामधिपो मया कृतः ॥ २४॥

---

1. अ-स-घ-ङ-म—तत्समं
2. अ-स-घ-ङ-च-म—भवाद्य

वैशम्पायनः—

तथा स भीमो विहितो महानसे

विराटराजस्य बभूव वै प्रियः ।

उवास राजन् न च तं पृथग्जनो

बुबोध तस्यानुचरश्च कश्चन ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

॥ ४५ ॥ वैराटपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये २५॥ श्लोकाः]

॥ नवमोऽध्यायः ॥

अर्जुनेन षण्ढवेषपरिग्रहेण विराटसभाप्रवेशः ॥ १ ॥ विराटेनार्जुनस्य कन्यानाटने नियोजनम् ॥ २ ॥

वैशम्पायनः—

अथापरोऽदृश्यत वर्णवान् युवा

स्त्रीवेषधारी समलङ्कृतो भृशम् ।

प्रवालचित्रे प्रविमुच्य कुण्डले

उभे च कम्बू परिपातुके तथा ॥ १

[1]कृष्णे च रक्ते च निबध्य वाससी

शरीरवान् शक्रबृहस्पतिप्रभः ।

1. म—इदमर्धं नास्ति

बहूंश्च दीर्घांश्च विकीर्य मूर्धजान्
महाभुजो मत्तगजेन्द्रविक्रमः ॥ २
क्लैब्येन वेषेण न भाति भाति च
ग्रहाभिपन्नो नभसीव चन्द्रमाः ।
गतेन चोर्वीं परिकम्पयंस्तदा
विराटमासाद्य सभासमीपतः ॥ ३
तं प्रेक्ष्य राजोपगतं सभातले
ततः प्रतिच्छन्नममित्रमर्दनम् ।
विराजमानं सुरराजवर्चसं
सुतं सुरेन्द्रस्य गजेन्द्रविक्रमम् ॥ ४
सर्वानपृच्छच्च समीपचारिणः
कुतोऽयमायाति न मे पुरा श्रुतः ।
न चैनमूचुर्विदितं नरास्तदा
सविस्मयं वाक्यमिदं नृपोऽब्रवीत् ॥ ५

**विराटः—**

गजेन्द्र[1]शीलो मृगराजगामी
वृषेक्षणो देवसुतोग्रतेजाः ।
पीनांसबाहुः कनकावदातः
कोऽयं नरो मे नगरं प्रविष्टः ॥ ६

---

1. क-ख-च-म—लीलो

किमेष देवेन्द्रसुतः किमेष
ब्रह्मात्मजो वा किमयं स्वयम्भूः ।
उमासुतो वैश्रवणात्मजो वा
प्रेक्ष्यैनमासीदिति मे प्रतर्कः ॥ ७

वैशम्पायनः—

सभामतिक्रम्य स वासवोपमो
निरीक्ष्यमाणो बहुभिस्सभागतैः ।
स तत्र राजानममित्रहाऽब्रवीद्
बृहन्नलाऽहं नरदेव नर्तकी ॥ ८

बृहन्नला—

वेणीं प्रकुर्यां रुचिरे च कुण्डले
[1]तथा स्रजः प्रावरणानि संहरे ।
[2]स्नानं चरेयं विमृजे च दर्पणं
विशेषकेष्वेव च कौशलं मम ॥ ९

क्लीबेषु बालेषु जनेषु नर्तने
शिक्षाप्रदानेषु च योग्यता मम ।
करोमि वेणीषु च पुष्पपूरणं
न मे स्त्रियः कर्मणि कौशलाधिकाः ॥ १०

---

1. क-ख-घ-म—अथे
2. क—स्थानं रचेयं । ख-घ-म—स्नानं रचेयं

**वैशम्पायनः—**

तमब्रवीत् प्रांशुमुदीक्ष्य विस्मितो
विराटराजोपसृतं महायशाः ॥ १०॥

**विराटः—**

नार्हस्तु वेषोऽयमनूर्जितस्ते
नापुंस्त्वमर्हो नरदेवसिंह ।
[1]तवैषं वेषश्शुभवेषभूषणैर्
विभूषितो भूतपतेरिव प्रभो ॥ ११॥

विभाति भानोरिव रश्मिमालिनो
घनावरुद्धे गगने [2]घनैरिव ।
धनुर्हि मन्ये तव शोभयेद्भुजौ
तथा हि पीनावतिमात्रमायतौ ॥ १२॥

प्रगृह्य चापं प्रतिरूपमात्मनो
रक्षस्व देशं पुरमद्य [3]संश्रितः ।
पुत्रेण तुल्यो भव मे बृहन्नले
वृद्धोऽस्मि वित्तं प्रतिपादयामि ते ॥ १३॥

त्वं रक्ष मे सर्वमिदं पुरं प्रभो
न षण्डतां काञ्चन लक्षयामि ते ।

---

1. म—तवैष वेषोऽशुभवेषभूषणैर् विभूषितो भूतपतेरिव प्रभोः ।
2. क-ख-घ-म—रवेरिव
3. क—सुस्थितः । ख-घ-ङ-च-म—सुस्थिरः ।

प्रशाधि मत्स्यांस्तरसा [1]विवर्धयन्
दद्दामि राज्यं तव सत्यवागहम् ॥ १४॥

वैशम्पायनः—

तस्याग्रतस्त्वानि धनूंषि पार्थिवो
बहूनि दीर्घाणि च वर्णवन्ति च ।
ददौ स सज्यानि बलान्वितानि
[2]जिज्ञासमानः किमयं करिष्यति ॥ १५॥

ततोऽर्जुनः क्लीबतरं वचोऽब्रवी-
न्न मे धनुर्धारितमीदृशं प्रभो ।
न चापि दृष्टं धनुरीदृशं क्वचि-
न्न मादृशास्सन्ति धनुर्धरा भुवि ॥ १६॥

नृत्यामि गायामि च वादयाम्यहं
प्रनर्तने कौशलनैपुणं मम ।
तदुत्तरायाः परिधत्स्व [3]नर्तने
भवामि देव्या नरदेव नर्तकी ॥ १७॥

---

1. म—ऽभिवर्धयन् ददानि राज्यं तव सत्यवानहम् ।
2. क-म—जिज्ञासनार्थे किमयं करोति च ।
3. क-म—नर्तनं भवामि तेऽहं नरदेव नर्तनाम्? ।
ख-घ—नर्तकं ङ—तदुत्तरायां परिधत्स्व नर्तकम् ।

विराटः—

[1]ददामि ते तं हि वरं बृहन्नले
सुतां हि मे नर्तय याश्च तादृशीः ॥ १८

[2]वैशम्पायनः—

ततो विराटस्स्वयमाह्वयत् सुतां
नराधिपस्तां च सुमध्यसुन्दरीम् ।
उवाच चैनां मुदितेन चेतसा
बृहन्नला नाम सखी भवत्वियम् ॥ १९
सुगात्रि सम्प्रीतिनिबद्धसौहृदा
तवाङ्गने प्राणसमा च नित्यदा ॥ १९॥

प्रकामभक्ष्याभरणाम्बरा शुभा
चरत्वियं सर्वजनेष्ववारिता ।
[3]न दुष्कुलीना त्वियमाकृतिर्भवे-
न्न वृत्तभेदी भवतीदृशो जनः ॥ २०॥
तथा समादिश्य सुतां नराधिपः
प्रवेश्यतां साधु गृहं तवेति च ।
स शिक्षयामास च गीतवादितं
सुतां विराटस्य धनञ्जयः प्रभुः ॥ २१॥

---

1. म—ददानि 2. क—इदं तु कर्मसमं न चैतद् ।
समुद्रनेमिं पृथिवीं त्वमर्हसि ॥[अधिकः पाठः]
3. क—प्रिया हि ते दर्शनतोऽपि सम्मता ब्रवीतु कश्चिद्यदि दृष्टवानिमाम् ।

सखीश्च तस्याः परिचारिकास्तथा

प्रियश्च तस्याः प्रबभूव पाण्डवः ॥ २२

तथा स तत्रैव धनञ्जयोऽवसत्

प्रियाणि कुर्वन् सह ताभिरात्मवान् ।

तथा गतं तत्र न जज्ञिरे जना

बहिश्चरा वाऽप्यथवेतरे जनाः ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

॥ ४५ ॥ वैराटपर्वणि नवमोऽध्यायः ॥ ९ ॥

[अस्मिन्नध्याये २३ श्लोकाः]

---

## ॥ दशमोऽध्यायः ॥

---

नकुलेन विराटमेत्य स्वस्याश्वशास्त्रे कौशलाभिधानम् ॥ १ ॥ विराटेन नकुलस्याश्वपालने नियोजनम् ॥ २ ॥

---

वैशम्पायनः—

अथापरोऽदृश्यत पाण्डवः प्रभुर्

विराटराजे तुरगान् समीक्षति ।

तमापतन्तं ददृशुः पृथग्जनाः

प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ॥ १

स वै हयानैक्षत तानितस्ततस्
समीक्षमाणं च ददर्श मत्स्यराट् ।
दृष्ट्वा तथैनं स कुरूत्तमं ततः
पप्रच्छ तान् सर्वसभासदस्तदा ॥ २

विराटः—
[1]को वा विजानाति पुराऽस्य दर्शनं
योऽयं युवाऽभ्येति हि मामिकां सभाम् ।
प्रियो हि मे दर्शनतोऽपि सम्मतो
ब्रवीतु कश्चिद्यदि दृष्टवानिमम् ॥ ३
[2]अयं हयान् पश्यति मामकान् मुहुर्
ध्रुवं हयज्ञो भविता विचक्षणः ।
प्रवेश्यतामेष समीपमाशु वै
विभाति वीरो हि यथाऽमरस्तथा ॥ ४

वैशम्पायनः—
वितर्कयत्येव हि मत्स्यराजनि
त्वरन् कुरूणामृषभ[3]स्सभामगात् ।
ततः प्रणम्योपनतः कुरूत्तमो
विराटराजानमुवाच पार्थिवम् ॥ ५

---

1. अ—अयं श्लोको नास्ति
2. अ-क—अयं श्लोको नास्ति।
म—कोऽयं हयान् पश्यति मामकानसौ
3. क-ख-घ—स्समागतः। म—स्समागमत्

नकुलः—

तवागतोऽहं पुरमद्य भूपते
जिजीविषुर्वेतनभोजनार्थिकः ।
तवाश्वबन्धस्सुभृतो भवाम्यहं
कुरुष्व मामश्वपतिं यदीच्छसि ॥ ६

विराटः—

ददानि यानानि [1]धनानि वेशनं
न मेऽश्वसूतो भवितुं त्वमर्हसि ।
कुतोऽसि कस्यासि कथं त्वमर्हसि
ब्रवीहि शिल्पं तव विद्यते च यत् ॥ ७

नकुलः—

पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तेनाहमश्वेषु पुरा प्रयुक्तश्शत्रुकर्शन ॥ ८

अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः ।
दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ॥ ९

न कातरं स्यान्मम वाजिवाहनं
न मेऽस्ति दुष्टा बडबा कुतो हयाः ।
जानंस्तु मामाह स चापि पाण्डवो
युधिष्ठिरो ग्रन्थिकमेव नामतः ॥ १०

---

1. क-ख-ङ-म—धनं निवेशनं

मातलिरिव देवपतेर्
दशरथनृपतेस्सुमन्त्र इव यन्ता ।
[1]सुमह इव जामदग्नेस्
तथैव तव शिक्षयाम्यश्वान् ॥ ११

युधिष्ठिरस्य राजेन्द्र नरराजस्य शासनात् ।
शतसाहस्रकोटीनाम् अश्वानामस्मि रक्षिता ॥ १२

विराटः—

यदस्ति किञ्चिन्मम वाजिवाहनं
तदस्तु सर्वं त्वदधीनमद्य वै ।
ये चापि केचिन्मम वाजियोधास्
त्वदाश्रयास्सारथयश्च सन्तु मे ॥ १३

इदं तवेष्टं विहितं सुरोपम
प्रब्रूहि यत् ते प्रसमीक्षितं वरम् ।
न तेऽनुरूपं हयकर्म दृश्यते
विभासि राजेव न कर्म वाजिनाम् ॥ १४

युधिष्ठिरस्यैव हि दर्शनेन मे
समं तवेदं प्रियदर्श दर्शनम् ।
कथं नु भृत्यैस्स विनाकृतो वने
चरत्यनिन्द्यो रमते च पाण्डवः ॥ १५

1. क—सहसाह्वो जमदग्नेः ।
ङ-म—साहस इव जमदग्नेः ।

वैशम्पायनः—

तथा स गन्धर्ववरोपमो युवा
विराटराज्ञा मुदितेन पूजितः ।
न चैवमन्येऽपि विदुः कथञ्चन
प्रियाभिरामं विचरन्तमेकदा ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि दशमोऽध्यायः ॥ १० ॥

॥ ४५ ॥ वैराटपर्वणि दशमोऽध्यायः ॥ १० ॥

[अस्मिन्नध्याये १६।श्लोकाः]

---

## ॥ एकादशोऽध्यायः ॥

---

सहदेवेन गोपालवेषधारणेन विराटं प्रति गमनम् ॥ १ ॥ विराटेन सहदेवस्य गोपालने नियोजनम् ॥ २ ॥

---

वैशम्पायनः—

अथापरोऽदृश्यत वै शशी यथा
हुतो हविर्भिर्हि यथाऽध्वरे शिखी ।
तथा समालक्ष्यत चारुदर्शनः
प्रकाशवान् सूर्य इवाचिरोदितः ॥ १

तमाव्रजन्तं सहदेवमग्रणीर्
नृपो विराटो नचिरात् समैक्षत ।

प्रैक्षन्त तं तत्र पृथक् [1]समागतास्
सभासद[2]स्सर्वमनोहरप्रभम् ॥ २
युवानमायान्तममित्रकर्शनं
प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ॥ २॥

यष्ट्या प्रमाणान्वितया सुदर्शनं
[3]दामानि पाशं च निबद्ध्य पृष्ठतः ।
मौञ्जीं च तन्त्रीं महतीं सुसंहितां
वालैश्च दामैर्बहुभिस्समावृताम् ॥ ३॥

स चापि राजानमुवाच वीर्यवान्
कुरुष्व मां पार्थिव गोष्ववस्थितम् ।
मया हि गुप्ताः पशवो भवन्तु ते
प्रणष्टनिद्राः प्रभवोऽस्मि वल्लवः ॥ ४॥

न श्वापदेभ्यो न च रोगतो भयं
न चापि तासामुत तस्कराद्भयम् ।
पयःप्रभूता बहुला निरामया
भवन्ति गावस्सुभृता नराधिप ॥ ५॥

---

1. अ-च—क्रमा। घ—सभा
2. ङ—स्सर्वमनोरथप्रियम्
3. क-ङ-म—दामानि कीलांश्च।
घ—दामानि पाशानि च

निशम्य राजा सहदेवभाषितं
निरीक्ष्य माद्रीसुतमभ्य[1]नन्दत ।
उवाच हृष्टो मुदितेन चेतसा
न वल्लवत्वं त्वयि वीर लक्षये ॥ ६॥

धैर्याद्वपुः क्षात्रमिवेह ते दृढं
प्रकाशते कौरववंशजस्य वा ।
नापण्डितेयं तव दृश्यते तनुर्
भवेह राज्ये मम मन्त्रधर्मभृत् ॥ ७॥

प्रशाधि मत्स्यान् सहराजकानिमान्
बृहस्पतिश्शक्रयुतानिवामरान् ।
बलं च मे रक्ष सुवेष सर्वशो
गृहाण खड्गं प्रतिरूपमात्मनः ॥ ८॥

अनीककर्णाग्रधरो बलस्य मे
प्रभुर्भवानस्तु गृहाण कार्मुकम् ॥ ९

विराटराज्ञाऽभिहितः कुरूत्तमः
प्रशस्य राजानमभिप्रणम्य च ।
उवाच मात्स्यप्रवरं महामतिश्
शृणुष्व [2]राजन् मम वाक्यमुत्तमम् ॥ १०

1. क-ख-म—नन्दत । च—नन्द्य च
2. ख-च—वाक्यं मम राजसत्तम ।

बालो ह्यहं जातिविशेषदूषितः
कुतोऽद्य मे नीतिषु युक्तमन्त्रता ।
स्वकर्म[1]युक्ताश्च वयं नराधिप
प्रशाधि मां गोपरिरक्षणेऽनघ ॥ ११

वैश्योऽस्मि नाम्नाऽहमरिष्टनेमिर्
गोसङ्ख्य आसं कुरुपुङ्गवानाम् ।
वस्तुं त्वयीच्छामि विशां वरिष्ठ
राजन्यसिंहान् न हि वेद्मि पार्थिवान् ॥ १२

न जीवितुं शक्यमतोऽन्यकर्मणा
न च त्वदन्यो मम रोचते [2]स्वतः ॥ १२॥

विराटः—

त्वं ब्राह्मणो वा यदि भूमिपालस्
समुद्रनेमीश्वररूपवानसि ।
आचक्ष्व तत्त्वं त्वममित्रकर्शन
न वल्लवत्वं त्वयि [3]विद्यते समम् ॥ १३॥

कस्यासि राज्ञो विषयादिहागतः
किं चापि शिल्पं तव विद्यते कृतम् ।

---

1. क-ख-ब-म—तुष्टाश्च
2. क-ख-घ-ङ—नृप । म—नृपः ।
3. ख—वीर विद्यते । ङ—विद्यते कथम् ।

कथं त्वमस्मासु निवत्स्यसे सदा
वदस्व किं चापि तवेह वेतनम् ॥ १४॥

सहदेवः—

पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तस्याष्टशतसाहस्रा गवां वर्गाश्शतं शतम् ॥ १५॥

[1]अपरे दशसाहस्रा द्विस्तावन्तस्तथा परे ।
तेषां गोसङ्ख्य आसं वै तन्त्रीपालेति मां विदुः ॥ १६॥

भूतं भव्यं भविष्यच्च यच्चान्यद् गोगतं क्वचित् ।
न मेऽस्त्यविदितं किञ्चित् समन्ताद्दशयोजनम् ॥ १७॥

गुणास्सुविदिता ह्यासन् मया तस्य महात्मनः ।
असकृत् स मया तुष्टः कुरुराजो युधिष्ठिरः ॥ १८॥

अनेक[2]गुणिता गावो दुर्विज्ञेया महत्तराः ।
बहुक्षीरतरास्ता वै बह्व्य[3]स्सत्यस्सुपुत्रिकाः ॥ १९॥

क्षिप्रं च गावो बहुला भवन्ति
न तासु रोगो भवतीह कश्चित् ।

1. अ-ङ—कोशयोः इदमर्धं नास्ति ।
2. क-ख-घ—गणिता ।
3. क-म—स्सत्यस्सपुत्रकाः । ख—स्सम्यक् । च—स्सव्यक्सपुत्रकाः ।

तैस्तैरुपायैर्विदितं मयैतद्
एतानि शिल्पानि मयि स्थितानि ॥ २०॥

ऋषभानपि जानामि राजन् पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ २१॥

वैशम्पायनः—

मत्स्याधिपो हर्षकलेन चेतसा
माद्रीसुतं पाण्डवमभ्यभाषत ।
नैवानुमन्ये तव कर्म कुत्सितं
महीं समग्रामभिपातुमर्हसि ॥ २२॥

अथ त्विदानीं तव रोचते विभो
यथेष्टतो गव्यमवेक्ष मामकम् ।
त्वदर्पणा मे पशवो भवन्तु वै
नृपो विराटस्तमुवाच सत्तमः ॥ २३॥

शतं सहस्राणि गवां ममात्र
वर्णस्य वर्णस्य पृथग्गणानाम् ।
ददामि तेऽहं वरमीप्सितं च यत्
त्वदर्पणा मे पशवो भवन्त्विति ॥ २४॥

एवं विराटेन समेत्य पाण्डवो
लब्ध्वा च गोवल्लवतां यथेष्टतः ।

अज्ञातचर्यामवसन्महात्मा
यथा रविश्चास्तगिरिं प्रविष्टः ॥ २५॥

एवं विराटे न्यवसंश्च पाण्डवा
यथा प्रतिज्ञाभिरमोघविक्रमाः ।
अबुद्धचर्यां चरितुं यथातथं
समुद्रनेमीमभिशास्तुमीश्वराः ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ४५ ॥ वैराटपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये २६॥ श्लोकाः]

---

## ॥ द्वादशोऽध्यायः ॥

---

द्रौपद्याः सैरन्ध्रीवेषधारणेन सुदेष्णागृहे निवासः ॥ १ ॥

---

वैशम्पायनः—

ततः कृष्णा [1]सुकेशी सा दर्शनीया शुचिस्मिता ।
वेणीकेशान् समुत्क्षिप्य पीनवृत्तकुचा शुभा ॥ १
[2]जुगूहे दक्षिणे पार्श्वे मृदूनसितलोचना ॥ १॥

---

1. ब-म—सुकेशान्ता ।
2. अ-ब-क—इदमर्धं नास्ति ।

वासश्च परिधायैकं कृष्णा सुमलिनं महत् ।
कृत्वा वेषं च सैरन्ध्र्याः कृष्णा व्यचरदार्तवत् ॥ २॥

प्रविष्टा नगरं भीरुस् सैरन्ध्रीवेषसंयुता ।
[1]तां नराः परिधावन्तस् स्त्रियश्च समुपाद्रवन् ॥ ३॥

अपृच्छंस्ते च तां दृष्ट्वा का त्वं किं च चिकीर्षसि ॥ ४

सा तानुवाच राजेन्द्र सैरन्ध्र्यहमुपागता ।
कर्म चेच्छामि वै कर्तुं तस्या या मां भरिष्यति ॥ ५

तस्या वेषेण रूपेण श्लक्ष्णया च गिरा तथा ।
न श्रद्दधाति तां [2]दासीम् अन्नहेतोरुपस्थिताम् ॥ ६

विराटस्य तु कैकेयी भार्या परमसम्मता ।
आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् ॥ ७

सा समीक्ष्य तथारूपाम् [3]अनाथामेकवाससम् ।
स्त्रीभिश्च पुरुषैश्चापि सर्वतः परिवारिताम् ॥ ८

विराटभार्या तां देवीं कारुण्याज्जातसम्भ्रमा ।
अप्रेषयत् समीपस्थास् स्त्रियो वृद्धाश्च तत्पराः ॥ ९

[4]अनुनीय ततस्सर्वा आनयध्वमिहैव ताम् ।
यदा दृष्टा मया साध्वी कम्पते मे मनस्तदा ॥ १०

---

1. क—तां नरा गच्छमानां तु।
2. अ-क-रू—देवीं।　　3. अ—मलिना।
4. क-ख—अपनीय।　　अ-घ-च-म—उपनीय

तस्माच्छीघ्रमिहानाय्य दर्शयध्वं यदीच्छथ ॥ १०॥
तास्तथोक्ता उपागम्य द्रौपदीं परिसङ्गताः ।
आनीय सर्वथा त्वेनाम् अब्रुवन् मधुरां गिरम् ॥ ११॥

स्त्रियः—

भद्रे त्वां द्रष्टुमिच्छन्ती सुदेष्णा हर्म्यभूतले ।
स्थिता त्वदर्थे हि वयं त्वत्समीपमुपागताः ॥ १२॥
[1]त्वदर्थे प्रेषयच्चास्मान् द्रष्टुं तां त्वं यदीच्छसि ।
आयाह्यस्माभिरेवाद्य रक्ष्यमाणा यथेष्टतः ॥ १३॥

वैशम्पायनः—

तच्छ्रुत्वा द्रौपदी तासां वचनं वाक्यकोविदा ।
ईप्सितार्थातिलाभेन हृष्टा याता गृहोत्तमम् ॥ १४॥
[2]अथ सा छिन्नपट्टाभ्यां वल्कलाजिनसंघृता ।
राजवेश्म समागम्य यत्राग्र्यमहिषी स्थिता ॥ १५॥
सुदेष्णामगमत् कृष्णा राजभार्यां यशस्विनीम् ॥ १६
कृष्णान् केशान् मृदून् दीर्घान् समुद्ग्रथ्यायतेक्षणा ।
कुञ्चिताग्रान् सुसूक्ष्माग्रान् दर्शनीयान् निबध्य च ॥ १७
जुगूहे दक्षिणे पार्श्वे मृदूनासितलोचना ॥ १७॥
सा प्रविश्य विराटस्य द्रौपद्यन्तःपुरं शुभा ।
ह्रीनिषेवान्विता बाला कम्पमाना लतेव सा ॥ १८॥

---

1. अ-स-ब-क—श्लोकद्वयं न दृश्यते ।
2. च—समाहूयाब्रवीद्भद्रे का त्वं किञ्च चिकीर्षसि । [अधिकः पाठः]

अभिगम्य च सुश्रोणी सर्वलक्षणसंयुता ।
ददर्शावस्थितां हैमे पीठे रत्नपरिच्छदे ॥ १९॥
रक्तसूक्ष्मांशुकधरां मेघे सौदामिनीमिव ।
नानावर्णविचित्रां च सर्वाभरणभूषिताम् ॥ २०॥
सुभ्रूं सुकेशीं सुश्रोणीं कुब्जवामनमध्यगाम् ।
बहुपुष्पोपकीर्णायां भूम्यां वेदीमिवाध्वरे ॥ २१॥
सुदेष्णां राजमहिषीं सर्वालङ्कारसंयुताम् ॥ २२
तास्सर्वा द्रौपदीं दृष्ट्वा सन्तप्ताः परमाङ्गनाः ।
त्वरिताश्चोपतस्थुस्तास् सहसोत्थाय चासनात् ॥ २३
निरीक्षमाणास्तास्सर्वाश् शचीं देवीमिवागताम् ।
गूढगुल्फां वरारोहां कृष्णां ताम्रायतेक्षणाम् ॥ २४
अतिसर्वानवद्याङ्गीं तनुगात्रीं सुमध्यमाम् ॥ २४॥
नातिह्रस्वां न महतीं जातां बहुतृणे वने ।
[1]ऋश्यरोहीमिवानिन्द्यां सुकेशीं मृगलोचनाम् ॥ २५॥
तां मृगीमिव वित्रस्तां यूथभ्रष्टामिव द्विपाम् ।
लक्ष्मीमिव विशालाक्षीं विद्यामिव यशस्विनीम् ॥ २६॥
रोहिणीमिव ताराणां दीप्तामग्निशिखामिव ।

---

1. क—नीलोत्पलदलश्यामां । च-महालक्ष्मीमिवानिन्द्यां ।
ङ—मुख्यारोहामिवानिन्द्यां ।

पार्वतीमिव रुद्राणीं वेलामिव महोदधेः ॥ २७॥

सुलभामिव नागीनां मृगीणामिव किन्नरीम् ।
गङ्गामिव विशुद्धाङ्गीं शारदीमिव शर्वरीम् ॥ २८॥

तामचिन्त्यतमां लोके इलामिव यशस्विनीम् ।
सावित्रीमिव दुर्धर्षां ब्राह्मया लक्ष्म्या [1]समन्विताम् ॥ २९॥

[2]सुदेष्णा पर्यपृच्छत् तां विस्मयोत्फुल्ललोचना ॥ ३०

का त्वं सर्वानवद्याङ्गि कुतोऽसि त्वमिहागता ।
कस्य वा त्वं विशालाक्षि किं वा ते करवाण्यहम् ॥ ३१

गूढगुल्फा समानोरुस् त्रिगम्भीरा षडुन्नता ।
रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी ॥ ३२

सुकेशी सुस्वरा श्यामा पीनश्रोणीपयोधरा ।
अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ॥ ३३

कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना ।
दानवी किन्नरी वा त्वं गन्धर्वी वनदेवता ॥ ३४

अप्सरा वाऽसि नागी वा तारा वा त्वं विलासिनी ।
अलम्बुसा मिश्रकेशी पुण्डरीकाक्षमालिनी ॥ ३५

---

1. ख-घ-ङ—समावृताम् ।
2. ख-सीतामिव सतीं शुद्धामरुन्धतीमिव प्रियाम् । [अधिकः पाठः]

तेन तेनैव सम्पन्ना काश्मीरीव तुरङ्गमा ।
इन्द्राणी त्वथ रुद्राणी स्वाहा वाऽप्यथवा रतिः ॥ ३६

[1]देवि देवीषु विख्याता ब्रूहि का त्वमिहागता ।
तव ह्यनुपमं रूपं भूषणैरपि वर्जितम् ॥ ३७

त्वां सृष्ट्वोपरतं मन्ये लोककर्तारमीश्वरम् ।
न तृप्यन्ति स्त्रियो दृष्ट्वा का न पुंसां रतिर्भवेत् ॥ ३८

[2]द्रौपदी—

[3]नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ।
सैरन्ध्री नाम मे जातिर् वन्यमूलफलाशना ॥ ३९

पतीनां प्रेक्षमाणानां कस्मिंश्चित् कारणान्तरे ।
केशपक्षपरामृष्टा साऽहं त्रस्ता वनं गता ॥ ४०

तत्र द्वादशवर्षाणि वन्यमूलफलाशना ।
चराम्यनिलया सुभ्रूस् सा तवान्तिकमागता ॥ ४१

---

1. क-ख-ब-म—देवी देवेषु ।
2. क—प्रवालपुष्पस्तबके राचिता वनदेवता ।
त्वामेव हि निरीक्षन्ते विस्मिता रूपसम्पदा ॥
अन्तःपुरगता नार्यो मृगपक्षिगणाश्च ये ।
सर्वे त्वामेव कल्याणि निरीक्षन्ते सुविस्मिताः ॥
न त्वादृशी काचन मे त्रिषु लोकेषु सुन्दरी ।
दृष्टपूर्वा श्रुता वाऽपि वपुषा विद्यते शुभे ॥
एवमुक्ता सुदेष्णां तां कृताञ्जलिपुटा स्थिता ।
अब्रवीद्विस्मयाविष्टां द्रौपदी योषितां वरा ॥ [अधिकः पाठः]
3. क-ख-ङ-चम—नास्मि (घ) नाहं ।

जानामि केशान् ग्रथितुं जानामि ग्रथितुं मणीन् ।
मल्लिकोत्पलपद्मानां जानामि ग्रथितुं स्रजः ॥ ४२

[1]सिन्धुवारकजातीनां रचयाम्यवतंसकान् ॥ ४२॥

पत्रं मृगाङ्कमगरुं पिङ्क्षे च हरिचन्दनम् ।
ग्रथयिष्यामि चित्राश्च स्रजः परमशोभनाः ॥ ४३॥

आराधयं सत्यभामां कृष्णस्य महिषीं प्रियाम् ।
कृष्णां च भार्यां पार्थानां नारीणामुत्तमां तथा ॥ ४४॥

तयाऽस्मि सुभृता चाहम् इष्टलाभेन तोषिता ।
मालिनीति च मे नाम स्वयं देवी चकार ह । ४५॥
कृष्णा कमलपत्राक्षी सा मे प्राणसमा सखी ॥ ४६

न चाहं चिरमिच्छामि कश्चिद्वस्तुं शुभानने ।
व्रतं किलैतदस्माकं कुलधर्मोऽयमीदृशः ॥ ४७

यो ह्यस्माकं तु हरेद्द्रव्यं देशं वसनमेव वा ।
न क्रोद्धव्यं किलास्माभिर् असमद्गुरु[2]ररोषणः ॥ ४८

साऽहं वनानि दुर्गाणि तीर्थानि च सरांसि च ।
शैलांश्च विविधान् रम्यान् सरितश्च समुद्रगाः ॥ ४९

भर्तृशोकपरीताङ्गी भर्तृसब्रह्मचारिणी ।

---

3. क-ख-घ-म—सिन्दु ।
1. अ-र्न रोषणः । ख—रतोषणः । क-घ—रमर्षणः ।

विचरामि महीं [1]दुर्गां यत्र सायंनिवेशना ॥ ५०

वीरपत्नी यदा देवी चरमाणेषु भर्तृषु ।
साऽहं विवत्सा विधिना गन्धमादनपर्वतात् ॥ ५१

शृणोमि तव सौशील्यं भर्तुर्मधुरभाषिणि ॥ ५१॥

माहात्म्यं च ततश्श्रुत्वा ब्राह्मणानां समीपतः ।
त्वामुपस्थातुमिच्छामि ततश्चाहमिहागता ॥ ५२॥

गुरवो मम धर्मश्च वायुश्शक्रस्तथाऽश्विनौ ।
तेषां प्रसादाच्च न मां कश्चिद्धर्षयते पुमान् ॥ ५३॥

सुदेष्णा—

न भरेयमहं भद्रे संशयो मे न विद्यते ।
राजा त्वयं हि त्वां दृष्ट्वा मतिं पापां करिष्यति ॥ ५४॥

साऽहं त्वां न क्षमां मन्ये वसन्तीमिह वेश्मनि।
एष दोषोऽत्र सुश्रोणि कथं वा भीरु मन्यसे ॥ ५५॥

स्थिता राजकुले नार्यो यांश्चेमा मम वेश्मनि।
त्वामेवैता निरीक्षन्ते विस्मयाद्वरवर्णिनि ॥ ५६॥

वृक्षांश्चोपस्थितान् पश्य य इमे मम वेश्मनि ।
[2]विनमन्ते हि त्वां दृष्ट्वा पुमांसं कं न लोभयेः ॥ ५७॥

---

1. अ—कृत्स्नां। ङ—सर्वां।
2. क-ख—न मन्यते हि। म—नमन्त्येते हि।

राजा विराटस्सुश्रोणि दृष्ट्वा ते परमं वपुः ।
मां विहाय वरारोहे त्वां गच्छेत् सर्वचेतसा ॥ ५८॥

यं हि त्वमनवद्याङ्गी नरमायतलोचने ।
सुप्रसन्ना हि वीक्षेथास् स कामवशगो भवेत् ॥ ५९॥

सुस्नाताऽलङ्कृता च त्वं [1]यमीक्षेथा हि मानुषम् ।
ग्लानिर्न तस्य दुःखं वा न तन्द्रिर्न पराजयः ॥ ६०॥

न शोचेन्न च संपश्येन्न च क्रुध्येन्नानृतं वदेत् ॥ ६१

[2]यं त्वं सर्वानवद्याङ्गि भजेथास्समलङ्कृता ।
न व्याधिर्न जरा तस्य न तृष्णा न क्षुधा भवेत् ॥ ६२

यस्य त्वं वशगा सुभ्रु भवेरङ्कगता सती ।
पञ्चत्वमपि सम्प्राप्तं [3]यं च त्वं परिषस्वजेः ॥ ६३
बाहुभ्यामनुरूपाभ्यां स जीवेदिति मे मतिः ॥ ६३॥

यस्य तु त्वं भवेर्भार्या यं च दृष्ट्वा परिष्वजेः ।
अतिजीवेत् स सर्वेषु देवेष्वपि पुरन्दरः ॥ ६४॥

अध्यारोहेद्यथा वृक्षं वधायारुह्य तिष्ठति ।
राजवेश्मनि लेखाभ्रि ननु स्यास्त्वं तथा मम ॥ ६५॥

यथा कर्कटकी गर्भम् आधत्ते मृत्युमात्मनः ।

1. अ—समीक्षेथा । म—यमीक्षेथा हि मानवम् ।
2. अ-थ—यत् त्वं
3. म—यदि त्वं पुरुषं स्वजेः ।

तथाविधमहं मन्ये तव सुभ्रु समागमम् ॥ ६६॥
अनुमानये त्वां सैरन्ध्रि नावमन्ये कथञ्चन ।
भर्तृशीलभयाद्भद्रे तव वासं न रोचये ॥ ६७॥

सैरन्ध्री—

नाहं शक्या विराटेन नापि चान्येन केनचित् ।
देवगन्धर्वयक्षैर्वा द्रष्टुं दुष्टेन चेतसा ॥ ६८॥
गन्धर्वाः [1]पालयन्ते मां सुकुलाः पञ्च सुव्रताः ।
पुत्रा देवादिदेवानां सूर्यपावकवर्चसः ॥ ६९॥
यश्च दुश्शीलवान् मर्त्यो मां स्पृशेद्दुष्टचेतसा ।
स तामेव निशां शीघ्रं शयीत मुसलैर्हतः ॥ ७०॥
यस्यापि हि शतं पूर्णं बान्धवानां भवेदिह ।
सहस्रं वा विशालाक्षि कोटिर्वाऽपि सहस्रिका ॥ ७१॥
दुष्टचित्तश्च मां ब्रूयान्न स जीवेत् तवाग्रतः ॥ ७२
न तस्य त्रिदशा देवा नासुरा न च पन्नगाः ।
तेभ्यो गन्धर्वराजेभ्यस् त्राणं कुर्युरसंशयम् ॥ ७३
[2]सुदेष्णे विश्वस त्वं मे स्वजने बान्धवेषु वा ।
नाहं शक्या नरैस्स्प्रष्टुं न च मे वृत्तमीदृशम् ॥ ७४

---

1 अ-ङ-च-म—कामयन्ते मां सुकुलाः । क—कामयन्ते मां कल्याः ।
घ—कामयन्ते मां सुकुल्याः ।

2. क-घ-ङ-म—सुतेषु ।

यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत् ।
प्रीयेरंस्तेन वासेन गन्धर्वाः पतयो मम ॥ ७५

यो हि मां पुरुषो गृध्येद् यथाऽन्यां प्राकृतां स्त्रियम् ।
तामेव स इमां रात्रिं प्रविशेदपरां तनुम् ॥ ७६

न चाप्यहं चालयितुं शक्या केनचिदङ्गने ।
दुःखशीला हि गन्धर्वास् ते च मे [1]बलिनः प्रियाः ॥ ७७
एवं निवसमानायां मयि मा ते भयं हि भूत् ॥ ७७॥

वैशम्पायनः—
एवमुक्ता तु सैरन्ध्र्या सुदेष्णा वाक्यमब्रवीत् ॥ ७८

सुदेष्णा—
वसेह मयि कल्याणि यदि ते वृत्तमीदृशम् ।
कश्च ते दातुमुच्छिष्टं पुमानर्हति शोभने ॥ ७९
[2]प्रधावयेच्च कः पादौ लक्ष्मीं दृष्ट्वैव बुद्धिमान् ॥ ७९॥

एवमाचारसम्पन्ना एवं देवपरायणा।
रक्ष्या त्वमसि भूतानां सावित्रीव द्विजन्मनाम् ॥ ८०॥

देवतेव हि कल्याणि पूजिता वरवर्णिनी ।
वस भद्रे [3]मया प्रीता प्रीतिर्हि मम वर्तते ॥ ८१॥

---

1. क-म—बलवत्प्रियाः। ख—बलवत्तराः। घ—तेन ते बलवत्तराः।
2. क—भावयेच्च। ख-घ-ङ-च-म—सारयेच्च।
3. क-ख-घ-ङ-म—मयि।

सर्वकामैः प्रमुदिता निरुद्विग्नमनास्सुखम् ॥ ८२

वैशम्पायनः—

सुदेष्णयैवमुक्ता सा सम्प्रीता चारुहासिनी ।
निर्विशङ्का विराटस्य विवेशान्तःपुरं तदा ॥ ८३
याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशाम्पते ॥
अवसत् परिचारार्हा सुदुःखं जनमेजय ॥ ८४

एवं विराटे न्यवसन्त पाण्डवाः
कृष्णा तथाऽन्तःपुरमेत्य शोभना ।
अज्ञातचर्यां प्रतिरुद्धमानसा
यथाऽग्नयो भस्मनि गूढतेजसः ॥ ८५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ४५ ॥ वैराटपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये ८५ श्लोकाः]

---

## ॥ त्रयोदशोऽध्यायः ॥

पाण्डवैः स्वस्वव्यापारैर्विराटपरितोषणम् ॥ १॥ भीमेन शङ्करोत्सवे महामल्लमारणम् ॥ २ ॥

---

जनमेजयः—

एवं विराटनगरे वसन्तस्सत्यविक्रमाः ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १

वैशम्पायनः—

एवं ते न्यवसंस्तत्र प्रच्छन्नाः कुरुनन्दनाः ।
आराधयन्तो राजानं यदकुर्वत तच्छृणु ॥ २

युधिष्ठिरस्सभास्तारस् सभ्यानामभवत् प्रियः ।
तथैव च विराटस्य सपुत्रस्य विशाम्पते ॥ ३

स ह्यक्षहृदयज्ञस्तान् क्रीडयामास पाण्डवः ।
अक्षबद्धान् यथाकामं सूत्रबद्धानिव द्विजान् ॥ ४

अज्ञातं च विराटस्य विजित्य वसु धर्मराट् ।
भ्रातृभ्यः पुरुषव्याघ्रो यथेष्टं सम्प्रयच्छति ॥ ५

भीमसेनोऽपि मांसानि भक्ष्याणि विविधानि च ।
अतिसृष्टानि मत्स्येन [1]विक्रीणन्निव भ्रातृषु ॥ ६

वासांसि परिजीर्णानि लब्धान्यन्तः पुरेऽर्जुनः ।
विक्रीणन् नाम सर्वेभ्यः पाण्डवेभ्यः प्रयच्छति ॥ ७

[2]बीभत्सुरपि गीतेन सूनृतेन च पाण्डवः ।
विराटं तोषयामास सर्वाश्चान्तःपुरे स्त्रियः ॥ ८

अश्वैर्विनीतैर्जवनैस् तत्र तत्र समागतैः ।
तोषयामास नकुलो राजानं राजसत्तम ॥ ९

नकुलोऽपि धनं लब्ध्वा कृते कर्मणि वाजिनाम् ।

---

1. ख-ङ—विक्रीणन्नाम । च—व्यतरद्भ्रातृवत्सलः ।
2. म—इदं श्लोकद्वयं नास्ति ।

तुष्टे तस्मिन् नरपतौ पाण्डवेभ्यः प्रयच्छति ॥ १०
विनीतानृषभान् दृष्ट्वा सहदेवेन भावितान् ।
स तु हृष्टश्च सम्प्रादात् तदा राजा धनं बहु ॥ ११
[1]सहदेवो गवां [2]कृत्ये कृते मङ्गलकर्मणि ।
अध्यक्षत्वाच्च यल्लेभे राज्ञः कल्याणकार्यवान् ॥ १२
[3]सहदेवोपि गोपानां वेषमास्थाय पाण्डवः ।
दधि क्षीरं घृतं चैव पाण्डवेभ्यः प्रयच्छति ॥ १३
कृष्णाऽपि [4]भ्रातॄन् सर्वांस्तान् निरीक्षन्ती तपस्विनी ।
यथा पुनरविज्ञाता तथा चरति भामिनी ॥ १४
एवं [5]सम्भावयन्तस्ते तदाऽन्योन्यं महारथाः ।
प्रेक्षमाणास्तदा कृष्णाम् ऊषुश्छन्ना नराधिप ॥ १५
अथ मासे चतुर्थे तु शङ्करस्य महोत्सवः ।
आसीत् समृद्धो मत्स्येषु पुरुषाणां सुसम्मतः ॥ १६
तत्र मल्लास्समापेतुर् दिग्भ्यो राजन् महाबलाः ॥ १६॥

1. म—अयं श्लोको नास्ति ।　　2. ख-च—नित्यं ।
3. म—इदमर्धं नास्ति ।
4. म—सर्वान् भर्तॄंस्तान् निरीक्षन्ती तपस्विनी ।
घ—सर्वान् भर्तॄन् स्वान् निरीक्षन्त्यतिमामिनी ।
ङ—भर्तॄन् सर्वांस्तान् ।
5. क—सन्छादयन्तस्ते तथा । घ—संबोधयन्तस्ते यथा ।
च—एवं स भावयन्तस्ते ।

महाकाया महावीर्याः कालकेया इवासुराः ।
वीर्यवन्तो बलोदग्रा राज्ञा समभिपूजिताः ॥ १७॥
सिंहस्कन्धकटिग्रीवास् स्ववदाता मनस्विनः ।
असकृल्लब्धलक्षास्ते रङ्गे पार्थिवसन्निधौ ॥ १८॥

तेषामेको महानासीत् सर्वमल्लान् समाह्वयत् ।
व्यावल्गमानो ददृशे गर्जितोद्गातिभिस्स्थितः ॥ १९॥
वित्रस्तमनसस्सर्वे मल्लास्ते हतचेतसः ।
[1]अवाङ्मुखाश्च भीताश्च मल्लाश्चान्ये विचेतसः ॥ २०॥
व्यसुत्वमपरे चैव वाञ्छन्तीव प्रविह्वलाः ।
गां प्रवेष्टुमथेच्छन्ति खं गन्तुमिव चोत्थिताः ॥ २१॥
त्रस्ताश्शान्ता विषण्णाङ्गा निश्शब्दं विह्वलेक्षणाः ।
विराटराजमल्लास्ते भग्नचित्ता हतप्रभाः ॥ २२॥
मल्लेन्द्रनिहतास्सर्वे न किञ्चित् प्रवदन्ति ते ।
मल्ल उद्वीक्ष्य तान् मल्लांस् त्रस्तान् वाक्यमुवाच ह ॥ २३॥
आगतं मल्लराजं मां कृत्स्ने पृथिविमण्डले ।
सिंहव्याघ्रगणैस्सार्धं क्रीडन्तं विद्धि भूपते ॥ २४॥
मल्लेन्द्रस्य वचश्श्रुत्वा बलदर्पसमन्वितम् ।
विराटो वीक्ष्य तान् मल्लांस् त्रस्तान् वाक्यमुवाच ह ॥ २५॥

1. अ—कोशे इदमर्धं नास्ति।

विराटः—

अनेन सह मल्लेन को योद्धुं शक्तिमान् नरः ॥ २६

वैशम्पायनः—

ततो युधिष्ठिरोऽवादीच् छ्रुत्वा मात्स्यपतेर्वचः ॥ २६॥

युधिष्ठिरः—

अस्ति मल्लो महाराज मया दृष्टो युधिष्ठिरे ।

अनेन सह मल्लेन योद्धुं शक्नोति भूपते ॥ २७॥

योऽसौ मल्लो मया दृष्टः पूर्वं यौधिष्ठिरे पुरे ।

सोऽयं मल्लो वसत्येष राजंस्तव महानसे ॥ २८॥

वैशम्पायनः—

युधिष्ठिरवचश्श्रुत्वा व्यक्तमाहेति पार्थिवः ।

सोऽप्यथाहूयतां क्षिप्रं योद्धुं मल्लेन संसदि ॥ २९॥

भीमसेनो विराटेन आहूतश्चोदितस्तथा ।

[1]योद्धुं ततोऽब्रवीद्वाक्यं योद्धुं शक्नोमि भूपते ॥ ३०॥

नरेन्द्र ते प्रभावेन श्रिया शक्त्या च शासनात् ।

अनेन सह मल्लेन योद्धुं राजेन्द्र शक्नुयाम् ॥ ३१॥

युधिष्ठिरकृतं ज्ञात्वा श्रिया तव विशाम्पते ।

महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ॥ ३२॥

चोदितो भीमसेनस्तु मल्लमाहूय मण्डले ।

योद्धुं व्यवस्थितो वीरो रेणुं सम्मृज्य हस्तयोः ॥ ३३॥

अथ सूदेन तं मल्लं योधयामास पार्थिवः ॥ ३४

---

1 क-ङ-म—योद्धुकामो ।

[1]चोद्यमानस्ततो भीमो दुःखेनेवाकरोत् पदम् ।
न हि शक्नो[2]म्यशक्तोऽपि प्रत्याख्यातुं नराधिपम् ॥ ३५

ततस्स पुरुषव्याघ्रश् शार्दूलशिथिलं चरन् ।
प्रविवेश महारङ्गं विराटमभिहर्षयन् ॥ ३६

बद्धकक्षोऽथ कौन्तेयस् ततस्तान् हर्षयञ्जनान् ।
तत्र तं वृत्रसङ्काशं भीमो मल्लं समाह्वयत् ॥ ३७

कक्षे मल्लं गृहीत्वा तु ननाद बहु सिंहवत् ॥ ३७॥

तावुभौ सुमहोत्साहावुभौ तुल्यपराक्रमौ ।
मत्ताविव महाकायौ वारणौ सन्निपेततुः॥ ३८॥

[3]वृषतुल्यबलौ वीरौ सिंहतुल्यपराक्रमौ ।
गजाविव मदोन्मत्तौ भीममल्लौ निपेततुः ॥ ३९॥

उत्पपाताथ वेगेन मल्लं कक्षे गृहीतवान् ।
पार्श्वे निगृह्य हस्तेन पातयामास मल्लकम् ॥ ४०॥

चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा ॥ ४१

[4]निनदन्तमभिक्रोशन् शार्दूल इव दारुणः ।

---

1. ख—योद्धुं व्यवस्थितो वीरो रेणुं संमृज्य हस्तयोः ।
घ—मत्तो गज इवाभ्यं तु योद्धुं समुपचक्रमे ।
वैशम्पायनः— [अधिकः पाठः]

2. क-ङ-म—मि विवृतं । 3. ङ—अयं श्लोको नास्ति ।

4. क-ख-घ-ङ-च-म—विनदन्तमतिक्रोशाम् ।

तमुद्यम्य महाबाहुर् भ्रामयामास पाण्डवः ॥ ४२

ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे भृशम् ॥ ४२॥

भ्रामयित्वा शतगुणं गतसत्वमचेतनम् ।
प्रत्यपिङ्क्ष्न्महाबाहुर् मल्लं भुवि वृकोदरः ॥ ४३॥

तस्मिन् विनिहते मल्ले वज्रिणेव महाचले ।
विराटः परमं हर्षम् अगमत् सह बन्धुभिः ॥ ४४॥

हर्षाद्धि प्रददौ वित्तं बहु राजन् महामनाः ।
वललाय महारङ्गे यथा वैश्रवणस्तथा ॥ ४५॥

एवं स सुबहून् मल्लान् पुरुषांश्च महाबलान् ।
विनिघ्नन् मत्स्यराजस्य प्रीतिमावहदुत्तमाम् ॥ ४६॥

यदाऽस्य [2]तुल्यः पुरुषो न कश्चित् तत्र दृश्यते ।
ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययुध्यत ॥ ४७॥

विराटेन प्रदत्तानि चित्राणि विविधानि च ।
स्थितेभ्यः पुरुषेभ्यश्च दत्त्वा द्रव्याणि जग्मिवान् ॥ ४८॥

पुनरन्तःपुरगतस् स्त्रीणां मध्ये वृकोदरः ।
युध्यते स्म विराटस्य गजैस्सिंहैर्महाबलैः ॥ ४९॥

बीभत्सुरपि गीतेन नृत्तेनापि च पाण्डवः ॥
विराटं तोषयामास सर्वाश्चान्तः पुरे स्त्रियः ॥ ५०॥

अश्वैर्विनीतैर्जवनैस् तत्र तत्र समागतैः ।

तोषयामास नकुलो राजानं राजसत्तम ॥ ५१॥

तस्मै देयं ददौ राजा बहु द्रव्यं शुभं मुदा ॥ ५२

विनीतत्वं गवां दृष्ट्वा सहदेवं च तुष्टवान् ॥

तस्मिन् काले नृपः प्रादात् तस्य प्रीतो धनं बहु ॥ ५३

एवं ते न्यवसंस्तत्र प्रच्छन्नाः पुरुषर्षभाः ॥

कर्माणि तानि कुर्वाणा विराटनृपतेस्तदा ॥ ५४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

॥ ४५ ॥ वैराटपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[अस्मिन्नध्याये ५४ श्लोकाः]

॥ समाप्तं च वैराटपर्व ॥

---

## ॥ चतुर्दशोऽध्यायः ॥

( कीचकवधपर्व )

द्रौपद्या स्वात्मानं कामयमानस्य कीचकस्य परुषभाषणैः प्रत्याख्यानम् ॥ १ ॥

---

वैशम्पायनः—

वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा ।

महारथेषु च्छन्नेषु मासा दश समत्ययुः ॥ १

याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती शुचिस्मिता ।

आवसत् परिचारार्हा सुदुःखं जनमेजय ॥ २

तथा चरन्तीं पाञ्चालीं सुदेष्णाया निवेशने ।
सेनापतिर्विराटस्य ददर्श जलजेक्षणाम् ॥ ३

[1]तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव ।
कीचकः कामयामास कामबाणेन पीडितः ॥ ४

तथा तु दृष्ट्वा ज्वलितां च कीचकस्
ततस्समभ्येत्य नृपाधिपात्मजाम् ।
उवाच कृष्णां परिसान्त्वयंस्तदा
मृगेन्द्रकन्यामिव जम्बुको वने ॥ ५

कीचकः—

शुभं च रूपं प्रथमं [2]च ते वयो
निरर्थकं केवलमद्य भामिनि ।
अधार्यमाणा स्रगिवोत्तमा यथा
न शोभसे सुन्दरि शोभना सती ॥ ६

न त्वं पुरा जातु मयेह दृष्टा
राज्ञो विराटस्य निवेशने शुभे ।
रूपेण मे नन्दयसे मनस्त्वं
सुगात्रि कस्यासि कुतोऽसि का वा ॥ ७

दासस्तवाहं पृथुताम्रलोचने
वशानुगो वारणखेलगामिनि ।

---

1. ख—सारमेयो मन्त्रपूतं वेदिं पार्श्वगतं हविः ।　[अधिकः पाठः]
2. अ—तवानघे ।

कन्दर्पवेगाभिहतोऽस्म्यनिन्दिते
खगो वसन्तेष्विव पुष्पमूर्च्छितः ॥ ८
[1]त्वमीदृशी चारुपरीतदर्शना
नान्यास्त्रियस्सम्परिवर्तुमर्हसि ।
किं राजवेश्मन्यसितायतेक्षणे
करोषि केशान् स्वयमेव भामिनी ॥ ९
अन्या हि नार्यस्तव कर्म कुर्युः
प्रतीतरूपास्तव चारुनेत्री ।
अधार्यमाणेव जनेन मञ्जरी
सुगात्रि किं जीर्यसि चारुहासिनी ॥ १०
त्यजामि दारान् मम ये पुरातनान्
भवामि दासश्च वशानुगश्च ते ।
सुगात्रि मह्यं सुकृतेन ते शपे
यथा मम त्वं हृदये प्रतिष्ठिता ॥ ११
ममानुरूपा त्वमनिन्द्यलोचने
स्वयं तथाऽऽत्मानमिहानुचिन्तय ।
प्रत्यक्षमेतत् तव चारुदर्शने
यथा [2]वपुस्तुल्यवयस्तथाऽऽवयोः ॥ २

1. क—त्वमेवमाचारवती सुदर्शना। च—त्वमेव कल्याणि परीतदर्शना। ख-म—त्वमेवमाचारपरीतदर्शना। घ-ङ—त्वमेव मे।
2. ख-घ-ङ-म—वयस्तुल्यवपुः।

प्रभूतरत्नोपहितं सुभाजनं
परैहि चाद्यैव ममोत्तमं गृहम् ।
प्रासादमालाग्रविशालतोरणं
कुबेरपर्जन्यनिवेशनोपमम् ॥ १३

[1]यदस्ति तत्रावसथे मदर्पणं
वसु प्रभावोपगतं ममान्तिके ।
ददामि तत् सर्वमधीरलोचने
त्वमस्य सर्वस्य सुगात्रि भाजनम् ॥ १४

देवं प्रपद्ये शरणं वृषध्वजं
त्रिलोचनं दक्षमखप्रणाशनम् ।
हरं भवं स्थाणुमुमापतिं विभुं
त्वयाऽद्य मे सुभ्रु ददातु सङ्गमम् ॥ १५

त्वया समागम्य च चारुलोचने
षडाननं द्वादशदीप्तलोचनम् ।
वरं वरार्हं वरदं [2]वरेण्यं
वरेण तुष्टो वरगात्रि तोषये ॥ १६

1. क—प्रभूतशय्यासनपानभोजनं ।
प्रविश्य तत्रैव सुखी चिरं भव॥ [अधिकः पाठः]

2. क-ख-घ-म—वरेश्वरं ।

अयं तु राजा परसैन्यवारणः
स्यालः प्रियत्वान्मम चाद्य [1]भामिनि ।
करिष्यते काम[2]मिमं यथेष्टतो
[3]ह्यलीककर्णाग्रधरोऽस्मि तस्य वै ॥ १७
अप्राप्य तु त्वामहमद्य शोभने
श्रियं समृद्धामिव पापमाचरन् ।
व्रजेयमिन्द्रस्य निवेशनं शुभे
त्वया विसृष्टो ह्यपुनर्भवां गतिम् ॥ १८
प्रियांश्च दारान् ससुतान् कुलं धनं
यशश्च कीर्तिं ह्यथवाऽपि जीवितम् ।
त्यजामि सर्वं सुकृतं तु यत्कृतं
प्रिये त्वदर्थं तु जिजीविषाम्यहम् ॥ १९
अवारयन्तं बलशोकमुद्धतं
समुद्रवेगोपममातुरं भृशम् ।
भजस्व मामद्य शुभेन चेतसा
यथा न शुष्ये न तपाम्यचेतनः ॥ २०
यथा न गच्छेयमहं यमक्षयं
तथा कुरुष्वाशु विशाललोचने ।

1. क-म—मेदिनीं । च—भामिनीम् ।
2. क-ख-च-म—मयं ।
3 क-ख-ङ-घ-म—ह्यनीक । च—ह्यनीककण्ठाग्रसरो ।

अहं हि कान्ते त्वदधीनजीवितस्
त्वया [1]विमुक्तो न चिरं जिजीविषे ॥* २१

वैशम्पायनः—

एवमुक्ताऽनवद्याङ्गी कीचकेन दुरात्मना ।
द्रौपदी तमुवाचेदं सैरन्ध्रीवेषधारिणी ॥ २२

द्रौपदी—

अप्रार्थनीयां कामार्तस् सूतपुत्राभिमन्यसे ।
चतुर्थवर्णां सैरन्ध्रीं [2]निर्हीनां केशकारिकाम् ॥ २३

एतेनैव च यत्नेन वित्तेन च मनोरमा ।
अन्या शक्या त्वया प्राप्तुं स्वजातिकुलवर्धनी ॥ २४

स्वेषु दारेषु मेधावी कुरुते यत्नमुत्तमम् ।
स्वदारनिरतो ह्याशु नरो भद्राणि पश्यति ॥ २५

न चाधर्मेण लिप्येत न चाकीर्तिमवाप्नुयात् ।
स्वदारेषु रतिर्धर्मो मृतस्यापि न संशयः ॥ २६

स्वजातिदारा मर्त्यस्य इह लोके परत्र च ।
प्रेतकार्याणि कुर्वन्ति निवापैस्तर्पयन्ति च ॥ २७

तदक्षय्यं च धर्म्यं च स्वर्ग्यमाहुर्मनीषिणः ॥ २७॥

---

1. क-ख-ङ-च—वियुक्तो ।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
2. क-ख-ङ-च-म—विहीनां । घ—विघृतां ।

[1]स्वजातिदारजाः पुत्रा जायन्ते कुलपूजिताः ॥ २८

ते क्षेत्रजाश्च पित्र्याश्च श्रूयन्ते कुलवर्धनाः ।

तस्मात् स्वदारनिरता भवन्ति पुरुषाश्शुभाः ॥ २९

प्रिया हि प्राणिनां दारास् तस्मात् त्वं धर्मभाग्भव ॥ २९॥

[2]परदाररतो मर्त्यो न च भद्राणि पश्यति ।

न च धर्मेण लिप्येत न च कीर्तिमवाप्नुयात् ॥ ३०॥

परदारे न ते बुद्धिर् जातु कार्या कथञ्चन ।

विवर्जनमकार्याणाम् एतत् सत्पुरुषव्रतम् ॥ ३१॥

[3]मिथ्याभिलाषी च नरः पापात्मा मोहसंस्थितः ।

अधर्ममयशश्चापि प्राप्नुयाच्च महद्भयम् ॥ ३२॥

परदारास्मि भद्रं ते नाहं शक्या त्वया सदा ।

स्प्रष्टुं द्रष्टुं तथा प्राप्तुं कामदग्धेन चेतसा ॥ ३३॥

मां हि त्वमवमन्वानस् सूतपुत्र विनङ्क्ष्यसि ।

आशु चाद्यैव न चिरात् सपुत्रस्सहबान्धवः ॥ ३४॥

दुर्लभामभिमन्वानो मां वीरैरभिरक्षिताम् ।

पतिष्यस्यवशस्तूर्णं वृन्तात् तालफलं यथा ॥ ३५॥

न चाप्यहं त्वया शक्या स्प्रष्टुं दुष्टेन चेतसा ।

---

1. च—कोशे इदमर्धं नास्ति ।
2. ङ-च-म—श्लोकोऽयं नास्ति ।
3. क-ख-घ-ङ-च-म—मिथ्याभिलाषी हि नरः कामात्मा मोहमास्थितः।

कामवेगोद्धताङ्गेन गन्धर्वाः पतयो मम ॥ ३६॥

ते त्वां निहन्युः कुपितास् सानुबन्धममर्षणाः ।
[1]सीतार्थं हि दशग्रीवं यथा रामस्सबान्धवम् ॥ ६७॥

पतिष्यसि तथा मूर्ख पाताले क्रूरदर्शने ।
यथा निश्चेतनो बालस् तीरस्थः कूपमुत्तरन् ॥ ३८॥

यथा लङ्घितुमिच्छेत तथैव त्वं मनोऽ[2]दधाः ॥ ३९

अभव्यरूपैः पुरुषैर् अध्वानं गन्तुमिच्छसि ॥ ३९॥

यो मामज्ञाय कामार्त अबद्धानि प्रभाषसे ।
अशक्तस्तु पुमा[3]ञ्शीलं न लङ्घयितुमर्हति ॥ ४०॥

पतन् हि पातालमुखे महोदधौ
क्षितिं प्रविष्टो यदि चोर्ध्वमुत्पतेत् ।
दिशः प्रपन्नो गिरिगह्वराणि वा
गुहां प्रविष्टोऽन्तरितोऽपि वा क्षितेः ॥ ४१॥

[4]जुह्वञ्जपन् वा प्रपतन् गिरेस्तटा-
द्धुताशनादित्यगतिं गतोऽपि वा ।

1. क-घ—सीतार्थं हि दशग्रीवं सानुबन्धममर्षिणम् ।
रामो हत्वा तु मुदितस् तथा त्वां पतयो मम ।[अधिकः पाठः]

2. क-ख-घ-ङ-म—गतम् ।

3. घ-म—ञ्छैलं । घ—श्चावं ।

4. घ—जुषद्गुहां वा खगवद्गिरेस्तटे ।

[1]भार्याभिमन्ता पुरुषो महात्मनां
न जातु मुच्येत कथञ्चनाहतः ॥ ४२॥
मोघं तवेदं वचनं भविष्यति
प्रतोलनं वा तुलया महागिरेः ।
त्वं तारकाणामधिपं यथा शिशुं
[2]मां बालवत् प्रेप्ससि दुर्लभां सतीम् ॥ ४३॥
दाराभिमर्शी पुरुषो महात्मनां
गत्वाऽपि देवाञ्छरणं न विन्दति ।
इमां मतिं कीचक मुञ्च कामिनां
मा नीनशो जीवितमात्मनः प्रियम् ॥ ४४॥
त्वं कालपाशं प्रतिमुच्य कण्ठे
प्रवेष्टुमिच्छस्यथ दुष्प्रवेशनम् ।
हुताशनं प्रज्वलितं महावने
निदाघमध्याह्न इवातुरस्त्वयम् ॥ ४५॥
प्रवेष्टुकामोऽसि वधाय चात्मनः
कुलस्य [3]सर्वस्य विनाशनाय च ।
[4]सदेवगन्धर्वमहर्षिसंनिधौ
[5]सनागलोकासुरराक्षसालये ॥ ४६॥

---

1. क-च—भार्यावमन्ता। 2. क—न मां बलात्प्राप्स्यसि ।
3. च—धर्मस्य । 4. ख-घ-ङ-च—न
5. ख-घ-ङ-च-म—न नागलोकासुर।

गूढस्थितां मामवमत्य चेतसा
न जीवितार्थी शरणं त्वमाप्स्यसि ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ४६ ॥ कीचकवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ४७ श्लोकाः]

## ॥ पञ्चदशोऽध्यायः ॥

कीचकेन सुदेष्णां प्रति द्रौपद्याः स्ववशीकरणप्रार्थना ॥ १॥ सुदेष्णया कीचके सुराहरणव्याजेन तद्गृहं प्रति द्रौपदीप्रेषणप्रतिज्ञानम् ॥ २ ॥ तथा सुदेष्णाया बलात्कारेण द्रौपद्याः सुरानयनाय कीचकगृहं प्रति गमनचोदना ॥ ३ ॥

वैशम्पायनः—
प्रत्याख्यातश्च पाञ्चाल्या कीचकः काममोहितः ।
प्रविश्य राजभवनं भगिन्याश्चाग्रतस्स्थितः ॥ १

सोऽभिवीक्ष्य सुकेशान्तां सुदेष्णां भगिनीं प्रियाम् ।
अमर्यादेन कामेन [1]घोरेणाभिपरिप्लुतः ॥ २

स तु मूर्ध्नयञ्जलिं कृत्वा भगिन्याश्चरणावुभौ ।
सम्मोहाभिहतस्तूर्णं वातोद्धूत इवार्णवः ॥ ३

स प्रोवाच सुदुःखार्तो भगिनीं निश्वसन् मुहुः ।

1. क—स्वचित्तेऽभि ।　　म—स चित्तोऽभि ।

अव्यक्तमृदुना साम्ना शुष्यता च पुनः पुनः ॥ ४

कीचकः—

यथा सुदेष्णे सैरन्ध्र्या सङ्गच्छेयं सकामया ।
तथा शीघ्रं कुरुष्वाद्य माऽहं प्राणान् प्रहासिषम् ॥ ५

यदीयमनवद्याङ्गी न मामद्यापि काङ्क्षते ।
चेतसाऽभिप्रसन्नेन गतोऽस्मि यमसादनम् ॥ ६

वैशम्पायनः—

तमुवाच परिष्वज्य सुदेष्णा भ्रातरं प्रियम् ॥ ६॥

[1]सुदेष्णा—

शरणागतेयं सुश्रोणी मया दत्ताभया च सा ।
शुभाचारा च भद्रं ते नैनां वक्तुमिहोत्सहे ॥ ७॥

नैषा च शक्या ह्यन्येन स्प्रष्टुं [2]दुष्टेन चेतसा ।
गन्धर्वाः किल पञ्चैनां रक्षन्ति रमयन्ति च ॥ ८॥

एवमेषा [3]ममाचष्टे तथा प्रथमसङ्गमे ॥ ९

तथैव गजनासोरूस् सत्यमाह ममान्तिके ।
ते हि क्रुद्धा महात्मानो नाशयेयुर्हि जीवितम् ॥ १०

राजा चैव समीक्ष्यैनां सम्मोहं गतवानिह ।

---

1. ख—भ्रातुर्जीवितरक्षार्थं समाश्वास्यासितेक्षणा ।
[अधिकःपाठः]

2. क-घ-ख—पापेन । 3. ग-ङ-च-म—समाचष्ट ।

मया च सत्यवचनैर् अनुनीतो महीपतिः ॥ ११

सोऽप्येनामनिशं दृष्ट्वा मनसैवाभ्यनन्दत ।
भयाद्गन्धर्वमुख्यानां जीवितस्योपघातिनाम् ॥ १२
मनसाऽपि ततस्त्वेनां न चिन्तयति पार्थिवः ॥ १२॥

ते हि क्रुद्धा महात्मानो गरुडानिलतेजसः ।
दहेयुरपि लोकांस्त्रीन् युगान्तेष्विव भास्करः ॥ १३॥

सैरन्ध्र्या ह्येतदाख्यातं मम तेषां महद्बलम् ।
तव चाहमिदं गुह्यं स्नेहादाख्यामि बन्धुवत् ॥ १४॥

मा गमिष्यसि वै कृच्छ्रां गतिं परमदुर्गमाम् ।
बलिनस्ते रुजं कुर्युः कुलस्य च [1]धनस्य च ॥ १५॥

तस्मादस्यां मनः कर्तुं यदि प्राणाः प्रियास्तव ।
मा चिन्तयेथा मा गास्त्वं मत्प्रियं च यदीच्छसि ॥ १६॥

वैशम्पायनः—

एवमुक्तस्तु दुष्टात्मा भगिनीं कीचकोऽब्रवीत् ॥ १७

कीचकः—

गन्धर्वाणां शतं वाऽपि सहस्रमयुतानि वा ।
अहमेको हनिष्यामि गन्धर्वान् पञ्च किं पुनः ॥ १८
न च त्वमभिजानीषे स्त्रीणां गुह्यमनुत्तमम् ॥ १८॥

---

1. क-ख-घ-म—जनस्य ।

पुत्रं वा किल पौत्रं वा भ्रातरं वा मनस्विनम् ।
रहसीह नरं दृष्ट्वा नानागन्धविभूषितम् ॥ १९॥
योनिरुत्क्लिद्यते स्त्रीणाम् असतीनामिति श्रुतम् ॥ २०
सा त्वं दृष्ट्वा ब्रूहि चैनां मम चेज्जीवितं प्रियम् ॥ २०॥

वैशम्पायनः—

एवमुक्ता सुदेष्णा तु शोकेनाभिप्रपीडिता ।
अहो दुःखमहो कृच्छ्रम् अहो पापमिति स्म ह ॥ २१॥
प्रारुदद्भृशदुःखार्ता विपाकं तस्य वीक्ष्य सा ॥ २२

सुदेष्णा—

पातालेषु पतत्येष विलपन् वडवामुखे ।
त्वत्कृते विनशिष्यन्ति भ्रातरस्सुहृदश्च मे ॥ २३

किं नु शक्यं मया कर्तुं यत् त्वमेवमभीप्सितः ।
न च श्रेयोऽभिजानीषे काममेवानुवर्तसे ॥ २४

ध्रुवं गतायुस्त्वं पाप यदेवं काममोहितः ।
अकर्तव्ये हि मां पापे नियुनक्षि नराधम ॥ २५

अपि चैतत् पुरा प्रोक्तं निपुणैर्मनुजोत्तमैः ।
एकस्तु कुरुते पापं स्वजातिस्तेन हन्यते ॥ २६

गतस्त्वं धर्मराजस्य विषयं नात्र संशयः ।
अदूषितमिमं सर्वं स्वजनं घातयिष्यसि ॥ २७

एतत्तु मे दुःखतरं येनाहं भ्रातृसौहृदात् ।
विदितार्थो [1]भविष्यामि तुष्टो भव कुलक्षयात् ॥ २८

गच्छ शीघ्रमितस्त्वं हि स्वमेव भवनं शुभम् ।
किञ्चित् कार्यं समुद्दिश्य सुरामन्नं च कारय ॥ २९

कृते चान्ने सुरायां च प्रेषयिष्यसि मे पुनः ।
तामहं प्रेषयिष्यामि मध्वन्नार्थं तवान्तिकम् ॥ ३०

ततस्सम्प्रेषितामेनां विजने निरवग्रहाम् ।
सान्त्वयेथा यथान्यायं यदि [2]सा च सहिष्यति ॥ ३१

सद्यः कृतमिदं सर्वं शेषमत्रानुचिन्तय ॥ ३१॥

वैशम्पायनः—

सुदेष्णयैवमुक्तस्तु कीचकः कालचोदितः ।
त्वरमाणः प्रचक्राम स्वगृहं राजवेश्मनः ॥ ३२॥

आगम्य च गृहं रम्यं सुरामन्नं चकार ह ।
अजैडकं च सुकृतं बहूंश्चोच्चावचान् मृगान् ॥ ३३॥

[3]भक्षांश्च विविधाकारान् बहूंश्चोच्चावचांस्तदा ।
कारयामास कुशलैर् अन्नपानं सुसंस्कृतम् ॥ ३४॥

त्वरावान् कालपाशेन कण्ठे बद्धः पशुर्यथा ।

1. क-ख-घ—करिष्यामि ।
2. क-ङ—सा स । ख-म—साम । घ—सा मे सहिष्यसि ।
3. म—इदमर्धं नास्ति ।

नावबुध्यत मूढात्मा मरणं समुपस्थितम् ॥ ३५॥

आनीतायां सुरायां तु कृते पान्ने सुसंस्कृते ।
कीचकः पुनरागम्य सुदेष्णां वाक्यमब्रवीत् ॥ ३६॥

कीचकः—

मधु मांसं बहुविधं भक्ष्याश्च विविधाः कृताः ।
सुदेष्णे ब्रूहि सैरन्ध्रीं यथा सा मे गृहं व्रजेत् ॥ ३७॥

केनचित्त्वद्य कार्येण त्वर शीघ्रं मम प्रियम् ॥ ३८

अहं हि शरणं देवं प्रपद्ये वृषभध्वजम् ।
समागमं मे सैरन्ध्र्या मरणं वा [1]दिशेति वै ॥ ३९

वैशम्पायनः—

सा तमाह विनिश्श्वस्य प्रतिगच्छ स्वकं गृहम् ।
[2]एषाऽहमपि सैरन्ध्रीं सुरार्थे तूर्णमादिशे ॥ ४०

एवमुक्तस्तु पापात्मा कीचकस्त्वरितः पुनः ।
स्वगृहं प्राविशत् तूर्णं सैरन्ध्रीगतमानसः ॥ ४१

कीचकं तु गतं ज्ञात्वा त्वरमाणं स्वकं गृहम् ।
सैरन्ध्रीं तत आहूय सुदेष्णा वाक्यमब्रवीत् ॥ ४२

सुदेष्णा—

गच्छ सैरन्ध्रि मत्प्रीत्यै कीचकस्य निवेशनम् ।
सुरामानय सुश्रोणि तृषिताऽहं विलासिनि ॥ ४३

---

1. क-म—द्दिशेदिति। घ—दिदेश ह।
2. ग-ङ-च-म – श्लोकद्वयं नास्ति।

वैशम्पायनः—

सुदेष्णयैवमुक्ता सा निश्श्वसन्ती नृपात्मजा ।
अब्रवीच्छोकसन्तप्ता नाहं तत्र व्रजामि वै ॥ ४४

सूतपुत्रो हि मां भद्रे कामात्मा ह्यभिमन्यते ।
न गच्छेयमहं तस्य राजपुत्रि निवेशनम् ॥ ४५

त्वमेव भद्रे जानासि यथा स निरपत्रपः ॥ ४५॥
समयश्च कृतो भद्रे त्वया प्रथमसङ्गमे ।

तथा निवसमानायां यथाऽहं नान्यचारिणी ॥ ४६॥
कीचकश्च सुकेशान्ते मूढो मदन[1]गर्वितः ।

स मामिह गतां दृष्ट्वा [2]व्यवस्यति निराकृतः ॥ ४७॥
कथं नु वै तत्र गतां मर्षयेन्मामबान्धवाम् ॥ ४८

बह्व्यस्सन्ति तव प्रेष्या राजपुत्रि वशानुगाः ।
अन्यां प्रेषय कैकेयि संरक्ष्याऽहमिह त्वया ॥ ४९

कीचकस्यालयं देवि न यामि भयकम्पिता ।
यद्यस्त्यन्यच्च ते कर्म करोम्यतिसुदुष्करम् ॥ ५०

एवमुक्ता तु पाञ्चाल्या दैवयोगेन कैकयी ।
तां विराटस्य महिषी क्रुद्धा भूयोऽन्वशासत ॥ ५१

---

1. क-ख-घ-च-म –दर्पितः।
2. ख-ङ—व्यवस्यति निराकृतिम्। ञ—गृहीष्यति सुदुर्गतिः।

सुदेष्णा—

कीचकं चैव गच्छ त्वं बलात्कारेण चोदिता ।

नास्ति मेऽन्या त्वया तुल्या सा मे शीघ्रतरं व्रज ॥ ५२

अवश्यं त्वेव गन्तव्यं किमर्थं मां विवक्षसि ।

शीघ्रं गच्छ त्वरस्वेति मत्प्रीतिवशमाचर ॥ ५३

न हीदृशो मम भ्राता किं त्वं समभिशङ्कसे ॥ ५३॥

वैशम्पायनः—

उक्त्वा चैनां बलाच्चैव विनियुज्य प्रभुत्वतः ।

भाजनं प्रददौ चास्यै सापिधानं हिरण्मयम् ॥ ५४॥

या सुजाता सुगन्धा च तामानय सुरामिति ॥ ५५

सा शङ्कमाना रुदती वेपन्ती द्रुपदात्मजा ।

दैवतेभ्यो [1]नमस्कृत्य श्वशुरेभ्यस्तथाऽब्रवीत् ॥ ५६

द्रौपदी—

यथाऽहमन्यं पार्थेभ्यो नाभिजानामि मानवम् ।

तेन सत्येन मां दृष्ट्वा कीचको मा वशं नयेत्[2] ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि पञ्चदशोऽध्यायः ॥ १५॥

॥ ७६ ॥ कीचकवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ५७ श्लोकाः]

---

1. च-म—नमस्कृत्वा ।

2. घ-ङ-च-म—यथाऽहं पाण्डुपुत्रेभ्यः पञ्चभ्यो नान्यगामिनी ।
तेन सत्येन मां दृष्ट्वा कीचको मा वशं नयेत् ॥ [अधिकः पाठः]

## ॥ षोडशोऽध्यायः ॥

कीचकगृहं प्रति प्रस्थितया द्रौपद्या तेन स्वस्या अदूषणाय सूर्यादिदेवताप्रार्थना ॥१॥ सूर्येण तद्रक्षणाय निगूढस्य रक्षसः प्रेषणम् ॥२॥ कीचकेन द्रौपदीं प्रति स्ववशीभवनयाचनम् ॥ ३ ॥ तथा तदनङ्गीकाररोषात्तस्याः पादेन ताडनम् ॥ ४ ॥ सूर्यवृतेन रक्षसा कीचकस्य भूमौ निपातनम् ॥ ५ ॥ युधिष्ठिरेण कीचकजिघांसोर्भीमस्य सङ्केतेन प्रतिषेधनम् ॥ ६ ॥ विराटेन कीचकस्य दण्डाप्रयोगाद् रुष्टया द्रौपद्या तं प्रत्युपालम्भनम् ॥७॥ युधिष्ठिरेण द्रौपद्याः सान्त्वनम् ॥ ८ ॥ द्रौपद्याऽज्ञानादिव स्वशोकहेतुं पृच्छन्तीं सुदेष्णां प्रति गन्धर्वैः कीचकवधस्य भावित्वकथनम् ॥ ९ ॥ कीचकोत्पत्तिकथनम् ॥ १० ॥

---

वैशम्पायनः—

अकीर्तयत सुश्रोणी धर्मं शक्रं दिवाकरम् ।
मारुतं चाश्विनौ देवौ कुबेरं वरुणं यमम् ॥ १

रुद्रमग्निं [1]भवं विष्णुं स्कन्दं पूषणमेव च ।
सावित्रीसहितं चापि ब्रह्माणं पर्यकीर्तयत् ॥ २

इत्येवं मृगशावाक्षी सुश्रोणी धर्मचारिणी ।
उपातिष्ठत सा सूर्यं मुहूर्तमबला तदा ॥ ३

तदस्यास्तनुमध्यायास् सर्वं सूर्योऽवबुद्धवान् ।
अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् ॥ ४
तच्चैनां नाजहात् तत्र सर्वावस्थास्वनिन्दिताम् ॥ ४॥

सा प्रतस्थे सुकेशान्ता त्वरमाणा पुनः पुनः ।

---

1. क-ख-घ-च-म—भगं ।

विलम्बमाना विवशा कीचकस्य निवेशनम् ॥ ५॥
तां मृगीमिव वित्रस्तां कृष्णां दृष्ट्वा समागताम् ।
उत्पपातासनात् तूर्णं नावं लब्ध्वेव पारगः ॥ ६॥
श्लक्ष्णं चोवाच वाक्यं स कीचकः काममूर्च्छितः ॥ ७

कीचकः—

स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम ।
साधु मे त्वमनुप्राप्ता चिरस्य भवनं शुभे ॥ ८
कुरुष्व च मयि प्रीतिं वशं चोपानयस्व माम् ।
प्रतिगृह्णीष्व मे भोगांस् त्वदर्थमुपकल्पितान् ॥ ९
सर्वरुक्ममयीं मालां कुण्डले च हिरण्मये ।
वासांसि चन्दनं माल्यं धूपशुद्धां च वारुणीम् ॥ १०
[1]प्रतिगृह्णीष्व भद्रं ते विहर त्वं यथेच्छसि ॥ १०॥
प्रीत्या मे कुरु पद्माक्षि प्रसादं प्रियदर्शने ॥ ११
स्वास्तीर्णमस्मच्छयनं सितसूक्ष्मोत्तरच्छदम् ।
अत्रारुह्य मया सार्धं पिबेमां वरवारुणीम् ॥ १२
भजस्व मां विशालाक्षि भर्ता ते सदृशोऽस्म्यहम् ।
उपसर्प वरारोहे मेरुमर्कप्रभा यथा ॥ १३

वैशम्पायनः—

स मूढः कीचकस्तत्र प्राप्तां राजीवलोचनाम् ।

---

1. ङ—इतः श्लोकत्रयं नास्ति ।

अब्रवीद्द्रौपदीं दृष्ट्वा दुरात्मा ह्यात्मसम्मतः ॥ १४

कीचकेनैवमुक्ता तु द्रौपदी वरभाषिणी ।
अब्रवीन्न ममाचारम् ईदृशं वक्तुमर्हसि ॥ १५

नाहं शक्या त्वया स्प्रष्टुं [1]निषादेनेव ब्राह्मणी ।
मा गमिष्यसि दुर्बुद्धे गतिं [2]दुर्गान्तरान्तराम् ॥ १६

यत्र गच्छन्ति बहवः परदाराभिमर्शकाः ।
नरास्सम्भिन्नमर्यादाः कीटवच्च गुहाशयाः ॥ १७

अप्रैषीन्मां सुराहारीं सुदेष्णा त्वन्निवेशनम् ।
तस्यै नयिष्ये मदिरां भगिनी तृषिता तव ॥ १८

पिपासिता च कैकेयी तूर्णं मामादिशत् ततः ।
दीयतां मे सुरा शीघ्रं सूतपुत्र व्रजाम्यहम् ॥ १९

कीचकः—

अन्या भद्रे हरिष्यन्ति राजपुत्र्यास्सुरामिमाम् ।
किं त्वं यास्यसि सुश्रोणि मदर्थं त्वमिहागता ॥ २०

वैशम्पायनः—

इत्युक्त्वा दक्षिणे पाणौ सूतपुत्रः परामृशत् ॥ २०॥

सा गृहीता विधून्वन्ती भूमौ निक्षिप्य भाजनम् ।

---

1. क-ख-घ—श्वपाकेनेव। ङ-च-म—श्वपचेनेव।
2. क—दुर्गान्तरान्तनाम्। ख—दुर्गांतरां त्वराद्।
अ-ङ-म—दुर्गतरान्तराम्।

सभां शरणमाधावद् यत्र राजा युधिष्ठिरः ॥ २१॥

[1]तां कीचकः प्रधावन्तीं केशपक्षे परामृशत् ।
पातयित्वा तु तां भूमौ सूतपुत्रः पदाऽवधीत् ॥ २२॥

सभायां पश्यतो राज्ञो विराटस्य महात्मनः ।
ब्राह्मणानां च वृद्धानां क्षत्रियाणां च पश्यताम् ॥ २३॥

तस्याः पादाभितप्ताया मुखाद्रुधिरमास्रवत् ॥ २४

ततो दिवाकरेणाशु राक्षसस्संनियोजितः ।
स कीचकमपोवाह वातवेगेन भारत ॥ २५

स पपात तदा भूमौ रक्षोबलसमीरितः ।
विघूर्णमानो निश्चेष्टश् छिन्नमूल इव द्रुमः ॥ २६

तां दृष्ट्वा तत्र ते सभ्या हाहाभूतास्समन्ततः ।
न युक्तं सूतपुत्रेति कीचकेति च मानवाः ॥ २७
किमियं वध्यते बाला कृपणा चाप्यबान्धवा ॥ २७॥

[2]तस्यामासन् हि ते पार्थास् सभायां भ्रातरस्तथा ।
अमृष्यमाणाः कृष्णायाः कीचकेन पदा वधम् ॥ २८॥

तां दृष्ट्वा भीमसेनस्य क्रोधादास्रमवर्तत ।

---

1. अ-ङ-च-म—इदमर्धं नास्ति ।
2. म—ताव्रासीनौ ददृशतुर्युधिष्ठिरवृकोदरौ ।
अमृष्यमाणौ कृष्णायाः कीचकेन पदा वधम् ॥ [अधिकः पाठः]

धूमोच्छ्वासस्समभवन्नेत्रे चोच्छ्रितपक्ष्मणी । २९॥
सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत ॥ ३०

तस्य भीमो वधप्रेप्सुः कीचकस्य दुरात्मनः ।
[1]दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः ॥ ३१

भूयस्संत्वरितः क्रुद्धस् सहसोत्थाय चासनात् ।
[2]निरैक्षत द्रुमं दीर्घं राजानं चान्ववैक्षत ॥ ३२

वधमाकाङ्क्षमाणं तं कीचकस्य दुरात्मनः ।
आकारेणैव भीमं स प्रत्यषेधद्युधिष्ठिरः ॥ ३३

तस्य राजा शनैस्संज्ञां [3]कुन्तीपुत्रो युधिष्ठिरः ।
चकार [4]भीमसेनस्य पाण्डुपुत्रस्य धीमतः ॥ ३४

प्रत्याख्यानं तदा चाह कङ्को नाम युधिष्ठिरः ॥ ३४॥

कङ्कः—

सूद मा साहसं कार्षीः फलितोऽयं वनस्पतिः ।
नात्र शुष्काणि काष्ठानि साधनीयानि कानि चित् ॥ ३५॥

यदि ते दारुकृत्यं स्यान्निष्क्रम्य नगराद्बहिः ।
समूलं शातयेर्वृक्षं श्रमस्ते न भविष्यति ॥ ३६॥

---

1. च—श्लोकोऽयं नास्ति ।
2. च—अभूत् सन्त्वरितः क्रुद्धस् सहसोत्थाय चासनात् । [अधिकः पाठः]
3. क-ख-म—कुर्वन् कुन्तीसुतोऽनघ ।
4. क—पाण्डुपुत्रस्य भीमस्यामिततेजसः ।
ख—भीमसेनस्य रोषाविष्टस्य ।

यस्य चार्द्रस्य वृक्षस्य शीतच्छायां समाश्रयेत् ।
न तस्य पर्णं द्रुह्येत पूर्ववृत्तमनुस्मरन् ॥ ३७॥
न क्रोधकालसमयस् सूद मा चापलं कृथाः ।
अपूर्णोऽयं द्विपक्षो नो नेदं बलवतां बहु ॥ ३८॥

वैशम्पायनः—

अथाङ्गुष्ठेनावमृद्नाद् अङ्गुष्ठं तत्र धर्मराट् ।
प्रबोधनभयाद्राजन् भीमस्य प्रत्यषेधयत् ॥ ३९॥
भीमसेनस्तु तद्वाक्यं श्रुत्वा परपुरञ्जयः ।
सहसोत्पतितं क्रोधं न्ययच्छद्धृतिमान् बलात् ॥ ४०॥
इङ्गितज्ञस्स तु भ्रातुस् तूष्णीमासीद्वृकोदरः ॥ ४१
भीमस्य तु समारम्भं दृष्ट्वा राज्ञश्च चेष्टितम् ।
द्रौपद्यभ्यधिकं क्रुद्धा प्रारुदत् सा पुनः पुनः ॥ ४२
कीचकेनानुगमनात् कृष्णा ताम्रायतेक्षणा ।
सभाद्वारमुपागम्य रुदन्ती वाक्यमब्रवीत् ॥ ४३
अवेक्षमाणा सुश्रोणी पतींस्तान् दीनचेतसः ।
आकारं परिरक्षन्ती प्रतिज्ञां धर्मसंयुताम् । ४४
दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ॥ ४४॥

द्रौपदी—

प्रजारक्षणशीलानां राज्ञां ह्यमिततेजसाम् ।

[1]कार्यं हि पालनं नित्यं धर्मे सत्ये च तिष्ठताम् ॥ ४५॥

स्वप्रजायां प्रजायां च विशेषं नाधिगच्छताम् ॥ ४६

प्रियेष्वपि च द्वेष्येषु समत्वं ये समाश्रिताः ॥ ४६॥

विवादेषु प्रवृत्तेषु समं कार्यानुदर्शिना ।
राज्ञा धर्मासनस्थेन जितौ लोकावुभावपि ॥ ४७॥

[2]राजन् धर्मासनस्थोऽसि रक्ष मां त्वमनागसीम् ॥ ४८

अहं त्वनपराध्यन्ती कीचकेन दुरात्मना ।
पश्यतस्ते महाराज हता पादेन दासिवत् ॥ ४९

त्वत्समक्षं नृपश्रेष्ठ निष्पिष्टा वसुधातले ।
अनागसीं कृपार्हां मां स्त्रियं त्वं परिपालय ॥ ५०

रक्ष मां कीचकाद्भीतां धर्मं रक्ष जनेश्वर ।
मत्स्याधिप प्रजा रक्ष पिता पुत्रानिवौरसान् ॥ ५१

यस्त्वधर्मेण कार्याणि मोहात्मा कुरुते नृपः ।
अचिरात् तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥ ५२

---

1. ङ—कार्यानुपालिनां ।
क—कार्यानुपालनाचियं धर्मे च सत्ये तिष्ठता ।
ख—कार्यानुपालने ।
च—कार्यानुपालनं (च) मर्यादापालनाचितं ।
2. अ—राज्ञा धर्मासनस्थोऽपि

मत्स्यानां कुलजस्त्वं हि तेषां सत्यं परायणम् ।
त्वं किलैवंविधो जातः कुले धर्मपरायणे ॥ ५३
अतस्त्वाऽहमभिक्रन्दे शरणार्थं नराधिप ।
त्राहि मामद्य राजेन्द्र कीचकात् पापपूरुषात् ॥ ५४
[1]अनाथामिह मां ज्ञात्वा कीचकः पुरुषाधमः ।
प्रहरत्येव नीचात्मा न तु धर्ममवेक्षते ॥ ५५
अकार्याणामनारम्भात् कार्याणामनुपालनात् ।
प्रजासु ये प्रवृत्तास्ते स्वर्गमायान्ति भूमिपाः ॥ ५६
कार्याकार्यविशेषज्ञाः कामकारेण पार्थिव ।
प्रजासु किल्बिषं कृत्वा नरकं यान्त्यधोमुखाः ॥ ५७
नैव यज्ञैर्न वा दानैर् न गुरोरुपसेवया ।
प्राप्नुवन्ति तथा धर्मं यथा कार्यानुपालनात् ॥ ५८
अपि चैतत् पुरा ब्रह्मा प्रोवाचेन्द्राय पृच्छते ।
द्वन्द्वं कार्यमकार्यं च लोके ह्यासीत् परं यथा ॥ ५९
धर्माधर्मौ पुनर्द्वन्द्वं विनियुक्तमथापि वा ।
[2]क्रियाणामक्रियाणां च प्रापणे पुण्यपापयोः ॥ ६०
प्रजायां सृज्यमानायां पुरा ह्येतदुदाहृतम् ।

---

1. क-च—अर्धत्रयं नास्ति ।
2. क—अक्रियायाः क्रियायाश्च । ख—क्रियायामक्रियायां च ।
 च—क्रियमाणं क्रियाणां च ।

एतद्वो मानुषास्सम्यक् कार्यं द्वन्द्वत्रयं भुवि ॥ ६१

अस्मिन् सुनीते दुर्नीते लभते कर्मजं फलम् ।

कल्याणकारी कल्याणं पापकारी च पापकम् ॥ ६२

तेन गच्छति संसर्गं स्वर्गाय नरकाय वा ।

सुकृतं दुष्कृतं वाऽपि कृत्वा मोहेन मानवः ॥ ६३

पश्चात्तापेन तप्येत स्वबुद्ध्या मरणं गतः ॥ ६३॥

एवमुक्त्वा परं वाक्यं विससर्ज शतक्रतुम् ।

शक्रोऽप्यापृच्छ्य ब्रह्माणं देवराज्यमपालयत् ॥ ६४॥

यथोक्तं देवदेवेन ब्रह्मणा परमेष्ठिना ।

तथा त्वमपि राजेन्द्र कार्याकार्ये [1]स्थिरो भव ॥ ६५॥

वैशम्पायनः—

एवं विलपमानायां पाञ्चाल्यां मत्स्यपुङ्गवः ।

अशक्तः कीचकं तत्र शासितुं बलदर्पितम् ॥ ६६॥

विराटराजस्सूतं तु सान्त्वेनैव न्यवारयत् ॥ ६७

कीचकं मत्स्यराजेन कृतागसमनिन्दिता ।

नापराधानुरूपेण दण्डेन प्रतिपादितम् ॥ ६८

पाञ्चालराजस्य सुता दृष्ट्वा सुरसुतोपमा ।

धर्मज्ञा व्यवहाराणां कीचकं कृतकिल्बिषम् ॥ ६९

---

1. अ-ङ-च-म—स्थितो ।

पुनः प्रोवाच राजानं स्मरन्ती धर्ममुत्तमम् ॥ ६९॥

सम्प्रेक्ष्य च वरारोहा सर्वांस्तत्र सभासदः ।
[1]विराटं चाह पाञ्चाली दुःखेनाविष्टचेतना ॥ ७०॥

द्रौपदी—

न राजन् राजवत् किञ्चित् समाचरसि कीचके ।
दस्यूनामिव ते धर्मो न सत्सु परिवर्तते ॥ ७१॥

न कीचकस्स्वधर्मस्थो न च मात्स्यः कथञ्चन ।
सभासदोऽप्यधर्मज्ञा य इमं पर्युपासते ॥ ७२॥

न धर्मं कीचको वेत्ति राजभृत्यास्तथैव च ।
न राजा विनयं ब्रूते अमात्याश्च न जानते ॥ ७३॥

नोपालभे त्वां नृपते विराटं नृपसंसदि ।
नाहमेतेनं युक्ता वै हन्तुं मात्स्य तवान्तिके ॥ ७४॥

सभासदस्तु पश्यन्तु कीचकं धर्मलङ्घकम् ।
विराटनृपते पश्य मामनाथामनागसीम्[2] ॥ ७५॥

---

1. ख—राजानुवर्तनपरान् कीचकं च कृतागसम् । [अधिकः पाठः]
2. ख— न साम फलते दुष्टे दुष्टे दण्डः प्रयुज्यते ॥
अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
स राजा न भवेल्लोके राजशब्दस्य भाजनम् ॥
दीनान्धकृपणानाथपङ्गुकुब्जजडादिकान् ।
अनाथबालवृद्धांश्च पुरुषान् वा स्त्रियोऽपि वा ॥

विराटः—

परोक्षं नाभिजानामि विग्रहं युवयोरहम् ।
अर्थतत्त्वमविज्ञाय किं स्यादकुशलं मम ॥ ७६॥

द्रौपदी—

येषां न वैरी स्वपिति पदा भूमिमुपस्पृशन् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥ ७७॥

ये च दद्युर्न याचेयुर् ब्रह्मण्यास्सत्यवादिनः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥ ७८॥

येषां दुन्दुभिनिर्घोषो ज्याघोषश्श्रूयतेऽनिशम् ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ ७९॥

तेजस्विनस्तथा क्षान्ता बलवन्तश्च मानिनः ।
महेष्वासा रणे शूरा गर्विता मानतत्पराः ॥ ८०॥

तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ ८१

---

पूर्वतोऽनुवृत्तम्—

दुष्टचोराभिभूतांश्च पालयेदवनीपतिः ।
अनाथानां च नाथस्स्याद् अपितॄणां पिता नृपः ॥
माता भवेदमातॄणामगुरूणां गुरुर्भवेत् ।
अगतीनां गती राजन् नृणां राजा परायणम् ॥
विशेषतः परैर्दुष्टैः परामृष्टां नरोत्तमः ।
स्त्रियं साध्वीमनाथां च पालयेत् स्वसुतामिव ॥
स्वगृहे वसतीं राजन्नेतावत्कालपर्ययम् ।
अधिकां त्वत्सुतायाश्च पश्य मां कीचकाहताम् ॥ [अधिकः पाठः]

सर्वलोकमिमं हन्युर् यदि क्रुद्धा महाबलाः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥ ८२

शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम् ।
चरन्ति लोके प्रच्छन्नाः क नु तेऽद्य महाबलाः ॥ ८३

कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम् ।
मर्षयन्ति यथा क्लीबा बलवन्तोऽतितेजसः ॥ ८४

क नु तेषाममर्षश्च वीर्यं तेजश्च तद्बलम् ।
न परीप्सन्ति ये भार्यां वध्यमानां दुरात्मना ॥ ८५

मयाऽपि शक्यं किं कर्तुं विराटे धर्मदूषणे ।
मां मर्षयति यः पश्यन् वध्यमानामनागसीम् ॥ ८६

धर्मो विद्धो ह्यधर्मेण सभां यत्रोपतिष्ठति ।
न चेद्विशल्यः क्रियते सर्वे विद्धास्सभासदः ॥ ८७

यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ ८८

वैशम्पायनः—

ततस्सभ्यास्तु ते सर्वे भूयः कृष्णामपूजयन् ।
साधु साध्विति चाप्याहुः कीचकं चाप्यगर्हयन् ॥ ८९

केचित् कृष्णां प्रशंसन्ति केचिन्निन्दन्ति कीचकम् ।
केचिन्निन्दन्ति राजानं केचिद्देवीं च ते नराः ॥ ९०

सम्याः—

यस्येयं चारुसर्वाङ्गी भार्या स्यादायतेक्षणा ।
परो लाभस्स तस्य स्यान्न स शोचेत् कदाचन ॥ ९१

यस्या गात्रं शुभं [1]पीनं मुखं जयति पङ्कजम् ।
गतिर्हंसं स्मितं कुन्दं सैषा नार्हति पद्वधम् ॥ ९२

[2]द्वात्रिंशद्दशना यस्याश् श्वेता मांसनिबन्धनाः ।
स्निग्धाश्च मृदवः केशास् सैषा नार्हति पद्वधम् ॥ ९३

पद्मं चक्रं ध्वजं शङ्खं प्रासादो मकरस्तथा ।
यस्याः पाणितले सन्ति सैषा नार्हति पद्वधम् ॥ ९४

आवर्ताः खलु चत्वारस् सर्वे चैव प्रदक्षिणाः ।
समं गात्रं शुभं स्निग्धं यस्या नार्हति पद्वधम् ॥ ९५

अच्छिद्रहस्तपादा च अच्छिद्रदशना च या ।
कन्या कमलपत्राक्षी कथमर्हति पद्वधम् ॥ ९६

सेयं लक्षणसम्पन्ना पूर्णचन्द्रनिभानना ।
सुरूपिणी सुवदना नेयं योग्या पदा वधम् ॥ ९७

देवदेवीव सुभगा शक्रदेवीव शोभना ।
अप्सरा इव सारूप्यान्नेयं योग्या पदा वधम् ॥ ९८

---

1. अ-च—हीनं । ख-घ—स्फीतं ।
2. ख-घ-च—श्लोकद्वयं नास्ति ।

वैशम्पायनः—

इति स्माप्पूजयंस्तत्र कृष्णां प्रेक्ष्य सभासदः ॥ ९८॥

[1]सा विनिश्श्वस्य सुश्रोणी भूमावन्तर्मुखी स्थिता ।

तूष्णीमासीत् तदा दृष्ट्वा विवक्षन्तं युधिष्ठिरम् ॥ ९९॥

युधिष्ठिरस्य कोपात् तु ललाटे स्वेद आस्रवत् ॥ १००

अब्रवीद्धर्मपुत्रोऽथ सैरन्ध्रीं महिषीं प्रियाम् ।

कृष्णां तत्र नृपाभ्याशे परिव्राजकरूपधृत् ॥ १०१

युधिष्ठिरः—

गच्छ सैरन्ध्रि मा भैस्त्वं सुदेष्णाया निवेशनम् ।

राजा ह्ययं धर्मशीलो विराटः परलोकभीः ॥ १०२

यतस्त्वां न परित्राति सत्ये धर्मपथे स्थितः ॥ १०२॥

भर्तारस्तव पश्यन्ति क्लिश्यन्ते धीरचेतसः ।

शुश्रूषया क्लिश्यमानाः [2]परलोकं जयन्त्युत ॥ १०३॥

मन्ये न कालः क्रोधस्य पश्यन्ति पतयस्तव ।

तेन त्वां नाभिधावन्ति गन्धर्वास्सूर्यवर्चसः ॥ १०४॥

श्रूयन्तां ते सुकेशान्ते मोक्षधर्माश्रयाः कथाः ।

यथा धर्मः कुलस्त्रीणां दृष्टो धर्मानुरोधनात् ॥ १०५॥

नास्ति कश्चित् स्त्रिया यज्ञो न श्राद्धं नाप्युपोषणम् ।

या च भर्तरि शुश्रूषा सा स्वर्गायाभिजायते ॥ १०६॥

---

1—लक्षालङ्कारकारैराहृतोऽयं श्लोकः—परं तु सर्वेषु कोशेषु नोपलभ्यते ।
2. अ-ङ—पति । घ—परलोकान्भजन्सुत ।

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ १०७॥

अनुरुध्यमाना भर्तारं दृश्यन्ते वीरपत्नयः ।
[1]शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ॥ १०८॥

भर्तॄन् प्रति तथा पत्न्यो न क्रुध्यन्ति कदाचन ।
बहुभिश्च परिक्लेशैर् अवज्ञाताश्च शत्रुभिः ॥ १०९॥
अनन्यभावशुश्रूषाः पुण्यलोकं व्रजन्त्युत ॥ ११०

न क्रोधकालं नियतं पश्यन्ति पतयस्तव ।
न क्रुद्धान् प्रतियायाद्वै पतींस्ते वृत्रहा अपि ॥ १११
तेन त्वां नाभिधावन्ति गन्धर्वाः कामरूपिणः ॥ १११॥

यदि ते समयः कश्चित् कृतो ह्यायतलोचने ।
तं स्मरस्व क्षमाशीले क्षमा धर्मो ह्यनुत्तमः ॥ ११२॥

क्षमा सत्यं क्षमा दानं क्षमा धर्मः क्षमा तपः ।
क्षमावतामयं लोकः परलोकः क्षमावताम् ॥ ११३॥

त्र्यंशिनो द्वादशाङ्गस्य चतुर्विंशतिपर्वणः ।
षट्षष्टित्रिशतारस्य मासोनस्स्यात् क्षमी भवेत् ॥ ११४॥

वैशम्पायनः—

इत्येवमुक्ते तिष्ठन्तीं पुनरेवाह धर्मराट् ॥ ११५

---

1. अ-च—इदमर्धं नास्ति ।

युधिष्ठिरः—

[1]दुःखं रोदिषि वै भद्रे दीना त्वं राजसंसदि ।
तस्मात् त्वमपि सुश्रोणि शैलूषीव विभासि नः ॥ ११६

वैशम्पायनः—

एवमुक्ता तु सा भर्त्रा समुद्वीक्ष्याब्रवीदिदम् ॥ ११६॥

द्रौपदी—

सत्यमुक्तं त्वया विद्वन् शैलूषीं विद्धि मां पुनः ।
शैलूषकस्य तस्याहं येषां ज्येष्ठोऽक्षकोविदः ॥ ११७॥

वैशम्पायनः—

एवमुक्त्वा वरारोहा परिमृज्याननं शुभम् ।
केशान् प्रमुक्तान् संयम्य रुधिरेण समुक्षितान् ॥ ११८॥
पांसुकुण्ठितसर्वाङ्गी गजराजवधूरिव ।
प्रतस्थे नागनासोरूर् भर्तुराज्ञाय शासनम् ॥ ११९॥
विमुक्ता मृगशावाक्षी निरन्तरपयोधरा ।
प्रभा नक्षत्रराजस्य कालमेघैरिवावृता ॥ १२०॥
यस्या ह्यर्थे पाण्डवेयास् त्यजेयुरपि जीवितम् ।
तां ते दृष्ट्वा तथा कृष्णां क्षमिणो धर्मधारिणः ॥ १२१॥
समयं नातिवर्तन्ते वेलामिव महोदधिः ॥ १२२

---

1. च—दुःखं करोषि वै भद्रे दीव्यतां ।
ख—विघ्नं करोषि भद्रं तद्दीव्यतां ।
घ—दुःखाद्रोदिषि भद्रं ते दीनैवं ।

सा प्रविश्य प्रवेपन्ती सुदेष्णाया निवेशनम् ।
रुदन्ती घोरुसर्वाङ्गी तस्यास्तस्थावथाग्रतः ॥ १२३
तामुवाच विराटस्य महिषी शाठ्यमास्थिता ॥ १२३॥

सुदेष्णा—

किमिदं पद्मसंकाशं सुदन्तोष्ठाक्षिनासिकम् ।
रुदन्त्या अवमृष्टास्रं पूर्णेन्दुसमवर्चसम् ॥ १२४॥
[1]बिम्बोष्ठं कृष्णताराभ्याम् अत्यन्तरुधिरप्रभम् ।
नयनाभ्यामजिह्माभ्यां मुखं ते मुञ्चते जलम् ॥ १२५॥
कस्त्वाऽवधीद्वरारोहे कस्माद्रोदिषि शोभने ।
को विप्रयुज्यते दारैस् सपुत्रपशुबान्धवः ॥ १२६॥
कस्याद्य राजा कुपितो वधमाज्ञापयिष्यति ।
ब्रूहि किं ते प्रियं कर्म कं त्यजे घातयामि वा ॥ १२७॥

वैशम्पायनः—

तां निश्वस्याब्रवीत् कृष्णा जानन्ती नाम पृच्छंसि ।
[2]भ्रातुस्त्वं मामनुप्रेष्य किमेवं हि विकत्थसे ॥ १२८॥
कीचको माऽवधीत् तत्र सुराहारीमितोगताम् ।
सभायां पश्यतो राज्ञो यथा वै निर्जने वने ॥ १२९॥

1. क-म—बाष्पोष्णं ।
2. क—भ्राते त्वं मामनुप्रेष्य । अ-ड-च—मामभिप्रेक्ष्य ।

सुदेष्णा—

घातयामि सुदन्तोष्ठि कीचकं यदि मन्यसे ॥ १३०

[1]भ्राता यद्येष सुव्यक्तं स्यादितो धर्मचारिणीम् ।
यस्त्वां कामाभिभूतात्मा दुर्लभामवमन्यते ॥ १३१

द्रौपदी—

अद्यैव तं हनिष्यन्ति [2]येषामागस्करो हि सः ।
मन्येऽहमद्य वा श्वो वा परलोकं गमिष्यति ॥ १३२

भ्रातुः प्रयच्छ त्वरिता जीवश्राद्धं त्वमद्य वै ।
सुदृष्टं कुरु वै चैनं नासून् मन्ये धरिष्यति ॥ १३३

तेषां हि मम भर्तॄणां पञ्चानां धर्मचारिणाम् ।
एको [3]दुर्धर्षणोऽत्यर्थं बले चाप्रतिमो भुवि ॥ १३४

निर्मनुष्यमिमं लोकं कुर्यात् क्रुद्धो निशामिमाम् ।
न च सङ्क्रुध्यते तावद् गन्धर्वः कामरूपधृक् ॥ १३५

नूनं ज्ञास्यति यावद्वै ममैतत् पादघातनम् ॥ १३५॥

तत्क्षणात् कीचकः पापस् सपुत्रभ्रातृबान्धवः ।
विनशिष्यति दुष्टात्मा यथा दुष्कृतकर्मकृत् ॥ १३६॥

अपि चैतत् पुरा प्रोक्तं निपुणैर्मनुजोत्तमैः ॥ १३७

1. म—इदमर्धं नास्ति ।
2. क—विप्रकर्तारमव्ययम् । घ—एषामागः करोति सः ।
3. क-ख-घ-म—दुर्मर्षणो ।

एकस्तु कुरुते पापं कालपाशवशं गतः ।
नीचेनात्मापराधेन कुलं तेन विनश्यति ॥ १३८

वैशम्पायनः—

[1]सुदेष्णामेवमुक्त्वा तु सैरन्ध्री दुःखमोहिता ।
कीचकस्य वधार्थाय व्रतदीक्षामुपागमत् ॥ १३९

अभ्यर्थिता च नारीभिर् मानिता च सुदेष्णया ।
न च स्नाति न चाश्नाति न पांसून् परिमार्जति ॥ १४०
रुधिरक्लिन्नवदना बभूव रुदितेक्षणा ॥ १४०॥

तां तथा शोकसन्तप्तां दृष्ट्वा प्ररुदितां स्त्रियः ।
कीचकस्य वधं सर्वा मनोभिश्च शशंसिरे ॥ १४१॥

*जनमेजयः—

अहो दुःखतरं प्राप्ता कीचकेन पदा हता ।
पतिव्रता महाभागा द्रौपदी योषितां वरा ॥ १४२॥

दुश्शलां मानयन्ती या भर्तॄणां भगिनीं शुभाम् ।
नापश्यत् सिन्धुराजं तं बलात्कारेण वाहिता ॥ १४३॥

किमर्थं धर्षणं प्राप्ता कीचकेन दुरात्मना ।
नाशपत् तं महाभागा कृष्णा पादेन ताडिता ॥ १४४॥

तेजोराशिरियं देवी धर्मज्ञा सत्यवादिनी ।

---

1. अ-च-ङ—अर्धसप्तकं नास्ति ।

* इत आरभ्य अध्यायसमाप्तिपर्यन्तस्थितश्लोकाः अ-च—कोशयोः नोपलभ्यन्ते

केशपक्षे परामृष्टा मर्षयिष्यत्यशक्तवत् ॥ १४५॥
नैतत्कारणमल्पं हि श्रोतुकामोऽस्मि सत्तम ।
कृष्णायास्तु परिक्लेशान्मनो मे दूयते भृशम् ॥ १४६॥
कस्य वंशे समुद्भूतस् स च दुर्ललितो मुने ।
बलोन्मत्तः कथं चासीत् स्यालो मात्स्यस्य कीचकः ॥ १४७॥
दृष्ट्वाऽपि तां प्रियां भार्यां सूतपुत्रेण ताडिताम् ।
नैव चुक्षुभिरे वीराः किमकुर्वत तं प्रति ॥ १४८॥

वैशम्पायनः—

त्वदुक्तोऽयमनुप्रश्नः कुरूणां कीर्तिवर्धन ।
एतत् सर्वं तथा वक्ष्ये विस्तरेणैव पार्थिव ॥ १४९॥
ब्राह्मण्यां क्षत्रियाज्जातस् सूतो भवति पार्थिव ।
प्रातिलोम्येन जातानां स ह्येको द्विज एव तु ॥ १५०॥
रथकारमितीमं हि क्रियायुक्तं द्विजन्मनाम् ।
क्षत्रियादवरं वैश्याद् विशिष्टमिति चक्षते ॥ १५१॥
सह सूतेन सम्बन्धः कृतपूर्वो नरेश्वरैः ।
तथाऽपि तैर्महीपाल राजशब्दो न लभ्यते ॥ १५२॥
तेषां तु सूतविषयस् सूतानां नामतः कृतः ॥ १५३
उपजीव्य च यत् क्षत्रं लब्धं सूतेन यत् पुरा ।
सूतानामधिपो राजा केकयो नाम विश्रुतः ॥ १५४

राजकन्यासमुद्भूतस् सारथ्येऽनुपमोऽभवत् ।
पुत्रास्तस्य कुरुश्रेष्ठ मालव्याञ्जज्ञिरे तदा ॥ १५५

[1]*तेषामतिबलो ज्येष्ठः कीचकस्सर्वजित् प्रभो ।
अग्रजो बलसम्मत्तस् तेनासीत् सूतषट्शतम् ॥ १५६

[2]द्वितीयायां तु मालव्यां चित्रा ह्यवरजाऽभवत् ।
[3]तां सुदेष्णेति वै प्राहुर् विराटमहिषीं प्रियाम् ॥ १५७

तां विराटस्य मात्स्यस्य [4]केकयः प्रददौ मुदा ।
सुरथायां मृतायां तु कौसल्यां श्वेतमातरि ॥ १५८

श्वेते विनष्टे शङ्खे च गते मातुलवेश्मनि ।
सुदेष्णां महिषीं लब्ध्वा राजा दुःखमपानुदत् ॥ १५९

उत्तरं चोत्तरां चैव विराटात् पृथिवीपते ।
सुदेष्णा सुषुवे देवी कैकेयी कुलवृद्धये ॥ १६०

मातृष्वसृसुतां राजन् कीचकस्तामनिन्दिताम् ।
सदा परिचरन् प्रीत्या विराटे न्यवसत् सुखी ॥ १६१

भ्रातरस्तस्य विक्रान्तास् सर्वे च तमनुव्रताः ।

---

1. ख—कीचका इति विख्याताश्शतं षट् चैव भारत । [अधिकः पाठः]
* क—इतः सार्धश्लोको नास्ति
2. ख-म—मालव्या एव कौरव्य चित्रा ।
3. ख-म—तस्यां केकयराजस्तु सुदेष्णा दुहिताऽभवत् । इति पाठान्तरम्.
4. अ-क-ग-च—कीचकः ।

विराटस्यैव संहृष्टा बलं कोशं च वर्धयन् ॥ १६२
कालेया नाम दैतेयाः प्रायशो भुवि विश्रुताः ।
जज्ञिरे कीचका राजन् बाणो ज्येष्ठस्ततोऽभवत् ॥ १६३
स हि सर्वास्त्रसम्पन्नो बलवान् भीमविक्रमः ।
कीचको नष्टमर्यादो बभूव भयदो नृणाम् ॥ १६४
तं प्राप्य बलसम्मत्तं विराटः पृथिवीपतिः ।
जिगाय सर्वांश्च रिपून् यथेन्द्रो दानवानिव ॥ १६५
मेखलांश्च त्रिगर्तांश्च दशार्णांश्च कशेरुकान् ।
मालवान् यवनांश्चैव पुलिन्दान् काशिकोसलान् ॥ १६६
अङ्गान् वङ्गान् कलिङ्गांश्च तङ्कणान् वरतङ्कणान् ।
मलदान् निषधांश्चैव तुण्डिकेरांश्च कोङ्कणान् ॥ १६७
[1]करदांश्च निषिद्धांश्च शिवान् दुश्छिलिकांस्तथा ॥ १६७॥
अन्ये च बहवश्शूरा नानाजनपदेश्वराः ।
कीचकेन रणे भग्ना व्यद्रवन्त दिशो दश ॥ १६८॥
तमेवं वीर्यसम्पन्नं नागायुत[2]बलं रणे ।
विराटस्तत्र सेनायाश्चकार पतिमात्मनः ॥ १६९॥
विराटभ्रातरश्चैव दश दाशरथोपमाः ।

1. ख-ग-ङ—किरातांश्च निषिद्धांश्च शिवान् मल्लिलिकांस्तथा ।
(ङ)—कदरांश्च । [इति पाठान्तरम्]
2. ख-ग-ङ-म—समं बले ।

ते चैनानन्ववर्तन्त कीचकान् बलवत्तरान् ॥ १७०॥

एवंविधबलोपेताः कीचकास्ते च तद्विधाः ।
राज्ञस्स्याला महात्मानो विराटस्य हितैषिणः ॥ १७१॥

एतत् ते कथितं सर्वं कीचकस्य पराक्रमम् ॥ १७२

द्रौपदी न शशापैनं यस्मात् तद्वदतश्शृणु ॥ १७२॥

क्षरतीति तपः क्रोधाद् ऋषयो न शपन्ति हि ।
जानन्ती तद्यथातत्त्वं पाञ्चाली न शशाप तम् ॥ १७३॥

क्षमा धर्मः क्षमा दानं क्षमा यज्ञः क्षमा यशः ।
क्षमा सत्यं क्षमा शीलं क्षमा [1]सत्यमिति श्रुतिः ॥ १७४॥

क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
एतत् सर्वं विजानन्ती सा क्षमामन्वपद्यत ॥ १७५॥

भ्रातॄणां मतमाज्ञाय क्षमिणां धर्मचारिणाम् ।
नाशपत् तं विशालाक्षी सती शक्ताऽपि भारत ॥ १७६॥

पाण्डवाश्चापि ते सर्वे द्रौपदीं प्रेक्ष्य दुःखिताः ।
क्रोधाग्निना व्यदह्यन्त तदा कालव्यपेक्षया ॥ १७७॥

अथ भीमो महाबाहुस् सूदयिष्यंस्तु कीचकम् ।
वारितो धर्मपुत्रेण वेलयेव महोदधिः ॥ १७८॥

---

1. ख-ङ—कीर्तिः क्षमा परम् ।
क्षमा पुण्यं क्षमा तीर्थं क्षमा सर्वमिति श्रुतिः। [अधिकः पाठः].

सन्धार्य मनसा रोषं दिवारात्रं विनिश्श्वसन् ।
महानसे सदा कृच्छ्रात् सुष्वाप रजनीं च ताम् ॥ १७९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि षोडशोऽध्यायः ॥ १६ ॥

॥ ५६ ॥ कीचकवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये १७९॥ श्लोकाः]

---

## ॥ सप्तदशोऽध्यायः ॥

---

कीचकं जिघांसन्त्या द्रौपद्या रात्रौ महानसमेत्य स्वपतो भीमस्य प्रबोधनम् ॥ १ ॥ तथा कीचकमारणाभावे स्वप्राणविमोक्षणप्रतिज्ञानम् ॥ २ ॥ तथा युधिष्ठिरादीन् प्रति प्रत्येकं नामनिर्देशपूर्वकमनुशोचनम् ॥ ३ ॥

---

वैशम्पायनः—

सा सूतपुत्राभिहता राजपुत्री यशस्विनी ।
वधं कृष्णा परीप्सन्ती सूतपुत्रस्य भामिनी ॥ १

जगामावासमेवाथ तदा सा द्रुपदात्मजा ।
कृत्वा शौचं यथान्यायं कृष्णा सा तनुमध्यमा ॥ २

गात्राणि वाससी चैव प्रक्षाल्य सलिलेन च ।
चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् ॥ ३

किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ।

इत्येवं चिन्तयित्वा सा भीमं तं मनसाऽगमत् ॥ ४
अन्यः कर्ता विना भीमान्न मेऽद्य मनसेप्सितम् ॥ ४॥
प्रादुर्भूते क्षणे रात्रौ विहाय शयनं स्वकम् ।
दुःखेन महता युक्ता मानसेन मनस्विनी ॥ ५॥
प्राद्रवन्नाथमिच्छन्ती तथा नाथवती सती ॥ ६
सा वै महानसं प्राप्य भीमसेनं शुचिस्मिता ।
उपासर्पत पाञ्चाली वाशितेव महागजम् ॥ ७
सर्वश्वेतेव माहेयी वने वृद्धा त्रिहायणी ।
उपातिष्ठत पाञ्चाली भीमं कौरवमच्युतम् ॥ ८
मृगर्षभं यथा [1]हप्तम् अर्थिनी वननिर्झरे ।
सुप्रसुप्तं तथा स्थाने मृगराजवधूरिव ॥ ९
अभिप्रसार्य बाहुभ्यां पतिं सुप्तं समाश्लिषत् ।
सुजातं गोमतीतीरे सालं वल्लीव पुष्पिता ॥ १०
परिस्पृश्य च पाणिभ्यां पतिं सुप्तमबोधयत् ।
श्रीरिवान्या महोत्साहं सुप्तं विष्णुमिवार्णवे ॥ ११
क्षौमावदाते शयने शयानमृषभेक्षणम् ॥ ११॥
यथा शची देवराजं रुद्राणी शङ्करं यथा ।
ब्रह्माणमिव सावित्री यथा षष्ठी गुहं तथा ॥ १२॥

---

1. क-ग-ङ-व-म = सुप्त

दिशागजसमाकारं गजं गजवधूरिव ।
भीमं प्रावोधयत् कान्ता लक्ष्मीर्दामोदरं यथा ॥ १३॥
वीणेव [1]मधुरारक्तं स्वरं गान्धारमाश्रिता ।
अभ्यभाषत पाञ्चाली कौरव्यं पाण्डुनन्दनम् ॥ १४॥

द्रौपदी—

उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः ।
न मृतस्स हि पापीयान् भार्यामालभ्य जीवति ॥ १५॥
तस्मिञ्जीवति पापिष्ठे सेनावाहे मम द्विषि ।
तत् कर्म कृतवत्येव कथं निद्रां निषेवसे ॥ १६॥

वैशम्पायनः—

सुखसुप्तश्च तं शब्दं निशम्य स वृकोदरः ।
[2]सञ्चोदितः कुरुश्रेष्ठस् तोत्रैरिव महागजः ॥ १७॥
स वै विहाय शयनं यस्मिन् सुप्तः प्रबोधितः ।
उदतिष्ठदमेयात्मा पर्यङ्के सोत्तरच्छदे ॥ १८॥
[3]उपवेश्य च दुर्धर्षः पाञ्चालकुलवर्धनीम् ।
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ॥ १९॥

भीमसेनः—

केनास्यर्थेन सम्प्राप्ता त्वरितेन ममान्तिकम् ।

---

1. क-ख-म—मधुरारक्ता । ख—मधुरं रक्ता । घ—मधुरासक्ता ।
2. क-ख-घ—संवेदितः । म—संवेजितः कुरुश्रेष्ठ ।
3. क—उपविश्य । घ—उदपश्यच्च दुर्धर्षां पाञ्चालीं ।

न ते प्रकृतिमान् वर्णः कृशा त्वमभिलक्ष्यसे ॥ २०॥

प्रकाशं यदि वा गुह्यं सर्वमाख्यातुमर्हसि ।
आचक्ष्व त्वमशेषेण सर्वं विद्यामहं यथा ॥ २१॥

सुखं वा यदि वा दुःखं शुभं वा यदि वाऽशुभम् ।
यद्यप्यसुकरं कर्म कृतमित्यवधारय ॥ २२॥

अहमेव हि ते कृष्णे विश्वास्यस्सर्वकर्मसु ।
अहमापत्सु चापि त्वां मोक्षयामि पुनः पुनः ॥ २३॥
शीघ्रमुक्त्वा यथाकामं यत् ते कार्यं विवक्षितम् ।
गच्छ वै शयनायैव यावदन्यो न बुध्यते ॥ २४॥

वैशम्पायनः—

सा लज्जमाना भीता च अधोमुखमुखी ततः ।
नोवाच किञ्चिद्वचनं बाष्पदूषितलोचना ॥ २५॥

अथाब्रवीद् भीमपराक्रमो बली
वृकोदरः पाण्डवमुख्यसम्मतः ॥ २६

भीमः—

प्रब्रूहि किं ते करवाणि सुन्दरि
प्रियं प्रिये वारणखेलगामिनि ॥ २६॥

द्रौपदी—

अशोच्यता कुतस्तस्या यस्या भर्ता युधिष्ठिरः ।
जानन् सर्वाणि दुःखानि किं मां भीमानुपृच्छसि ॥ २७॥

यन्मां दासीप्रवादेन प्रातिकामी तदाऽनयत् ।
सभायां परिषन्मध्ये तन्मे मर्माणि कृन्तति ॥ २८॥

विकृष्टा हास्तिनपुरे सभायां राजसंसदि ।
दुश्शासनेन केशान्ते परामृष्टा रजस्वला ॥ २९॥

क्षत्रियैस्तत्र कर्णाद्यैर् दृष्टा दुर्योधनेन च ।
श्वशुराभ्यां च भीष्मेण विदुरेण च धीमता ॥ ३०॥

द्रोणेन च महाबाहो कृपेण च परन्तप ॥ ३१

साऽहं श्वशुरयोर्मध्ये भ्रातृमध्ये च पाण्डव ।
केशे गृहीत्वैव सभां नीता जीवति वै त्वयि ॥ ३२

पार्थिवस्य सुता नाम का नु जीवेत मादृशी ।
अनुभूय भृशं दुःखम् अन्यत्र द्रौपदीं विभो ॥ ३३

वनवासगता या च सैन्धवेन दुरात्मना ।
परामृष्टा द्वितीयं च सोढुमुत्सहते नु का ॥ ३४

पद्भ्यां पर्यचरं चाहं देशान् विषमसंस्थितान् ।
दुर्गाञ्श्वापदसंकीर्णांस् त्वयि जीवति पाण्डव ॥ ३५

ततोऽहं द्वादशे वर्षे वन्यमूलफलाशना ।
इदं पुरमनुप्राप्ता सुदेष्णापरिचारिका ॥ ३६

परस्त्रियमुपातिष्ठे सत्यधर्मपथे स्थिता ॥ ३६॥

गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ।

नित्यं पिङ्क्षे विराटस्य त्वयि जीवाति पाण्डव ॥ ३७॥
साऽहं बहूनि दुःखानि गणयामि [1]न ते कृते ॥ ३८
मत्स्यराजसमक्षं तु तस्य धूर्तस्य पश्यतः ।
कीचकेन पदा स्पृष्टा का नु जीवेत मादृशी ॥ ३९
एवं बहुविधैर्दुःखैः क्लिश्यमानां च पाण्डव ।
न मां जानासि कौन्तेय किं फलं जीवितेन मे ॥ ४०
द्रुपदस्य सुता चाहं धृष्टद्युम्नस्य चानुजा ।
अग्निकुण्डात् समुद्भूता नोर्व्यां जातु चरामि भो ॥ ४१
कीचकं चेन्न हन्यास्त्वं ग्रीवां बद्ध्वा जले म्रिये ।
विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलम् ॥ ४२
आत्मानं नाशयिष्यामि वृक्षमारुह्य वा पते ।
शस्त्रेणाङ्गं च भेत्स्यामि किं फलं जीवितेन मे ॥ ४३
योऽयं राज्ञो विराटस्य कीचको नाम भारत ।
सेनानीः पुरुषव्याघ्र स्यालः परमदुर्मतिः ॥ ४४
स मां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ।
नित्यमेवाह दुष्टात्मा भार्या भव ममेति वै ॥ ४५
तेनै[2]वमुच्यमानाया [3]वधार्हेणारिसूदन ।

---

1. म—कृते न ते ।
2. क—वं चोद्यमानाया वधार्हेणारिसूदन ।
ङ-म—तेनैवमुच्यमानाऽहं वधार्हेणारिसूदन ।
3. अ—वधार्हेण ममेति वै ।

कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ ४६

शरणं भव कौन्तेय मा स्म गच्छेर्युधिष्ठिरम् ।
निरुद्योगं निरामर्षं निर्वीर्यमरिनन्दनम ॥ ४७

मा स्म सीमन्तिनी काचिज् जनयेत् पुत्रमीदृशम् ॥ ४७॥

विजानामि तवामर्षं बलं वीर्यं च पाण्डव ।
ततोऽहं परिदेवामि चाग्रतस्ते महाबल ॥ ४८॥

यथा यूथपतिर्मत्तः कुञ्जरष्षाष्टिहायनः ।
भूमौ निपतितं बिल्वं पद्भ्यामाक्रम्य पीडयेत् ॥ ४९॥

तथैव च शिरस्तस्य निपात्य धरणीतले ।
वामेन पुरुषव्याघ्र मर्दे पादेन पाण्डव ॥ ५०॥

स चेदुद्यन्तमादित्यं प्रातरुत्थाय पश्यति ।
कीचकश्शर्वरीं व्युष्टां नाहं जीवितुमुत्सहे ॥ ५१॥

शापितोऽसि मम प्राणैस् सुकृतेनार्जुनस्य च ।
युधिष्ठिरस्य पादाभ्यां यमयोर्जीवितेन च ॥ ५२॥
यत् कीचकवधं नाद्य प्रतिजानासि भारत ॥ ५३

भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम् ।
यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् ॥ ५४

को हि राज्यं परित्यज्य सपुत्रपशुबान्धवम् ।
प्रव्रजेत महारण्यम् अजिनैः परिवारितः ॥ ५५

[1]यदि निष्कसहस्राणि यच्चान्यत् सारवद्धनम् ।
सायं प्रातरदेविष्यद् अपि संवत्सरायुतम् ॥ ५६

रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।
अश्वाश्च रथसङ्घाश्च न जातु क्षयमाव्रजेत् ॥ ५७

सोऽयं द्यूतप्रवादेन [2]श्रियश्चाप्यवरोपितः ।
तूष्णीमास्ते यथा मूढस् स्वानि कर्माण्यचिन्तयन् ॥ ५८

पुरा शतसहस्राणि दन्तिनां हेममालिनाम् ।
यं यान्तमनुयान्ति स्म सोऽयं द्यूतेन जीवति ॥ ५९

तथा शतसहस्राणि स्त्रीणाममिततेजसाम् ।
उपासते स्म राजानम् इन्द्रप्रस्थे युधिष्ठिरम् ॥ ६०

शतं दासीसहस्राणां यस्य नित्यं महानसे ।
पात्रहस्तं दिवारात्रम् अतिथीन् भोजयत्युत ॥ ६१

एष निष्कसहस्राणि दत्त्वा प्रातर्दिनेदिने ।
द्यूतजेन ह्यनर्थेन महता समुपाश्रितः ॥ ६२

एनं सुस्वरसम्पन्ना [3]बहवस्सूतमागधाः ।

1. म—यदि निष्कसहस्राणि शतं रुक्मस्य भारत ।
एकः पणोभवेद् द्यूते बहून् मासान् परन्तप । [अधिकः पाठः]
2. क—श्रिया पर्यवरोपितः । ख-घ-म—श्रियश्चैवावरोपितः ।
ङ—श्रिया चैव वियोजितः ।
3. ङ—सर्वकामैरुपस्थिताः ।

सुप्तं प्रातरुपातिष्ठन् सुमृष्टमणिकुण्डलाः ॥ ६३
सहस्रमृषयो यस्य नित्यमासन् सभासदः ।
तपश्श्रुतोपसम्पन्नास् सर्वकामैरुपस्थिताः ॥ ६४
अन्धान् वृद्धांस्तथा [1]दीनान् सर्वराष्ट्रेषु दुःखितान् ।
बिभर्त्यन्नार्थिनो नित्यम् आनृशंस्याद्युधिष्ठिरः ॥ ६५
स एष [2]निलयं प्राप्तो मत्स्यस्य परिचारकः ।
सभायां [3]विनतो राज्ञः कङ्को नाम युधिष्ठिरः ॥ ६६
इन्द्रप्रस्थे निवसतस् समये यस्य पार्थिवाः ।
आसन् बलिकरास्सर्वे सोऽन्येभ्यो भूतिमिच्छति ॥ ६७
पार्थिवाः पृथिवीपाला यस्यासन् वशवर्तिनः ।
स वशे विवशो राज्ञां परेषामद्य वर्तते ॥ ६८
सम्प्राप्य पृथिवीं सर्वां रश्मिमानिव तेजसा ।
सोऽद्य राज्ञो विराटस्य सभास्तारो युधिष्ठिरः ॥ ६९
यमुपासत राजानं सभायामृषिसत्तमाः ।
तमुपासन्तमद्यान्यं पश्य पाण्डव पाण्डवम् ॥ ७०
अनवद्यं महाप्राज्ञं जीवितार्थेन संवृतम् ।
दृष्ट्वा कस्य न दुःखं स्याद् धर्मराजं युधिष्ठिरम् ॥ ७१

---

1. क-ख-म—ऽनाथान्। घ--ऽनाथानर्धरात्रेषु।
2. क-ख-म—निरयं। ङ—दुर्गति।
3. क-ख-ङ-म—विदितो।

उपास्ते स्म सभायां यं कृत्स्ना चैव वसुन्धरा ।
तमुपासन्तमद्यान्यं पश्य भारत भारतम् ॥ ७२

एवं बहुविधैर्दुःखैः पीड्यमानामनाथवत् ।
शोकसागरमध्यस्थां किं मां भीम न पश्यसि ॥ ७३

इदं तु मे दुःखतरं यत् त्वां वक्ष्यामि भारत ।
न मे ह्यसूया कर्तव्या दुःखादेतद्ब्रवीम्यहम् ॥ ७४

शार्दूलैर्महिषैर्नागैर् अगारे योत्स्यसे सदा ।
कैकेय्याः प्रेक्षमाणायास् तदा मे कश्मलोऽभवत् ॥ ७५

[1]हसन्त्यन्तःपुरे नार्यो मम चेष्टां निरीक्ष्य च ॥ ७५॥

तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।
प्रेक्ष्य मामनवद्याङ्गीं कश्मलाभिहतामिव ॥ ७६॥

स्नेहात् संवासजादेव सदा वै चारुहासिनी ।
युध्यमानं महावीर्यम् इमं समनुशोचति ॥ ७७॥

कल्याणरूपा सैरन्ध्री वल्लश्चापि सुन्दरः ।
स्त्रीणां चित्तं हि दुर्ज्ञेयं युक्तरूपौ हि मे मतौ ॥ ७८॥

सैरन्ध्री प्रियसंवादान्नित्यं करुणवेदिनी ।
अस्मिन् राजकुले चेमौ तुल्यकालनिवासिनौ ॥ ७९॥

इति ब्रुवाणा वाक्यानि सा मां नित्यमजीजपत् ॥ ८०

---

1. अ-क-ब-च-म—इदमर्धं नास्ति ।

क्रुध्यन्तीं मां च सम्प्रेक्ष्य पर्यशङ्कत मां त्वयि ॥ ८०॥

वैशम्पायनः—

तस्यां तथा ब्रुवन्त्यां तु भीमो भीमपराक्रमः ।
नोवाच किञ्चिद्वचनं संरम्भाद्रक्तलोचनः ॥ ८१॥

ज्ञात्वा तु रुषितं भीमं द्रौपदी पुनरब्रवीत् ॥ ८२

द्रौपदी—

[1]शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ॥ ८२॥

यस्तु देवान् मनुष्यांश्च सर्वानेकरथोऽजयत् ।
सोऽयं राज्ञो विराटस्य कन्यानर्तनको युवा ॥ ८३॥

[2]आस्ते वेषप्रतिच्छन्नः कन्यानां परिवारकः ॥ ८४

योऽतर्पयदमेयात्मा खाण्डवे हव्यवाहनम् ।
सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ ८५

यस्माद्भयममित्राणां सदैव पुरुषर्षभात् ।
स लोकपरिभूतेन वेषेणास्ते धनञ्जयः ॥ ८६

यस्य ज्यातलनिर्घोषात् समकम्पन्त शत्रवः ।
षण्डरूपं वहन्तं तं गीतं नृत्तं च लम्बनम् ॥ ८७

कुर्वन्तमर्जुनं दृष्ट्वा न मे स्वास्थ्यं मनो व्रजेत् ॥ ८७॥

स्त्रियो गीतस्वनात् तस्य मुदिताः पर्युपासते ॥ ८८

1. म-च—इदमर्धं नास्ति । 2. म—इदमर्धं नास्ति ।

किरीटं सूर्यसङ्काशं यस्य मूर्धन्यशोभत ।
वेणीविकृतकेशान्तस् सोऽयमद्य धनञ्जयः ॥ ८९

यस्मिन्नस्त्राणि दिव्यानि [1]सुबहूनि महात्मनि ।
आधारस्सर्वविद्यानां स धारयति कुण्डले ॥ ९०

यं वै राजसहस्राणि तेजसाऽप्रतिमं भुवि ।
समरे नातिवर्तन्ते वेलामिव महोर्मयः ॥ ९१

[2]यस्य स्म रथनिर्घोषात् समकम्पत मेदिनी ।
सपर्वतवनाकाशा सहस्थावरजङ्गमा ॥ ९२

यस्मिञ्जाते महेष्वासे कुन्त्याः प्रीतिरवर्धत ।
न स शोचति मामद्य भीमसेन तवानुजः ॥ ९३

विभूषितमलङ्कारैः कुण्डलैः परिपादुकैः ।
कम्बुपाणिं तथा यान्तं दृष्ट्वा सीदति मे मनः ॥ ९४

वेणीविकृतकेशान्तं भीमधन्वानमर्जुनम् ।
कन्यापरिवृतं दृष्ट्वा शोकं गच्छति मे मनः ॥ ९५

यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणम् ।

---

1. क-ख-ग-च-म—समस्त्राणि　　घ—सर्वाणि च
2. क-ख-घ-ङ—सोऽयं राज्ञो विराटस्य कन्यानर्तनको युवा ।
आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः ॥
[अधिकः पाठः]

प्रच्छन्नमिव मातङ्गं परिपूर्णं करेणुभिः ॥ ९६

मात्स्यं पार्थं च गायन्तं विराटं समुपस्थितम् ।
पश्यामि स्त्रीषु मध्यस्थं दृष्ट्वा मुह्यति मे मनः ॥ ९७

[1]न चैनमार्या जानाति कृच्छ्रं प्राप्तं धनञ्जयम् ।
अजातशत्रुं कौरव्यं मग्नं तं द्यूतदेवने ॥ ९८

ऐन्द्रवारुणवायव्यब्राह्माग्नेयैश्च वैष्णवैः ।
अग्नीन् सन्तर्पयन् पार्थस् [2]सर्वांश्चैकरथोऽजयत् ॥ ९९

दिव्यैरस्त्रै[3]रचिन्त्यात्मा सर्वशत्रुनिबर्हणः ॥ ९९॥

दिव्यं गान्धर्वमस्त्रं च वायव्यमथ वैष्णवम् ।
ब्राह्मं पाशुपतं चैव स्थूणाकर्णं च दर्शयन् ॥ १००॥

पौलोमान् कालकेयांश्च इन्द्रशत्रून् महासुरान् ।
निवातकवचैस्सार्धं घोरानेकरथोऽजयत् ॥ १०१॥

सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ १०२

कन्यापुरगतं दृष्ट्वा गोष्ठेष्विव महर्षभम् ।
स्त्रीवेषविकृतं पार्थं कुन्तीं गच्छति मे मनः ॥ १०३

यस्स्त्रीभिर्नित्यसम्पन्नो रूपेणास्त्रेण मेधया ।

---

1. ख-ङ-म—नूनमार्या न जानाति
   च—नूनं महानसव्रतं
2. क-ख-ग-ङ-म—सर्वशत्रुनिबर्हणः
3. क-ख-ग-च—रमेयात्मा सर्वांश्चैकरथोऽजयत् ।

सोऽश्वबन्धो विराटस्य पश्य कालस्य पर्ययम् ॥ १०४

राजकन्याश्च वेश्याश्च विशां दुहितरश्च याः ।
सर्वास्सारयुता नार्यो दामग्रन्थिवशं गताः ॥ १०५

प्रेष्यकर्मणि तं दृष्ट्वा शोचामि विलपामि च ॥ १०५॥

विराटमुपतिष्ठन्तं दर्शयन्तं च वाजिनः ।
अभ्यकीर्यन्त बृन्दानि दामग्रन्थिमुदीक्षितुम् ॥ १०६॥

विनयन्तं जवेनाश्वान् मत्स्यराजस्य पश्यतः ॥ १०७

किं नु मां मन्यसे पार्थ सुखितेति परन्तप ।
तथा दृष्ट्वा यवीयांसं सहदेवं युधाम्पतिम् ॥ १०८

तं दृष्ट्वा गोषु गोसङ्घं वत्सचर्मक्षितीशयम् ।
दुःखशोकपरीताङ्गी पाण्डुभूताऽसि पाण्डव ॥ १०९

सहदेवस्य वृत्तानि चिन्तयन्ती पुनः पुनः ।
न पश्यामि महाबाहो सहदेवस्य दुष्कृतम् ॥ - ११०

यस्मिन्नेवंविधं क्लेशं प्राप्नुयात् सत्यविक्रमः ।
दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरं प्रियम् ॥ १११

गोषु गोवृषसङ्काशं मात्स्येनाभिसमीक्षितम् ।
संरब्धतररक्ताक्षं गोपालानां पुरोगमम् ॥ ११२

विराटमभिनन्दन्तम् अथ मे भवति ज्वरः ॥ ११२॥

सहदेवं हि मे नित्यं वीरमार्या प्रशंसति ।
महाभिजनसम्पन्नो नीतिमान् शीलवानपि ॥ ११३॥

ह्रीनिषेधो ह्यनवमो धार्मिकश्च प्रियश्च मे ।
स तेऽरण्ये[1]षु वोढव्यः पाञ्चालि रजनीष्वपि ॥ ११४॥

तं दृष्ट्वा गोषु गोपालवेषमास्थाय [2]धिष्ठितम् ।
सहदेवं युधां श्रेष्ठं किं नु जीवामि पाण्डव ॥ ११५॥

एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ॥ ११६

पुनः प्रतिप्रशिष्टानि दुःखानि शृणु भारत ।
वर्तन्ते मयि कौन्तेय वक्ष्याम्यन्यानि तानि ते ॥ ११७

युष्मासु ध्रियमाणेषु दुःखानि विविधान्युत ।
शोषयन्ति शरीरं मे किं नु दुःखतरं ततः* ॥ ११८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

॥ ४६ ॥ कीचकवधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये ११८ श्लोकाः]

---

1. क-ख-घ-म—ऽवबोद्धव्यः ।
2. क-ख-ङ-म—विष्ठितम् । (घ) निष्ठितम् ।
*ख—एकभर्ता तु या नारी सा दुःखेनैव वर्तते ।
पञ्च मे पतयस्सन्ति मम दुःखमनन्तकम् ॥ [अधिकः पाठः]

## ॥ अष्टादशोऽध्यायः ॥

द्रौपद्या भीमं प्रति स्ववैभवानुस्मारणेन परिशोचनपूर्वकं कीचकहननचोदना ॥ १ ॥

द्रौपदी—
अहं सैरन्ध्रिवेषेण वसन्ती राजवेश्मनि ।
वशगाऽस्मि सुदेष्णाया ह्यक्षधूर्तस्य कारणात् ॥ १
विक्रियां पश्य मे तीव्रां राजपुत्र्याः परन्तप ।
आसे कालमुपासीना सर्वदुःखसहा पुनः ॥ २
अनित्याः खलु मर्त्यानाम् अर्थाश्च व्यसनानि च ।
इति मत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ३
य एव हेतुर्भवति पुरुषस्य जयावहः ।
पराजये च हेतुस्स इति च प्रतिपालये ॥ ४
दत्त्वा याचन्ति पुरुषा हत्वा वध्यन्ति चापरे ।
मानयित्वा [1]च मान्यन्ते परैरिति च मे श्रुतम् ॥ ५
न दैवस्यातिभारोऽस्ति न दैवस्यातिवर्तनम् ।
इति [2]मत्वाऽऽगमं भूयो [3]दैवस्य प्रतिपालये ॥ ६

1. क-ङ-च-म—ऽवमन्यन्ते ।
ख—च मान्यन्ते नरा दैवविपर्यये ।
2. ख—मत्वा गतिं भूयो दैवस्य ।
घ—मत्वा गतिं भूयो दैवस्येति च पालये ।
3. अ—न दैवं प्रतिपालये ।

स्थितं पूर्वं [1]जलं यत्र पुन[2]स्तत्र न तिष्ठति ।
इति पर्यायमिच्छन्ती प्रतीक्षाम्युदयं पुनः ॥ ७
दैवेन किल यस्यार्थस् सुनीतोऽपि विपद्यते ।
[3]दैवस्यैवागमे यत्नस् तेन कार्यो विजानता ॥ ८
किं नु मे वचनस्याद्य कथितस्य प्रयोजनम् ।
पृच्छ मां दुःखितामेनाम् अपृष्टाऽपि ब्रवीमि ते ॥ ९
महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ।
इमामवस्थां सम्प्राप्ता मदन्या का जिजीविषेत् ॥ १०
कुरून् परिहरन् सर्वान् पाञ्चालानपि भारत ।
पाण्डवेयांश्च सम्प्राप्तो मम क्लेशो ह्यरिन्दम ॥ ११
भ्रातृभिश्श्वशुरैः पुत्रैर् बहुभिः परवीरहन् ।
एवं समुदिता नारी का न्वेवं दुःखभागिनी ॥ १२
नूनं बालतया धातुर् मया चैवाप्रियं कृतम् ।
तस्य प्रभावाद्दुर्नीतं प्राप्ताऽस्मि भरतर्षभ ॥ १३
[4]वर्णं विकारमपि मे पश्य पाण्डव यादृशम् ।
ईदृशो मे न तत्रासीद् दुःखे परमके पुरा ॥ १४
[5]त्वं मे भीम न जानीषे ह्यनुभूतं सुखं पुरा ।

---

1. ख—जयं 2. अ-क-ब-ङ-म—स्तत्रैव
3. ख-च—सदा दैवागमे ।
4. ङ-म—वर्णाविकाशमपि । क—वर्णावसादमपि ।
च—वर्णापकर्षमपि ।
5. क-ख-च-ङ-म—त्वमेव भीम जानीषे यन्मे पार्थ ।

साऽहं दासीत्वमापन्ना न शान्तिं मनसा लभे ॥ १५

[1]न तद्दैवादृते मन्ये यत्र पार्थो धनञ्जयः ।
भीमधन्वा महारङ्गे चास्ते शान्त इवानलः ॥ १६

अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ।
विनिपातमिमं पश्य युष्माकमविचिन्तितम् ॥ १७

यस्या मम मुखप्रेक्षा यूयमिन्द्रसमास्सदा ।
सा [2]प्रेक्षे मुखमन्यासाम् अवराणां वरा सती ॥ १८

पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा ।
युष्मासु ध्रियमाणेषु पाञ्चालेषु च [3]भारत ॥ १९

यस्यास्सागरपर्यन्ता पृथिवी वशवर्तिनी ।
आसीत् साऽद्य सुदेष्णायाः पाञ्चाली वशवर्तिनी ॥ २०

यस्याः पुरस्सरा आसन् पृष्ठतश्चानुगामिनः ।
साऽहमद्य सुदेष्णायाः पश्चाद्यामि भयार्दिता ॥ २१
इदं हि दुःखं कौन्तेय ममा[4]सीद्यन्निबोध तत् ॥ २१॥

या न जातु स्वयं पिङ्क्षे गात्रोन्मर्दनमात्मनः ।

---

1. क-च-म—न दैविकमिदं । क-घ—न दैवीकमिदं ।
ख-ब—तद्दैविकमिदं ।
2. अ-च—प्रेक्ष्य ।
3. ख-च-म—मानद ।
4. क-ख-ब-घ-म—सह्यं निबोध ।

अन्यत्र कुन्त्या भद्रं ते साऽद्य पिङ्क्ष्यामि चन्दनम् ॥ २२॥
पश्य कौन्तेय मे पाणी नैवं वै भवतः पुरा ॥ २३

वैशम्पायनः—

इत्यस्मै दर्शयामास किणबद्धौ करावुभौ ॥ २३॥

द्रौपदी—

बिभेमि कुन्त्या या नाऽहं युष्माकं वा कदाचन ।
साऽद्याग्रतो विराटस्य भीता तिष्ठामि किङ्करी ॥ २४॥
किं नु वक्ष्यति [1]सम्राण्मां वर्णकस्सुकृतो न वा ।
नान्यपिष्टं विराटस्य चन्दनं किल रोचते ॥ २५॥

वैशम्पायनः—

सा कीर्तयन्ती दुःखानि भीमसेनस्य भामिनी ।
रुरोद शनकैः कृष्णा भीमस्योरस्समाश्रिता ॥ २६॥
सा बाष्पकलया वाचा निश्वसन्ती पुनः पुनः ।
हृदये भीमसेनस्य घट्टयन्तीदमब्रवीत् ॥ २७॥

द्रौपदी—

नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा ।
अभाग्या या तु जीवामि मर्तव्ये सति पाण्डव ॥ २८॥
कीचकं चेन्न हन्यास्त्वं स्वात्मानं नाशयाम्यहम् ।
विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलम् ॥ २९॥

---

1. क—सम्राड्वै वर्णतः सुकृतेन वा ।
ख-ङ—सम्राड्वै वर्णकः स्वकृतो न वा । घ-च-म—सम्राड्वै ।

अभाग्याऽहमपुण्याऽहं नित्यदुःखा च विक्लवा ।
[1]पापे निपतितायाश्च किं फलं जीवितेन मे ॥ ३०॥

वैशम्पायनः—

[2]ततस्तस्याः करौ पीनौ किणबद्धौ वृकोदरः ।
मुखमानीय वेपन्त्या रुरोद परवीरहा ॥ ३१॥

तौ गृहीत्वा च कौन्तेयो बाष्पमुत्सृज्य वीर्यवान् ।
ततः परमदुःखार्त इदं वचनमब्रवीत् ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

॥ ७६ ॥ कीचकवधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[अस्मिन्नध्याये ३२॥ श्लोकाः]

---

## ॥ एकोनविंशोऽध्यायः ॥

द्रौपदीभीमसंवादः ॥ १॥ द्रौपद्या भीमं प्रति हठात् कीचकसंहारचोदना ॥ २ ॥

---

भीमः—

शृणु भद्रे वरारोहे क्रोधात् तत्र तु चिन्तितम् ।
त्वां वै सभागतां दृष्ट्वा मात्स्यानां कदनं महत् ॥ १

1. क-ख-घ-ङ-म—पापेन पातितायाश्च ।
2. ख-ङ-च-म—इत्यस्मै दर्शयामास किणबद्धौ करावुभौ ।
[अधिकः पाठः]

कर्तुकामेन भद्रं ते वृक्षश्चावेक्षितो मया ॥ १॥

तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत् ।

[1]तं ध्यात्वाऽवाङ्मुखस्तूष्णीम् आस्थितोऽस्मि महानसम्॥ २॥

शृणुष्वान्यत् प्रतिज्ञातं यद्वदामीह भामिनि ॥ ३

वैशम्पायनः—

आश्वासयन् हि पाञ्चालीं भीमसेन उवाच ह ॥ ३॥

भीमः—

धिगस्तु मे बाहुबलं गाण्डीवं फल्गुनस्य च ।

यत् ते रक्तौ पुरा भूत्वा पाणी कृतकिणावुभौ ॥ ४॥

तदद्य मां सुतपति यत् कृतं न मया पुरा ॥ ५

सभायां स्म विराटस्य करोमि कदनं महत् ।

तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत् ॥ ६

तदहं तस्य विज्ञाय [2]स्थितवानस्मि शासने ॥ ६॥

[3]यच्च राष्ट्रात् प्रच्यवनं कुरूणा[4]मधिपस्य नः ॥ ७

सुयोधनस्य कर्णस्य शकुनेस्सौबलस्य च ।

---

1. म—'तं ध्यात्वा' इत्यारभ्य अर्धाष्टकं नास्ति।
'तदहं तस्य' इत्यादि वर्तते।
2. क-ख-घ-ङ—स्थित एवास्मि। च—स्थितो धर्मस्य।
3. म—यच्च राष्ट्रात् प्रच्यवनं कुरूणामवधिश्च यः।
ञ—यस्य राष्ट्रात् प्रच्यवनं कुरूणामेव निश्चितम्। च—राज्यात्।
4. ख-च—मवधश्च यः। घ—मवधार्य सः।

दुश्शासनचतुर्थानां यत्र मे न हृतं शिरः ॥ ८

तन्मां दहति कल्याणि हृदि शल्यमिवार्पितम् ॥ ८॥

अपि चान्यद्वरारोहे स्मरिष्यसि वचो मम ॥ ९

पुण्ये तीरे सरस्वत्या यत् प्रतिष्ठाम सङ्गताः ।
तत्राहमब्रवं कृष्णे सर्वक्लेशाननुस्मरन् ॥ १०

न चाहमत्र गच्छेयं धर्मराजं युधिष्ठिरम् ।
धनञ्जयं च पाञ्चालि माद्रीपुत्रौ च भ्रातरौ ॥ ११

कृत्वैतां च मतिं कृष्णे युधिष्ठिरमगर्हयम् ॥ ११॥

परुषं वचनं श्रुत्वा मम धर्मात्मजस्तदा ।
ह्रीमान् वाक्यमहीनार्थं ब्रुवन् राजा युधिष्ठिरः ॥ १२॥

सर्वानन्वनयद्भ्रातॄन् मुनेर्धौम्यस्य पश्यतः ॥ १३

मा रोदी राज्ञि लोकानां सर्वागम[1]गुणान्विते ।
रक्षितव्यं सदाऽस्माभिस् सत्यमप्रातिमं भुवि ॥ १४

अनुनीतेषु चास्मासु अनुनीता त्वमप्यसि ।
माऽधर्मतो वचः कृष्णे क्रोधजं समुदाहर ॥ १५

इमं चोक्तमुपालम्भं त्वया राजा युधिष्ठिरः ।
शृणुयाद्यदि कल्याणि कृत्स्नं जह्यात् स जीवितम् ॥ १६

धनञ्जयो वा सुश्रोणि यमौ चापि सुमध्यमे ।
लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुम् ॥ १७

---

1. अ-ल-ङ-च-म—गुणान्विता

धर्मं शृणुष्व पाञ्चालि यत् ते वक्ष्यामि भामिनि ॥ १७॥

दुहिता जनकस्यासीद् वैदेही यदि ते श्रुता ।
पतिमन्वचरत् सीता महारण्यनिवासिनम् ॥ १८॥

वसन्ती च महारण्ये रामस्य महिषी प्रिया ।
रावणेन हृता सीता राक्षसीभिश्च तर्जिता ॥ १९॥
सा क्लिश्यमाना सुश्रोणी राममेवान्वपद्यत ॥ २०
[1]लोपामुद्रा तु [2]वै देवि भर्तारमृषिसत्तमम् ।
भगवन्तमगस्त्यं सा वनायैवान्वपद्यत ॥ २१
सुकन्या नाम शर्यातेर् भार्गवच्च्यवनं वने ।
वल्मीकभूतं शाम्यन्तम् अन्वपद्यत भामिनी ॥ २२
नालायनी चेन्द्रसेना रूपेणाप्रतिमा भुवि ।
पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रकम् ॥ २३
कीर्तितास्तु मया नार्यो रूपवत्यः पतिव्रताः ॥ २३॥
नलं राजानमेवाथ दमयन्ती वनान्तरे ।
अन्वगच्छत् पुरा कृष्णे तथा भर्तृस्त्वमन्वगाः ॥ २४॥
तथा त्वमपि कल्याणि सर्वैस्समुदिता गुणैः ।
मा दीर्घं क्षम कालं त्वं त्रिंशद्रात्रमनिन्दिते ॥ २५॥
पूर्णे त्रयोदशे वर्षे राज्ञां राज्ञी भविष्यसि ॥ २६

---

1. म—इतः अर्धद्वयं नास्ति ।
2. अ-ब—वैदेहि । ख—वैदर्भि । क—वै देवी ।

सत्येन ते शपे घाहं भविता नान्यथेति ह ॥ २६॥

सर्वासां परमस्त्रीणां प्रामाण्यं कर्तुमर्हसि ।
सर्वेषां च नरेन्द्राणां मूर्ध्नि स्थास्यसि भामिनि ॥ २७॥

भर्तृभक्त्या च वृत्तेन भोगान् प्राप्स्यसि [1]दुर्लभान् ।
[2]पूर्णायां तु प्रतिज्ञायां महान्तं भोगमाप्नुयाः ॥ २८॥

गुरुभर्तृकृतं ज्ञात्वा राज्ञां मूर्ध्नि स्थिता भवेः ॥ २९

द्रौपदी—

[3]आर्तप्रलापा कौन्तेय न राजानमुपालभे ॥ २९॥

व्यतीतं कथयित्वा [4]किं भीमसेन महाबल ।
इदं तु दुःखं कौन्तेय ममासह्यं निबोध तत् ॥ ३०॥

योऽयं राज्ञो विराटस्य सूतपुत्रस्तु कीचकः ।
स्यालो नाम प्रवादेन भोजत्रैगर्तदेशजः ॥ ३१॥

त्यक्तधर्मो नृशंसश्च सर्वार्थेषु च वल्लभः ।
नित्यमेवाह दुष्टात्मा भार्या मे भव शोभने ॥ ३२॥
अविनीतस्सुदुष्टात्मा मामनाथेति चिन्तयन् ॥ ३३

---

1. क-ख-घ—भामिनि ।
2. ख-घ-च-म—यातायां तु ।
3. क-म—आर्तप्रलापात् । ख—स्वात्मानं प्रलपे चाहं ।
   घ—आर्तप्रलापैः कामं ते ।
4. अ—तं

किमुक्तेन व्यतीतेन भीमसेन महाबल ।
प्रत्युपस्थितकालस्य दुःखस्यान्तकरो भव ॥ ३४

[1]ममैव भीम कैकेयी रूपाद्धि परिशङ्किता ।
नित्यमुद्विजते राजा कथं नेयादिमामिति ॥ ३५

तस्या विदित्वा तं भावं स्वयं चानृतदर्शनः ।
कीचकोऽपि हि दुष्टात्मा पुनः प्रार्थयतीह माम् ॥ ३६

तमहं कुपिता भीम पुनः कोपं नियम्य च ।
अब्रवं कामसम्मूढम् आत्मानं रक्ष कीचक ॥ ३७

गन्धर्वाणामहं भार्या पञ्चानां महिषी प्रिया ।
ते त्वां निहन्युर्दुर्धर्षाश् शूरास्साहसकारिणः ॥ ३८

एवमुक्तस्तु दुष्टात्मा कीचकः प्रत्युवाच ह ।
नाहं बिभेमि सैरन्ध्रि गन्धर्वाणां शुचिस्मिते ॥ ३९

शतं सहस्रमपि वा गन्धर्वाणामहं रणे ।
समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम् ॥ ४०

इत्युक्ता चाब्रवं सूतं कामातुरमहं पुनः ।
न त्वं प्रतिबलस्तेषां गन्धर्वाणां यशस्विनाम् ॥ ४१

धर्मे स्थिताऽस्मि सततं कुलशीलसमन्विता ।
नेच्छामि किञ्चिद्वध्यं त्वां तस्माज्जीवसि कीचक ॥ ४२

1. ख—कैकेयी चापि मां दृष्ट्वा रूपेणाप्रतिमां सतीम् । [अधिकः पाठः]

एवमुक्तस्तु दुष्टात्मा प्रहस्य स्वनवत् ततः ।
न तिष्ठति स्म सन्मार्गे न च धर्मं बुभूषति ॥ ४३

पापात्मा पापकारी च कामरागवशानुगः ।
अविनीतश्च दुष्टात्मा प्रत्याख्यातः पुनः पुनः ॥ ४४
दर्शने दर्शने दुःखं तदा जह्यां च जीवितम् ॥ ४४॥

धर्मे प्रयतमानानां महान् धर्मो नशिष्यति ।
समयं रक्षमाणानां दारा वो न भवन्ति च ॥ ४५॥

भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायाम् आत्मा भवति रक्षितः ॥ ४६॥

वदतां वर्णधर्मांश्च ब्राह्मणानां च मे श्रुतम् ।
क्षत्रियस्य सदा धर्मो नान्यो दस्युनिबर्हणात् ॥ ४७॥

पश्यतो धर्मराजस्य कीचको माऽन्वधावत ।
तव चैव समक्षं वै भीमसेन महाबल ॥ ४८॥

त्वया चाहं परित्राता तस्माद्भीम जटासुरात् ।
जयद्रथं तथैव त्वम् अजैषीर्भ्रातृभिस्सह ॥ ४९॥

जहीममपि पापिष्ठं योऽसौ मामवमन्यते ।
कीचको [1]राजवन्नित्यं शोककृन्मम भारत ॥ ५०॥

कीचकं कामसन्तप्तं भिन्धि कुम्भमिवाश्मनि ।
यो निमित्तमनर्थानां बहूनां मम भारत ॥ ५१॥

---

1. क-ङ-म—राजवाल्लभ्याच्छोक।

तं चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति ।
विषमालोड्य पास्यामि कीचको मा वशं नयेत् ॥ ५२॥
श्रेयो हि मरणं मन्ये भीमसेन तवाग्रतः ॥ ५३

वैशम्पायनः—

इत्युक्त्वा प्रारुदत् कृष्णा भीमस्योरसि संश्रिता ॥ ५३॥
भीमश्च तां परिष्वज्य महत् सान्त्वं प्रयुज्य च ।
कीचकं मनसाऽगच्छत् सृक्किणी परिसंलिहन् ॥ ५४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

॥ ७६ ॥ कीचकवधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[अस्मिन्नध्याये ५४॥ श्लोकाः]

---

## ॥ विंशोऽध्यायः ॥

द्रौपद्या भीमवचनात् कीचकं प्रति नर्तनशालाया उभयोः समागमे सङ्केतस्थानत्वनिर्धारणेन रात्रौ तत्रागमनम् ॥ १ ॥ भीमेन कीचकागमनात् पूर्वमेव नर्तनागारमेत्य शय्यायां शयनम् ॥२॥ पश्चात् समागतेन कीचकेन भीमं प्रति द्रौपदीबुद्ध्या संस्पर्शनपूर्वकं सम्भाषणम् ॥ ३ ॥ भीमेन नियुद्धेन कीचकमारणम् ॥ ४ ॥ पश्चाद्द्रौपद्या समाह्वानादुपकीचकानां तत्र समागमनम् ॥ ५ ॥

---

भीमः—

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
अद्यैनं [1]निहनिष्यामि कीचकं सह बान्धवैः ॥ १

---

1. क-ख-च-म—सूदयि ।

अस्याः प्रदोषे शर्वर्याः कुरुष्वानेन संविदम् ।
दुःखं शोकं च निर्धूय याज्ञसेनि शुचिस्मिते ॥ २

यदेतन्नर्तनागारं मत्स्यराजेन कारितम् ।
दिवाऽत्र कन्या नृत्यन्ति रात्रौ यान्ति स्वकं गृहम् ॥ ३

तत्रास्ति शयनं भीरु दृढाङ्गं सुप्रतिष्ठितम् ।
तत्रैनं दर्शयिष्यामि पूर्वप्रेतान् पितामहान् ॥ ४

[1]त्वद्दर्शनसमुत्थेन कामेनाकुलितेन्द्रियम् ॥ ४॥

सङ्केतं सूतपुत्रस्य कारयस्व शुभानने ।
यथा परे न पश्येयुः कुर्वन्तीं तेन संविदम् ॥ ५॥

तथा कुरुष्व कल्याणि यथा सन्निहितो भवेत् ॥ ६

वैशम्पायनः—
तत्र तौ कथयित्वा तु बाष्पमुत्सृज्य दुःखितौ ॥ ६॥

[2]भीमस्य च प्रतिज्ञां तां कीचकस्य वधे तदा ।
[3]विदित्वा द्रौपदी तत्र प्रविवेश पुनर्गृहम् ॥ ७॥

रात्रिशेषं तदव्यग्रा धारयामास वै हृदि ॥ ८

तस्यां रजन्यां व्युष्टायां प्रातरुत्थाय कीचकः ।
गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत् ॥ ९

---

1. म—इदमर्धं नास्ति ।
2. क-ख-घ-ङ-म—भीमेन च प्रतिज्ञाते ।
3. क-ख-घ-ङ-म—द्रौपदी च सुदेष्णायाः ।

कीचकः—

यत् त्वाऽहं पश्यतो राज्ञो ह्यनुधावनमाचरम् ।
न कश्चि[1]ल्लभसे नाथम् अभिपन्ना बलीयसा ॥ १०

प्रवादेनेह मात्स्यानाम् अयं राजेति चोच्यते ।
अहमेव हि राजा वै मात्स्यानां वाहिनीपतिः ॥ ११

सा सुखं प्रतिपद्यस्व दासो भीरु भवामि ते ।
न ह्यहं त्वामृते भीरु चिरं जीवितुमुत्सहे ॥ १२

अहन्यहनि सुश्रोणि शतनिष्कं ददामि ते ।
दासीशतं च ते दद्यां दासानामपि चापरम् ॥ १३
रथाश्वाश्वतरीयुक्तास् सन्तु ते भीरु सङ्गमे ॥ १३॥

सैरन्ध्री—

एतन्मे वचनं सत्यं प्रतिपद्यस्व कीचक ।
न ते सखा वा भ्राता वा जानीयात् सङ्गमं मया ॥ १४॥

अनुबोधादनर्थस्स्याद् अयशश्च महद्भवेत् ।
अनुबोधाद्धि भीताऽस्मि गन्धर्वाणां यशस्विनाम् ॥ १५॥
एतन्मे प्रतिजानीहि ततोऽहं वशगा [2]तव ॥ १६

कीचकः—

एवमेतत् करिष्यामि यथा सुश्रोणि भाषसे ॥ १६॥

1. क-च—लभते सेनाम्। म—च लभसे नाथमभि।
2. क-ख-च-म—ऽभवम्।

एकोऽहमागमिष्यामि शून्यमावसथं तव ।
समागमार्थं रम्भोरु त्वया मदनदर्पितः ॥ १७॥

यथा त्वां नावबुध्येरन् गन्धर्वास्सूर्यवर्चसः ॥ १८

सैरन्ध्री—

यदिदं नर्तनागारं मात्स्यराजेन कारितम् ।
दिवा तु कन्या नृत्यन्ति रात्रौ यान्ति स्वकं गृहम् ॥ १९

निशायां तत्र गच्छेथा गन्धर्वास्तन्न जानते ।
तत्र दोषः परिहृतो भविष्यति न संशयः ॥ २०

एकस्सन् नर्तनागारं रात्रौ सङ्केतमाव्रज ।
तत्राहं वशगा तुभ्यं भविता नात्र संशयः ॥ २१

कीचकः—

तथा भद्रे करिष्यामि यथा त्वं भीरु [1]मन्यसे ॥ २१॥

एकस्सन् नर्तनागारम् आगमिष्यामि [2]शोभने ।
समागमार्थं सुश्रोणि शपे च सुकृतेन मे ॥ २२॥

यथा त्वां नावबुध्यन्ते गन्धर्वा वरवर्णिनि ।
सत्यं ते प्रतिजानामि गन्धर्वेभ्यो न ते भयम् ॥ २३॥

अलङ्करिष्याम्यद्याहं त्वत्समागमनाय वै ॥ २४

1. क-ख-च-म—वक्ष्यसि। घ—भाषसे।
2. क-ख-घ-च-म—भामिनि।

[1]वैशम्पायनः—

तमर्थं सह जल्पन्त्या द्रौपद्याः कीचकस्य वै ।
क्षणमात्रं तदभवन्मासेनैव समं नृप ॥ २५

कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ।
सैरन्ध्रीरूपिणीं मूढो मृत्युं तां नावबुद्धवान् ॥ २६

गन्धाभरणमाल्येषु व्यासक्तस्स विशेषतः ।
अलङ्कारं चकाराशु सत्वरः कालचोदितः ॥ २७

तस्य तत् कुर्वतः कर्म कालो दीर्घ इवाभवत् ।
अनुचिन्तयतश्चापि तामेवायतलोचनाम् ॥ २८

आसीदभ्यधिका च श्रीश् श्रियं हि प्रमुमुक्षतः ।
निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः ॥ २९

श्रुतसम्प्रत्ययस्तत्र कीचकः काममोहितः ।
नाजानात् पतनं [2]स्वस्य चिन्तयंस्तां शुभाननाम् ॥ ३०

ततस्तु द्रौपदी गत्वा भीमसेनं महानसे ।
उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकात् ॥ ३१

---

1. ख—वासांसि च विचित्राणि मनोज्ञानि तथापि च ।
यथा मां न त्यजेथास्त्वं तथा रंस्ये त्वया सह ॥
द्रौपदी—
तथा चेदप्यहं सूत दर्शयिष्यामि ते सुखम् ।
यथानुभूतं भवता जन्मप्रभृति कीचक ॥ [अधिकः पाठः]

2. अ-क-ङ-ञ—तस्य ।

तमुवाच सुकेशान्ता कीचकस्य कृतो मया ।
सङ्केतो नर्तनागारे यथा चोक्तं नरर्षभ ॥ ३२

कालेन नियतं बद्धः कामेन च बलात्कृतः ।
शून्यं स नर्तनागारम् आगमिष्यति सूतजः ॥ ३३

एको निशि महाबाहो कीचकं तं निषूदय ॥ ३३॥

तं सूतपुत्रं कौन्तेय कीचकं मददर्पितम् ।
गत्वा त्वं नर्तनागारे निर्जीवं कुरु पाण्डव ॥ ३४॥

गर्वितस्सूतपुत्रोऽसौ गन्धर्वानवमन्यते ।
स त्वं प्रहरतां श्रेष्ठ [1]नाळं नाग इवारुज ॥ ३५॥

अस्रं दुःखाभिभूताया मम मार्जस्व पाण्डव ॥ ३६

बाहुवीर्यानुरूपं च दर्शयाद्य पराक्रमम् ।
आत्मनश्चैव भद्रं ते कुरु मानं कुलस्य च ॥ ३७

भीमः—
स्वागतं ते सुकेशान्ते यन्मां वेदयसे प्रियम् ।
न ह्यस्य कञ्चिदिच्छामि सहायं वरवर्णिनि ॥ ३८

या मे प्रीतिस्त्वयाऽऽख्याता कीचकस्य समागमे ।
हत्वा हिडिम्बं या प्रीतिस् सा ममासीच्छुचिस्मिते ॥ ३९
सत्यं भ्रातृंश्च पुत्रांश्च पुरस्कृत्य शपामि ते ।

---

1. क-म—नलं नाग इवाक्षम् । ख-घ—नालं नाग इवोद्धर ।
अ—कालं नाग इवारुजः ।

कीचकं निहनिष्यामि वृत्रं देवपतिर्यथा ॥ ४०

[1]प्रसह्य सूदयिष्यामि केशवः केशिनं यथा ।
रहस्यं वा प्रकाशं वा सूदयिष्यामि कीचकम् ॥ ४१

[2]यस्त्वां कामाभिभूतात्मा दुर्लभामभिमन्यते ॥ ४१॥

अथ चेदनुबुध्यन्ति सूतपुत्रं मया हतम् ।
निर्मनुष्यं करिष्यामि मत्स्यानामिममालयम् ॥ ४२॥

मया हतांश्चेन्मत्स्यांस्तु धार्तराष्ट्रोऽनुबुध्यते ॥ ४३

दुर्योधनं ततो हत्वा सानुबन्धं सबान्धवम् ।
कुरूणामखिलं राज्यं प्रतिपत्स्यामि भामिनि ॥ ४४

नाहं शक्तोऽनुनयितुं कुन्तीपुत्रं युधिष्ठिरम् ।
कामं सत्यमुपासीत कुन्तीपुत्रो युधिष्ठिरः ॥ ४५

काममन्ये [3]ह्युपासन्तु विनीतं धर्मचारिणम् ।
त्वां तु दुःखमिदं प्राप्तां नाहं शक्तोम्युपेक्षितुम् ॥ ४६

निर्वृता भव पाञ्चालि कीचकस्य वधात् पुनः ॥ ४६॥

---

1. अ—प्रहस्य     च—प्रसभं सूद ।
2. क-ख-ग-ङ-च-म—अहं भद्रे हनिष्यामि कीचकं मदनान्वितम् ।
[अधिकः पाठः]
3. म—ष्युपासन्तु विनीता धर्मचारिणः ।
क-ख-घ-च—विनीता धर्मचारिणः ।

[1]द्रौपदी—

कीचकस्य वधं भीम यदि जानन्ति नागराः ।
त्वया कृतं महाबाहो नाहं जीवितुमुत्सहे ॥ ४७॥

कथं सत्याच्च नापेयाद् राजाऽयं मत्कृते प्रभो ।
निगृह्णंस्तं तथा भीम कीचकं विनिपातय ॥ ४८॥

यथा न कश्चिज्जानीते सूतपुत्रं त्वया हतम् ।
तथा कुरुष्व कौरव्य बलवन्नरिमर्दन ॥ ४९॥

अदृश्यमानस्त्वं तस्य भिन्धि प्राणानरिन्दम* ॥ ५०

भीमः—

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
अदृश्यमानस्तस्याहं तमिस्रायां सकुण्डलम् ॥ ५१

नागो बिल्वमिवाक्रम्य पोथयिष्यामि तच्छिरः ।
अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मनः ॥ ५२

[2]वैशम्पायनः—

एवमुक्त्वा महाबाहुस् तत्र पाण्डवनन्दनः ।
[3]अर्धरात्रे तदोत्थाय सत्ववान् भीमविक्रमः ॥ ५३

---

1. क—कथं सत्यमपानीय राजानं मत्कृते प्रभो । [अधिकः पाठः]
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
2. ख—मया यदुक्तं पाञ्चालि धर्मराजसुतं प्रति ।
कोपादृते किमन्यत्तु नानुवर्तेत को नृपम् ॥ [अधिकः पाठः]
3. अ-क-ब-ङ-च-म—अर्धत्रयं नास्ति ।

अवदातेन मृदुना पटेनाच्छादितस्तथा ।
द्रौपदीं पृष्ठतः कृत्वा यत्रासीन्नर्तनालयः ॥ ५४

स भीमः प्रथमं गत्वा तमिस्रायामुपाविशत् ।
मृगं सिंह इवादृश्यः प्रत्याकांक्षत् स कीचकम् ॥ ५५

कीचकस्तु शिरस्स्नातो निशायां समलङ्कृतः ।
सङ्केतमगमत् तूर्णं शून्यागारमपावृतम् ॥ ५६

तदेव नर्तनागारं पाञ्चाली यदभाषत ॥ ५६॥

तां मन्यमानस्सङ्केते सैरन्ध्रीं काममोहितः ॥ ५७

प्रविश्य नर्तनागारं ततस्तं पुरुषर्षभम् ।
पूर्वागतं भीमसेनं दृतमप्रतिमौजसम् ॥ ५८

शयानं शयने तं स मृत्युं मूढः परामृशत् ॥ ५८॥

जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन च ।
उपसङ्क्रम्य चैवैनं कीचकः काममोहितः ॥ ५९॥

[1]*हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ॥ ६०

कीचकः—

प्रहितं ते मया भद्रे बहु वित्तं शुचिस्मिते ।

1. अ—एकान्ते भीममासाद्य कीचकः कालचोदितः ।
भीमं समुपसङ्क्रम्य चाभ्यभाषत दुर्मतिः ॥ [अधिकः पाठः]

* अ-क—इदमर्धं नास्ति ।

त्वयि तिष्ठतु तत् सर्वं यथाऽसि स्वयमागता ॥ ६१

नाकस्मान्मां प्रशंसन्ति सदा गृहगतास्त्रियः ।
बलवान् दर्शनीयश्च नान्यस्ते सदृशः पुमान् ॥ ६२

अहं रूपेण सम्पन्नस् स्नातो भूषणभूषितः ।
नित्यमेव प्रियस्त्रीणां सौभाग्यात् प्रियदर्शनः ॥ ६३

रूपस्यास्य मया प्राप्तं फलं कमललोचने ॥ ६३॥

भीमः—

दिष्ट्या त्वं दर्शनीयोऽसि दिष्ट्याऽऽत्मानं प्रशंससि ॥ ६४

त्वयाऽपीदृग्गुणा नारी शीलरूपसमन्विता ।
अदृष्टपूर्वा पश्येमां यतो जानासि सूतज ॥ ६५

[1]द्रक्ष्यसि त्वं मुहूर्तेन यथेमां स्त्रीगुणान्विताम् ।
उपरंस्यसि कामाच्च शीघ्रं त्वं द्रष्टुमर्हसि ॥ ६६

एवमङ्गस्य संस्पर्शो न ते दृष्टः कदाचन ॥ ६६॥

वैशम्पायनः—

इत्युक्त्वा तं महाबाहुर् भीमो भीमपराक्रमः ।
समुत्पत्य च कौन्तेयः प्रहस्य च नराधमम् ॥ ६७॥

भीमो जग्राह केशेषु माल्यवत्सु सुगन्धिषु ॥ ६८

गृहीत्वा कीचकं भीमो विरराज महाबलः ।

---

1. क-ख-घ-ङ-च—द्रक्ष्यसे त्वं मुहूर्तेन यथेयं स्त्रीगुणान्विता ।

[1]महावने ग्रासकामस् सिंहः क्षुद्रमृगं यथा ॥ ६९

स केशेषु परामृष्टो बलेन बलिनां वरः ।
आक्षिप्य केशान् वेगेन बाह्वोर्जग्राह पाण्डवम् ॥ ७०

बाहुयुद्धं तयोरासीत् क्रुद्धयोर्नरसिंहयोः ।
वसन्ते वाशिताहेतोर् बलिनोरिव नागयोः ॥ ७१

शार्दूलाविव गर्जन्तौ तार्क्ष्यनागाविवोद्धतौ ।
समयत्नौ समक्रोधौ पतितौ भीमकीचकौ ॥ ७२

गजाविव मदोन्मत्तौ गर्जन्तौ पतितौ क्षितौ ।
ऋषभाविव वल्मीकं मृद्नन्तौ समविक्रमौ ॥ ७३

ईषदागलितं [2]चातिक्रोधाच्चलपदं स्थितम् ।
कीचको बलवान् भीमं जानुभ्यां पातयद्भुवि ॥ ७४

पातितो भीमसेनस्तु कीचकेन बलीयसा ।
उत्पपाताथ वेगेन दण्डाहत इवोरगः ॥ ७५

स्पर्धया च बलोन्मत्तौ तावुभौ भीमकीचकौ ।
निःशब्दं पर्यकर्षेताम् अन्योन्यस्य विनिर्जये ॥ ७६

ततस्तद्भुवनश्रेष्ठं प्राकम्पत तदा भृशम् ।
तौ क्रोधवशमापन्नावन्योन्यमभिजघ्नतुः ॥ ७७

---

1. क—गृहीत्वा ग्रासकामस्तु । ख—महावने तु भक्षार्थं ।
2. क-ख-ङ-च-म—भीमं ।

तलाभ्यां भीमसेनेन वक्षस्यभिहतो [1]भृशम् ।
कीचको रोषताम्राक्षो न चचाल पदात् पदम् ॥ ७८

मुहूर्तमशकत् सोढुं वेगं तस्य महात्मनः ।
कीचको भीमसेनस्य पश्चात् पश्चादहीयत ॥ ७९

तं हीयमानं विज्ञाय भीमसेनो महाबलः ।
वक्षस्यानीय वेगेन प्रममाथ विचेतसम् ॥ ८०

क्रोधाविष्टो विनिःश्वस्य पुनश्चैनं वृकोदरः ।
जग्राह जयतां श्रेष्ठः केशेष्वेव भृशं तदा ॥ ८१

[2]गृहीत्वा कीचकं भीमो विरराज महाबलः ।
आमिषार्थे गृहीत्वेव शार्दूलो मृगयूथपम् ॥ ८२

पुनश्चातिबलस्तत्र कीचको बलदर्पितः ।
व्यायच्छन्नेव दुर्धर्षः पाण्डवेन यशस्विना ॥ ८३

मुष्टिना भीमसेनेन शिरस्यभिहतो भृशम् ।
[3]कीचको वृत्तरक्ताक्षो गतासुरपतद्भुवि ॥ ८४

---

1. क-च-म—बली ।
2. अ-ख-च-म—इदमर्धं नास्ति ।
3. ख—महतोत्प्लुत्य वेगेन कीचकोरसि वीर्यवान् ।
जानुभ्यां ताडयामास सोऽपि पादौ प्रगृह्य च ॥
भ्रामयामास वेगेन ताडयामास च क्षितौ ॥
भीमोऽपि बलवान् पादौ मोचयित्वोरुविक्रमः ।
उत्प्लुत्य सोर्ध्वमपतद् कीचकस्य शिरोपरि ॥

तस्य पादौ च पाणी च शिरोग्रीवं सकुण्डलम् ।
काये प्रवेशयामास मृदित्वाऽङ्गानि सर्वशः ॥ ८५

स तं मथितसर्वाङ्गं मांसपिण्डमिवाकरोत् ॥ ८५॥

तस्याग्निं स्वयमुज्ज्वाल्य दर्शयामास कीचकम् ।
[1]कृष्णां प्रोवाच भीमस्तु पश्येमं भृशकामुकम् ॥ ८६॥

---

पूर्वतोऽनुवृत्तम्—
केशे गृहीत्वा चाकृष्य विचकर्ष स सर्वतः ॥
हस्तौ गृहीत्वा भीमस्य कीचको बलगर्वितः।
मोचयित्वा केशपक्षं गले जग्राह पाण्डवम् ॥
गृहीतकण्ठावन्योन्यं पातयामासतू रणे ।
हुङ्कारफूत्कृतोच्छ्वासौ मार्जाराविव कोपिनौ ॥
कीचकोपरि कौन्तेयः कौन्तेयोपरि कीचकः ।
अन्योन्यं पातयित्वैवं मुहूर्तं सूतपाण्डवौ ॥
पुनरुत्थाय तौ वीरावन्योन्यं बाहुशालिनौ ।
बाहुयुद्धमयुध्येतामुपतापप्रकोपितौ ॥
पादाभ्यां चैव जानुभ्यां मुष्टिभ्यां च परस्परम् ॥
एवं तयोः प्रहरतोर् भीमकीचकयोस्तदा ।
स्वनस्समभवद्घोरो विष्फूर्जितमिवाशनेः ॥
लब्ध्वान्तरमथो भीमः पाणिभ्यां कीचकं बली ।
हीयमानं समुद्वीक्ष्य बलआलिङ्गय मत्स्यतः ॥
उत्तानं पातयित्वैनं पादाभ्यामुरसि स्थितः ।
सम्मृज्य पाणिना पांसुं दक्षिणेन दृढाकृतिः ॥
मुष्टिं गृहीत्वा वेगेन शिरस्यभिजघान ह ॥
मुष्टिना तेन तेनासौ निर्यज्जिह्वाक्षितारकः ।
विसृजन्मलमूले च क्रोशन्माहिषवत् स्वरम् ॥ [अधिकः पाठः]

1. क-म—कृष्णायै दर्शयामास पश्यैनं सुभ्रु कामुकम् ।

उवाच च महातेजा द्रौपदीं पाण्डुनन्दनः ॥ ८७

भीमः—

पश्यैनमेहि पाञ्चालि [1]कामक्रोधकृतागसम् ॥ ८७॥

प्रार्थयन्ते सुकेशान्ते ये त्वां शीलसमन्विताम् ।
एवं [2]स्वप्स्यन्ति ते भीरु शेतेऽयं कीचको यथा ॥ ८८॥

वैशम्पायनः—

तथा स कीचकं हत्वा गत्वा रोषस्य निष्कृतिम् ।
आमन्त्र्य द्रौपदीं पश्चात् क्षिप्रमायान्महानसम् ॥ ८९॥

[3]स्नात्वाऽनुलेपनं कृत्वा प्रपूर्य च मनोरथम् ।
सुखोपविष्टश्शयने भीमो भीमपराक्रमः ॥ ९०॥

ततः कृष्णा यदा मेने गतं भीमं महानसे ।
कीचकं घातयित्वा च द्रौपदी योषितां वरा ॥ ९१॥

प्रहृष्टा गतसन्त्रासा सभापालानुवाच ह ॥ ९२

द्रौपदी—

कीचकोऽयं हतश्शेते गन्धर्वैः पतिभिर्मम ।
परस्त्रीकामसन्तप्तं तदागच्छत पश्यत ॥ ९३

वैशम्पायनः—

तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ।
सहसैव तदा जग्मुर् उल्कामादाय सर्वशः ॥ ९४

[4]तत्र तं निनदं श्रुत्वा कीचकस्य सहोदराः ।

---

1. अ-क-ङ-च-म—कामुकोऽयं कृतागसः ॥
2. ख-घ-म—स्वपन्ति । 3. म—अत्र अर्धत्रयं नास्ति ।
4. अ-ख-ग-ङ-च-म—इदमर्धं नास्ति

ततो गत्वाऽथ तद्वेश्म कीचकं विनिपातितम् ॥ ९५

गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम् ॥ ९५॥

पाणिपादशिरोहीनं दृष्ट्वा ते विस्मयं गताः ॥ ९६

क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरः क्व दृक् ।

इति तं सुपरीक्षन्ते गन्धर्वेण हतं तदा ॥ ९७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि विंशोऽध्यायः ॥ २० ॥

॥ ४६ ॥ कीचकवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ९७ श्लोकाः]

---

## ॥ एकविंशोऽध्यायः ॥

भ्रातृवधामर्षितैरुपकीचकैः पाञ्चाल्याः कीचकेन सह चरमविमान-समारोपणेन श्मशानप्रापणम् ॥१॥ द्रौपद्याक्रन्दनिनदश्रवणात् पितृवनमुपागतवता भीमेनोपकीचकानां पञ्चाधिकशतस्य पञ्चताप्रापणम् ॥ २ ॥ भीमेन द्रौपद्याः समाश्वासनेन स्वावासप्रेषणपूर्वकं महानसप्रवेशः ॥ ३ ॥

---

वैशम्पायनः—

[1]तस्मिन् काले समागम्य सर्वे तत्रास्य बान्धवाः ।

[2]रुरुदुः कीचकं दृष्ट्वा परिवार्योपतस्थिरे ॥ १

सर्वे संहृष्टरोमाणस् सन्त्रस्ताः प्रेक्ष्य कीचकम् ।

---

1. ख—तत्काले तु । घ-ङ-च-म—ततः काले ।
2. ङ—तस्य तन्निधनं श्रुत्वा कीचकस्य सहोदराः ॥ [अधिकः पाठः]

तथा सर्वाङ्गसम्भुग्नं कूर्मं स्थल इवोद्धृतम् ॥ २

तं हतं भीमसेनेन महेन्द्रेणेव दानवम् ।
कीचकं बलसम्मत्तं दुर्धर्षं येन केन चित् ॥ ३

गन्धर्वेण हतं श्रुत्वा कीचकं पुरुषर्षभम् ।
संस्कारयितुमिच्छन्तो बहिर्नेतुं प्रचक्रमुः ॥ ४

अपश्यन्नथ ते कृष्णां सूतपुत्रास्समागताः ।
अदूरादनवद्याङ्गीं स्तम्भमा[1]लम्ब्य तिष्ठतीम् ॥ ५

समवेतेषु सर्वेषु तानुवाचोपकीचकः ।
हसन्निव तदाऽमर्षाग्निर्दहन्निव चक्षुषा ॥ ६

उपकीचकः—

हन्यतां शीघ्रमसती यत्कृते कीचको हतः ।
अथवा नैव हन्तव्या दह्यतां कामिना सह ॥ ७

मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा ।
इयं हि दुष्टचारित्रा मम भ्रातुरमित्रिणी ॥ ८

यत्कृते मरणं प्राप्तो नेयं जीवितुमर्हति ।
सहेयं दह्यतां सूता आपृच्छ्य च जनाधिपम् ॥ ९

हतस्यापि च गन्धर्वैः कीचकस्य प्रियं भवेत् ॥ ९॥

वैशम्पायनः—

ततो विराटमागम्य सूताः प्राञ्जलयोऽब्रुवन् ॥ १०

1. क-ख-ङ-म—लिङ्ग्य । (घ) रुह्य ।

सूताः—

कीचकोऽयं हतश्शेते गन्धर्वैः कामरूपिभिः ।
सैरन्ध्र्या घातितो रात्रौ तं दहेम सहानया ॥ ११

मानितास्मस्त्वया राजंस् तदनुज्ञातुमर्हसि ॥ ११॥

वैशम्पायनः—

पराक्रमं तु सूतानां ज्ञात्वा राजाऽन्वमन्यत ।
[1]सैरन्ध्र्यास्सूतपुत्रेण सह दाहं जनाधिपः ॥ १२॥

ततस्ते समनुज्ञातास् सर्वे तलास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्योपतस्थिरे ॥ १३॥

आरोप्य कृष्णामथ कीचकेन
निबध्य केशेषु च पादयोश्च ।
ते चापि सूता वचनैरवोच-
न्नुद्दिश्य कृष्णामभिवीक्ष्य चैनाम् ॥ १४॥

सूताः—

यस्याः कृतेऽयं निहतो महात्मा
तस्माद्धि सा कीचकमार्गमेतु ।
अनर्घ्यसत्वेन सहार्यसत्त्वा
गतासुना सुन्दरि कीचकेन ॥ १५॥

वैशम्पायनः—

[2]साऽशेत कृष्णा शयने निबद्धा
मनस्विनी चैव यशस्विनी च ।

---

1. अ-क—सैरन्ध्री सूतपुत्रेण सह दग्धा जनाधिपः ।
2. अ-च—इदमर्धं नास्ति

[1]निवेपमाना विवशा हि दुष्टैस्
तत्रैव पर्यङ्कवरे शुभाङ्गी ॥ १६॥

ह्रियमाणाऽथ सुश्रोणी सूतपुत्रैरनिन्दिता ।
प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥ १७॥

[2]द्रौपदी—

जयो जयेशो विजयो जयत्सेनो जयद्बलः ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ १८॥

येषां दुन्दुभिनिर्घोषो ज्याघोषश्श्रूयते महान् ।
[3]ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ १९॥

येषां ज्यातलनिर्घोषो विष्फूर्जितमिवाशनेः ।
अश्रूयत महान् युद्धे भीमघोषस्तरस्विनाम् ॥ २०॥

रथघोषश्च बलवान् गन्धर्वाणां तरस्विनाम् ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥ २१॥

येषां धैर्यमतुल्यं तु शक्रस्येव बलं यशः ।
राजसिंहा इवाग्र्यास्ते मां जानन्तु सुदुःखिताम् ॥ २२॥

वैशम्पायनः—

इत्यस्याः कृपणा वाचः कृष्णायाः परिदेविताः ।

---

1. क-ख-ब-ङ-म—विलम्बमाना ।
2. ख—मृतेन सह बद्धाङ्गी निराशा जीविते तदा ।
श्मशानाभिमुखं नीता करेणुरिव रौति सा । [अधिकः पाठः]
3. अ-ब-ङ-च-म—इदमर्धं नास्ति

श्रुत्वैवाभ्युत्थितो भीमश् शयनादविचारयन् ॥ २३॥

भीमः—

अहं सैरन्ध्रि ते वाचश् शृणोमि [1]तव भाषितम् ।
तस्मात् ते सूतपुत्रेभ्यो भयं जातु न विद्यते ॥ २४॥

वैशम्पायनः—

इत्युक्त्वा स महाबाहुर् विजजृम्भे जिघांसया ॥ २५

ततस्स व्यायतं बद्ध्वा वस्त्रं च परिवेष्ट्य च ।
अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा ॥ २६

स लङ्घयित्वा प्राकारम् आरुह्य तरसा द्रुमम् ।
श्मशानाभिमुखः प्रायाद् यतस्ते कीचका गताः ॥ २७

स लङ्घयित्वा प्राकारं निस्सृत्य च पुरोत्तमात् ।
जवेनोत्पतितो भीमस् सूतानामग्रतस्तदा ॥ २८

चितासमीपं गत्वा तु तत्रापश्यन्महाबलः ।
[2]तालमात्रं महास्कन्धम् ऊर्ध्वशुष्कं वनस्पतिम् ॥ २९

तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च ।
वृक्षमुत्पाटयामास भीमो भीमपराक्रमः ॥ ३०

ततो वृक्षं दशव्यामं निष्पत्रमकरोत् तदा ॥ ३०॥

1. म-घ—तव भाषिताः। क—मयि भाषिताः। ख—परिभाषिताः।
2. क-म—साक। ख-घ—काय।

तं महासालमुद्यम्य भ्रामयित्वा च वेगतः ।
प्रगृह्याभ्यपतत् सूतान् दण्डपाणिरिवान्तकः ॥ ३१॥
ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः ।
भूमौ निपतिता वृक्षास् सम्भग्नास्तत्र शेरते ॥ ३२॥
तं सिंहमिव सङ्क्रुद्धं दृष्ट्वा गन्धर्वमागतम् ।
वित्रेसुस्सर्वतस्सूता विषादभयपीडिताः ॥ ३३॥
तमन्तकमिव क्रुद्धं गन्धर्वभयशङ्किताः ।
दिधक्षन्तस्तथा ज्येष्ठं भ्रातरं चोपकीचकाः ॥ ३४॥
परस्परमथोचुस्ते विषादभयमोहिताः ॥ ३५

उपकीचकाः—

गन्धर्वो बलवानेति क्रुद्ध उद्यम्य पादपम् ।
प्रबुद्धास्सुमहाभागा गन्धर्वास्सूर्यवर्चसः ॥ ३६
सैरन्ध्री मुच्यतां शीघ्रं भयं नो महदागतम् ॥ ३६॥

वैशम्पायनः—

तेऽथ दृष्ट्वा तमाविद्धं भीमसेनेन पादपम् ।
विमुच्य द्रौपदीं [1]तूर्णं प्राद्रवन् नगरं प्रति ॥ ३७॥
द्रवतस्तांश्च सम्प्रेक्ष्य स वज्री दानवानिव ।
[2]शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ॥ ३८॥

---

1. क-ख-च-म—त्रस्ताः ।
2. ख —अथ भीमस्समुत्पत्य द्रवतां पुरतोऽपतत् ।
　　ते तं दृष्ट्वा भयोद्विग्ना निश्चेष्टास्समवस्थिताः ॥
　　दृष्ट्वैव शतसंख्याकान् स वज्री दानवानिव ।
　　एकेनैव प्रहारेण दश सप्त च विंशतिम् ॥
　　त्रिंशच्चत्वारि पञ्चाशज् जघान स वृकोदरः ॥　　[अधिकः पाठः]

वायुवेगसमश्श्रीमान् [1]सर्वान् सूतानशेषतः ॥ ३९
तान् निहत्य महाबाहुर् भीमसेनो महाबलः ।
आश्वासयंस्ततः कृष्णां प्रतिमुच्य च बन्धनात् ॥ ४०
उवाच च महाबाहुः पाञ्चालीं भरतर्षभः ।
अश्रुपूर्णमुखीं भीताम् उद्धरन् स वृकोदरः ॥ ४१

भीमः—
[2]एवं ते भीरु वध्यन्ते ये त्वां हिंसन्ति मानवाः ।

---

1. क–च–म—हत्वा
2. ख—मा खिद्य त्वं याज्ञसेनि पातिव्रत्यव्रते स्थिता ।
पातिव्रत्यस्थिता नारी व्रतं रक्षेत् सदाऽऽत्मनः ॥
पुरा स्त्री देवरातस्य पतिप्रीता शिरोमणिः ? ।
कदाचिद् भर्तृरूपेण रक्षसाऽपहृता सती ॥
कस्य चित् सरसस्तीरे तां निवेश्य स राक्षसः ।
तद्भर्तृरूपं सन्त्यज्य रक्षो भूत्वा सुदारुणम् ॥
साम्ना दानेन भेदेन सा यदा नान्वमन्यत ।
तदा तां पातयित्वा तु मैथुनायोपचक्रमे ॥
ततस्सा धैर्यमास्थाय विवरं न ददौ तदा ।
ततस्स खड्गमुत्कृत्य भीषयामास तां सतीम् ॥
साऽपि त्यक्तभया साध्वी प्राणत्यागे सुनिश्चिता ।
प्रतिज्ञामकरोत् कृष्णे पातिव्रत्यपरायणा ॥
आराधितो यदि मया भर्ता मे दैवतं महत् ।
कर्मणा मनसा वाचा गुरवस्तोषिता मया ॥
तेन सत्येन योनिर्मे भवत्वद्य शिला दृढा ।
एवं तया प्रतिज्ञाते तद्योनिस्सा शिलाऽभवत् ॥
अन्तरा नाभिजान्वोर्यत् तत्सर्वं च शिलाऽभवत् ।
ततस्स खड्गमुद्धृत्य वेगेनास्याश्शिरोऽहरत् ॥
अया नाम सखी साऽभूत् पार्वत्या नखमांसवत् ।
तस्मात् पतिव्रतायाश्च दुःखमल्पं सुखं बहु ॥ [अधिकः पाठः]

गच्छ त्वं नगरं कृष्णे न भयं विद्यते तव ॥ ४२

अन्येन च पथा शीघ्रं सुदेष्णाया निवेशनम् ।
अन्येनाहं गमिष्यामि विराटस्य महानसम् ॥ ४३
यथा नौ नावबुध्येरन् रात्रावेवं व्यवस्थितौ ॥ ४३॥

वैशम्पायनः—

साऽगच्छन्नगरं कृष्णा भीमेनाश्वासिता सती ।
कृतकृत्या सुदेष्णाया भवनं शुभलक्षणा ॥ ४४॥
शचीव नहुषे शप्ते प्रविवेश त्रिविष्टपम् ॥ ४५

भीमोऽप्यमितवीर्यस्तु बलवानरिमर्दनः ।
सर्वांस्तान् कीचकान् हत्वा तत्र धर्मात्मजानुजः ॥ ४६

निश्शेषं कीचकान कृत्वा रामो रात्रिचरानिव ।
जितशत्रुरदीनात्मा प्रविवेश पुरं ततः ॥ ४७

पञ्चाधिकं शतं तत्र निहतं तेन भारत ।
महावनमिव छिन्नं शिश्ये विगलितद्रुमम ॥ ४८

एवं ते निहता राजन् शतं पञ्चोपकीचकाः ।
स च सेनापतिस्सूत इत्येतत् सूतषट्शतम् ॥ ४९

न गन्धर्वभयाच्छेकुर् वक्तुं कीचकबान्धवाः ।
अशक्नुवन्तस्तां तत्र भयादप्यभिवीक्षितुम् ॥ ५०

विराटनगरे चापि सर्वे मात्स्यास्समागताः ।

कल्यं पञ्चशतं चैतान् अपश्यन् सारथीन् हतान् ॥ ५१

तान् दृष्ट्वा महदाश्चर्यं नरा नार्यश्च नागराः ।
विस्मयं परमं गत्वा नोचुः किञ्चन भारत ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

॥ ४६ ॥ कीचकवधपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये ५२ श्लोकाः]

---

## ॥ द्वाविंशोऽध्यायः ॥

---

पौरैर्विराटं प्रति सानुजकीचकनिधननिवेदनपूर्वकं नगराद्द्रौपदीनिष्कासनप्रार्थना ॥ १ ॥ सुदेष्णया विराटनियोगाद्द्रौपदीं प्रति स्वपुरान्निर्गमनचोदना ॥ २ ॥ तथा द्रौपद्या मासावधिस्ववासाभ्यनुज्ञानप्रार्थनायां तदङ्गीकरणम् ॥ ३ ॥

---

वैशम्पायनः—

ते दृष्ट्वा निहतान् सूतान् गत्वा राज्ञे न्यवेदयन् ।
[1]गन्धर्वैर्निहतान् राजन् शतं पञ्चोपकीचकान् । १

पौराः—

यथा वज्रेण वै भिन्नं पर्वतस्य महच्छिरः ।
[2]विनिकीर्णाः प्रदृश्यन्ते तथा सूता महीपते ॥ २

---

1. ख—पौराश्च सहितास्सर्वे राज्ञे गत्वा न्यवेदयन् । [अधिकः पाठः]
2. क-ख-म—विनीकीर्णे प्रदृश्येत तथा सूता महीतले ।

सैरन्ध्री चापि मुक्ता सा पुनरायाति ते गृहम् ।
सर्वं संशयितं राजन् नगरं ते भविष्यति ॥ ३

तथारूपा च सैरन्ध्री गन्धर्वाश्च महाबलाः ।
पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ४

यथा सैरन्ध्रिवेषेण नेदं राजन् पुरं तव ।
विनाशमेति वै क्षिप्रं तथा साधु विधीयताम् ॥ ५

[1]वैशम्पायनः—
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः ।
अब्रवीत् क्रियतामेषां सूतानां परमक्रिया ॥ ६

एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
दह्यन्तां कीचकास्सर्वे सर्वगन्धैश्च सर्वशः ॥ ७

[2]सुदेष्णां चाब्रवीद्राजा महिषीं जातसाध्वसः ॥ ७॥

---

1. ख—सर्वाङ्गसौष्ठवयुतां रूपलावण्यशालिनीम् ।
पश्यतामनिमेषेण चक्षुषा वनितां शुभाम् ॥
मनसश्चक्षुषश्चैव प्रतिबन्धो न विद्यते ॥
तस्मात् तां यः पुमान् दृष्ट्वा रूपेणाप्रतिमां भुवि ।
गच्छेत् कामवशं मूढो गन्धर्वैस्स निहन्यते ॥
निष्कासयैनां भवनात् पुरावैव विशेषतः ॥
कामः प्रविश्य सैरन्ध्री पुरं नाशयते ध्रुवम् ॥ [अधिकः पाठः]

2. ख—वैशम्पायनः—
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
अदहन् कीचकान् सर्वान् संस्कारैश्चैव सर्वशः ॥
[अधिकः पाठः]

विराटः—

सैरन्ध्रीमागतां ब्रूया ममैव वचनादिह ।
गच्छ सैरन्ध्रि भद्रं ते यथाकामं चराधुना ॥ ८॥

बिभेति राजा सैरन्ध्रि गन्धर्वेभ्यः पराभवात् ॥ ९

न हि तामुत्सहे वक्तुं [1]गन्धर्वैरभिरक्षिताम् ।
स्त्रियास्त्वदोषस्तां वक्तुम् अतस्त्वां प्रब्रवीम्यहम् ॥ १०

वैशम्पायनः—

अथ मुक्ता भयात् कृष्णा सूतपुत्रान् निरस्य तु ।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ ११

त्रासितेव मृगी बाला शार्दूलेन मनस्विनी ।
सा तु गात्राणि वासश्च प्रक्षाल्य प्रविवेश ह ॥ १२

तां दृष्ट्वा पुरुषा राजन् प्राद्रवन्ति दिशो दश ।
गन्धर्वाणां भयत्रस्ताः केचिद् दृष्टिं न्यमीलयन् ॥ १३

ततो महानसद्वारे भीमसेनमवस्थितम् ।
ददर्श राजन् पाञ्चाली यथा मत्तं महाद्विपम् ॥ १४

सापहासं तु शनकैस् संज्ञाभिरिदमब्रवीत् ॥ १४॥

सैरन्ध्री—

नमो गन्धर्वराजाय येनास्मि परिमोक्षिता ।
कीचकेभ्यो विनिर्दोषाम् अनाथां वसतीं गृहे ॥ १५॥

यो मां रक्षति सन्त्रस्तां गन्धर्वाय नमोऽस्तु ते ॥ १६

भीमः—

ये पुरा पुरुषास्तुभ्यं भवन्ति वशवर्तिनः ।

---

1. अ-ख-ब-च-म—स्वयं गन्धर्वरक्षिताम् ।

तेषां वशगता नित्यं विचर त्वं यथेष्टतः ॥ १७

ये यस्या विचरन्तीह पुरुषा वशवर्तिनः ।
तस्यास्ते वचनं श्रुत्वा ह्यनृणा [1]विहरन्त्वितः ॥ १८

वैशम्पायनः—

तयोस्तद्वचनं श्रुत्वा जज्ञिरे नेतरे जनाः ।
ततः पाञ्चालराजस्य सुता चापि जगाम ह ॥ १९

ततस्सा नर्तनागारे धनञ्जयमपश्यत ।
राज्ञः कन्या विराटस्य नर्तयन्तं महाभुजम् ॥ २०

ततस्ता नर्तनागाराद् विनिष्क्रम्य सहार्जुनाः ।
कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसीम् ॥ २१

कन्याः—

दिष्ट्या सैरन्ध्रि मुक्ताऽसि दिष्ट्याऽसि पुनरागता ।
दिष्ट्या विनिहतास्सूता ये त्वां क्लिश्यन्त्यनागसीम् ॥ २२

बृहन्नला—

कथं सैरन्ध्रि मुक्ताऽसि कथं पापाश्च ते हताः ।
इच्छामि ते कथां श्रोतुं कथयस्व यथातथम् ॥ २३

सैरन्ध्री—

बृहन्नले किं नु तव सैरन्ध्र्या कार्यमद्य वै ।
या त्वं वससि कल्याणि सदा कन्यापुरे सुखम् ॥ २४

---

1. क-घ-ङ-म—विचरन्त्युत ।

न हि तद्दुःखमाप्नोषि सैरन्ध्री यदुपाश्नुते ।
[1]तेन मां दुःखितामेवं पृच्छसि प्रहसन्निव ॥ २५

बृहन्नला—

बृहन्नलाऽपि कल्याणि दुःखमाप्नोत्यनन्तकम् ।
तिर्यग्योनिं गतां बाले न चैनामवबुध्यसे ॥ २६

वैशम्पायनः—

ततस्सहैव कन्याभिर् द्रौपदी राजवेश्म तत् ।
प्रविवेश सुदेष्णायास् समीपमपलायिनी ॥ २७

तामब्रवीद्राजपत्नी विराटवचनादिदम् ॥ २७॥

सुदेष्णा—

सैरन्ध्रि गम्यतां तत्र यत्र कामयसे गतिम् ।
राजा बिभेति सैरन्ध्रि गन्धर्वेभ्यः पराभवात् ॥ २८॥

त्वं चापि तरुणी सुभ्रू रूपेणाप्रतिमा भुवि ।
चित्तानि च नृणां शुभ्रे रक्तानि स्पर्शजे सुखे ॥ २९॥

तस्मात् त्वत्तो भयं मह्यं राष्ट्रस्य नगरस्य च ।
गच्छाद्यैव यथेष्टं त्वं नगराद्यत्र रंस्यसे ॥ ३०॥

त्वन्निमित्तं शुभे मह्यं सर्वो बन्धुजनो हतः ।
नृशंसा खलु ते बुद्धिर् भ्रातृणां मे वधः कृतः ॥ ३१॥
तस्माद्गन्धर्वराजेभ्यो भयमद्य प्रवर्तते ।

1. ख—सुखेन वर्तसे येह न तद्दुःखमवाप्यते । [अधिकः पाठः]

यथेष्टं गच्छ सैरन्ध्रि इह स्वस्ति यथा भवेत् ॥ ३२॥

वैशम्पायनः—

सुदेष्णावचनं श्रुत्वा सैरन्ध्री चेदमब्रवीत् ॥ ३३

सैरन्ध्री—

त्रयोदशाहमात्रं तु राजा क्षाम्यतु भामिनि ।

कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ॥ ३४

ततो मामुपनेष्यन्ति करिष्यन्ति च ते प्रियम् ।

ध्रुवं च श्रेयसा राजा योक्ष्यते सह बन्धुभिः ॥ ३५

राज्ञा कृतोपकाराश्च कृतज्ञाश्च सदा शुभे ।

साधवश्च बलोत्सिक्ताः कृतप्रतिकृतेप्सवः ॥ ३६

अर्थिनी [1]मां ब्रवीत्येषा यद्वा तद्वेति चिन्तय ।

भरस्व तदहर्मात्रं ततश्श्रेयो भविष्यति ॥ ३७

वैशम्पायनः—

तस्यास्तद्वचनं श्रुत्वा कैकेयी दुःखमोहिता ।

उवाच द्रौपदीमार्ता भ्रातृव्यसनकर्शिता ॥ ३८

वस भद्रे यथेष्टं त्वं त्वामहं शरणं गता ।

त्रायस्व मम भर्तारं पुत्रांश्चैव विशेषतः ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ४६ ॥ कीचकवधपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये ३९ श्लोकाः]
॥ समाप्तं च कीचकवधपर्व ॥

---

1. क-म—मब्रवीत्येषा । ख—त्वां ब्रवीत्येषा । ग—मा ब्रवीरेषा ।

## ॥ त्रयोविंशोऽध्यायः ॥

( गोग्रहणपर्व )

पाण्डवान्वेषणाय क्रमेण विराटपुरमागतैश्चारैर्हास्तिनपुरमेत्य दुर्योधनं प्रति स्वेषां पाण्डवानवगतिनिवेदनपूर्वकं कीचकवधनिवेदनम् ॥ १ ॥

वैशम्पायनः—

कीचके तु हते राजा विराटः परवीरहा ।
शोकमाहारयत् तीव्रं सामात्यस्सपुरोहितः ॥ १

कीचकस्य तु घातेन सानुजस्य विशाम्पते ।
[1]अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ॥ २

तस्मिन् पुरे जनपदे जजल्पुश्चापि [2]सर्वशः ॥ २॥

पौराः—

वीर्यवान् दयितो राज्ञो दर्पोत्सिक्तश्च कीचकः ।
साम्पराये परिक्रुष्टो बलवान् दुर्जयो रणे ॥ ३॥
आसीत् प्रहर्ता शत्रूणां [3]दारदर्शी च दुर्मतिः ।
स हतः किल गन्धर्वैस् सैरन्ध्रीकारणान्निशि ॥ ४॥

वैशम्पायनः—

इत्यजल्पन् महाराज कीचकानां महावधम् ।
देशे देशे मनुष्याश्च विस्मिताः कीचके हते ॥ ५॥

---

1. ब-ङ—अत्यायितं चिन्तयित्वा विस्मयन्तः ।
2. क—सङ्गताः । ख-घ-ङ-म—सङ्घशः ।
3. ख-ब—चित्रदर्शी । क—दूरदर्शी

अथ ते धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः ।
मृगयित्वा बहून् देशान् ग्रामांश्च नगराणि च ॥ ६॥
संविधाय यथाऽऽदिष्टं यथादेशं प्रदर्शकाः ।
कृतसङ्केतनास्सर्वे न्यवर्तन्त पुरं ततः ॥ ७॥
आगम्य हास्तिनपुरं धार्तराष्ट्रमरिन्दमम् ।
[1]तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम् ॥ ८॥
प्रणम्य शिरसा भूमौ वर्धयित्वा जयाशिषा ।
आसीनं सूर्यसंकाशे काञ्चने परमासने ॥ ९॥
उपास्यमानं सचिवैर् मरुद्भिरिव वासवम् ।
द्रोणकर्णकृपैस्सार्धं भीष्मेण च महात्मना ॥ १०॥
सङ्गतं भ्रातृभिश्चापि त्रिगर्तैश्च महारथैः ।
[2]दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥ ११॥

चाराः—

कृतोऽस्माभिः परो यत्नस् तेषामन्वेषणे सदा ।
पाण्डवानां मनुष्येन्द्र तस्मिन् महति कानने ॥ १२॥
निर्जने व्यालसङ्कीर्णे नानाद्रुमलताकुले ।
[3]लताप्रतानगहने नानागुल्मसमावृते ॥ १३॥

---

1. अ-म-च—इदमर्धं नास्ति ।
2. ख—विद्वद्भिस्साधकैस्सार्धं कविभिः स्तुतिपाठकैः ।
अनेकैरपि राजन्यैः सेवितं सपरिच्छदैः ॥ [अधिकः पाठः]
3 ङ—इ दमर्धं नास्ति ।

न च विद्मो गतिं तेषां पाण्डवानामरिन्दम ।
मार्गमाणाः पदन्यासम् आश्रमेषु वनेषु च ॥ १४॥

गिरिकूटेषु तुङ्गेषु नानाजनपदेषु च ।
जनाकीर्णेषु सर्वेषु चत्वरेषु पुरेषु च ॥ १५॥

नरेन्द्र सहसा नष्टान् नैव विद्म च पाण्डवान् ॥ १६
अत्यन्तनाशं नष्टास्ते भद्रं तुभ्यं नरर्षभ ॥ १६॥

गिरीणां कूटकुञ्जेषु कन्दरान्तरसानुषु ।
नदीप्रस्रवणेष्वेव ह्रदेषु च सरस्सु च ॥ १७॥

गह्वरेषु च दुर्गेषु ग्रामेषूपवनेषु च ।
दुर्विज्ञेया गतिस्तेषां मृग्यतेऽस्माभिरेव च ॥ १८॥
गजव्याघ्रसमीपेषु सिंहान्ते शरभान्तरे ।
वर्त्मन्यन्विच्छमानास्तु रथानां रथिसत्तम ॥ १९॥
कञ्चित् कालं मनुष्येन्द्र सूतानानुगता वयम् ॥ २०
मृगयित्वा यथान्यायं विदितार्थाश्च तत्त्वतः ।
प्राप्ता द्वारवतीं पार्थान् ऋते सूताः परन्तप ॥ २१

[1]न तत्र पाण्डवा राजन् नापि कृष्णा महाव्रता ।
नरदेव यथोद्दिष्टं न च विद्मात्र पाण्डवान् ॥ २२

---

1. ख—सन्तीतरे जनपदाः ये पार्थान्वेषणे नृप ।
प्राचीहतास्तेऽस्माभिः ? प्रतीचीमण्डलेऽखिले ॥ [अधिकः पाठः]

निर्वृतो भव नष्टास्ते स्वस्थो भव परन्तप ॥
[1]सर्वथैव प्रणष्टास्ते नमस्ते भरतर्षभ ॥ २३

सर्वा च पृथिवी कृत्स्ना सशैलवनकानना ।
सराष्ट्रनगरग्रामा पत्तनैश्च समन्विता ॥ २४
अन्वेषिता च सर्वत्र न च पश्याम पाण्डवान् ॥ २४॥

पुनश्शाधि मनुष्येन्द्र अत ऊर्ध्वं विशाम्पते ।
अन्वेषणे पाण्डवानां भूयः किं करवामहे ॥ २५॥

इमां च नः प्रियामीषद् वाचं भद्रवतीं शृणु ॥ २६
येन त्रिगर्ता निकृता बलेन बहुशो नृप ।
सूतेन राज्ञो मत्स्यस्य कीचकेन महात्मना ॥ २७
स हतः पतितश्शेते गन्धर्वैर्निशि भारत ॥ २७॥
स्यालो राज्ञो विराटस्य सेनापतिरुदारधीः ।
सुदेष्णाया[2]स्स वै ज्येष्ठश् शूरो वीरो गतव्यथः ॥ २८॥
उत्साहवान् महावीर्यो नीतिमान् बलवानपि ।
युद्धज्ञो रिपुवीरघ्नस् सिंहतुल्यपराक्रमः ॥ २९॥
प्रजारक्षणदक्षश्च शत्रुग्रहणशक्तिमान् ।
विजितारिर्महायुद्धे प्रचण्डो मानतत्परः ॥ ३०॥
नरनारीमनोह्लादी धीरो वाग्मी रणप्रियः ।

1. ख—सर्वथैव प्रणष्टास्ते स्वस्थो भव परन्तप । [अधिकः पाठः]
2. क-ख-च-ङ-म—महान् ।

पुण्यकर्मोऽर्थकामानां भाजनं मनुजोत्तमः ॥ ३१॥

स हतो निशि गन्धर्वैस् स्त्रीनिमित्तं नराधिप ।
[1]अमृष्यमाणो दुष्टात्मा निशीथे सह सोदरैः ॥ ३२॥

सुहृदश्चास्य निहता योधाश्च प्रवरा हताः ॥
इत्येवं श्रुतमस्माभिर् गन्धर्वैर्निहतो निशि ॥ ३३॥

बान्धवैर्बहुभिस्सार्धं कीचको निहतो [2]निशि ॥ ३४

अद्यप्रभृति राजेन्द्र पाण्डवान्वेषणं प्रति ।
चारांश्च सर्वतस्स त्वं प्रेषयेति मतिर्हि नः ॥ ३५

निहतो निशि गन्धर्वैर् दुष्टात्मा भ्रातृभिस्सह ॥ ३५॥

प्रियं तदुपसंश्रुत्य शत्रूणां तु पराभवम् ।
[3]कृतकृत्यस्तु कौरव्य विधत्स्व यदनन्तरम् ॥ ३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ ४७ ॥ गोग्रहणपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ३६॥ श्लोकाः]

---

1. ख—गन्धर्वाणां च महिषी काचिदस्ति नितम्बिनी ।
सैरन्ध्री नाम तां दृष्टो दुष्टात्माऽकामयद्बली ॥ [अधिकः पाठः]

2. क-ख-घ-ङ-म—ऽभवत् ।

3. ख—एतावच्छ्रुतमस्माभिर् भद्रं तेऽस्तु नराधिप । [अधिकः पाठः]

## ॥ चतुर्विंशोऽध्यायः ॥

दुर्योधनादिभिः पाण्डवान्वेषणाय समालोचनम् ॥ १ ॥

वैशम्पायनः—

ततो दुर्योधनो राजा श्रुत्वा तेषां वचस्तदा ।
चिरमन्तर्मना भूत्वा इदमाह सभासदः ॥ १

दुर्योधनः—

अशक्या खलु कार्याणां गतिर्ज्ञातुं हि तत्वतः ।
तस्मात् सर्वे परीक्षध्वं क नु स्युः पाण्डवा गताः ॥ २

अल्पावशिष्टः कालस्तु गतभूयिष्ठ एव च ।
तेषामज्ञातचर्यायाम् अस्मिन् वर्षे त्रयोदशे ॥ ३

अपि वर्षं च शेषं चेद् व्यतीयुरिह पाण्डवाः ।
निवृत्तसमयास्तेऽपि सत्यव्रतपरायणाः ॥ ४

क्षरन्त इव नागेन्द्रास् सर्वे ह्याशीविषोपमाः ।
दुःखाद्भवेयुस्संरब्धाः कौरवान् प्रति ते ध्रुवम् ॥ ५

विज्ञातव्या मनुष्येन्द्रास् तर्कया सुप्रणीतया ।
निपुणैश्चारपुरुषैः प्राज्ञैर्दक्षैस्सुसंवृतैः ॥ ६

अज्ञातसमये ज्ञाताः कृच्छ्ररूपधराः पुनः ।
प्रविशेयुर्जितक्रोधास् तावदेव पुनर्वनम् ॥ ७

तस्मा[1]दाशु परीक्षध्वं यथा चात्यन्तमव्ययम् ।
राज्यं निर्द्वन्द्वमव्यग्रम् असपत्नं चिरं भवेत् ॥ ८

[2]वैशम्पायनः—

ततः कर्णोऽब्रवीद्वाक्यम् अन्ये गच्छन्तु भारत ।
[3]शीघ्रवृत्ता नरा योग्या निपुणाश्छन्नचारिणः ॥ ९
चरन्तु देशान् [4]विविधान् स्फीताञ्जनपदाकुलान् ॥ ९॥
तत्र गोष्ठेष्वरण्येषु सिद्धा ब्राह्मणरूपिणः ।
परिवाहेषु तीर्थेषु विविधेष्वाकरेषु च ॥ १०॥
अन्वेष्टव्या मनुष्येन्द्र पाण्डवाश्छन्नचारिणः ॥ ११
नदीकूलेषु तीर्थेषु ग्रामेषु नगरेषु च ।
आश्रमेषु च रम्येषु पर्वतेषु वनेषु च ॥ १२
विज्ञातव्या मनुष्येन्द्र तर्कया सुप्रणीतया ।
विविधैस्तत्परैस्सम्यक् निपुणैस्तज्ज्ञसम्मतैः ॥ १३
अथाग्रजानन्तरजो भ्रातुः प्रियहिते रतः ।
ज्येष्ठं दुश्शासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ १४

[5]दुश्शासनः—

यदाह कर्णो राजेन्द्र सर्वमेतदवेक्ष्यताम् ॥ १४॥

1. क-ख-ग-म—क्षिप्रं विचिन्वध्वं ।
2. ख—दुर्योधनेनैवमुक्ते वचनेऽतीव दुःखिना । [अधिकः पाठः]
3. ख—एते पुनर्न गच्छन्तु अन्ये गच्छन्तु भारत । [अधिकः पाठः]
4. वि—विपुलान् । क-ख-ङ—सचिवान् । ग—सचिवाः ।
5. ख-ङ-ग—एष नः प्रत्ययो राजंश्चारेषु मनुजर्षभ । [अधिकः पाठः]

घ्राणैः पश्यन्ति पशवो वेदैरेव द्विजोत्तमाः ।
चारैः पश्यन्ति राजानश् चक्षुर्भ्यामितरे जनाः ॥ १५॥
यथोक्ताश्चारपुरुषा मृगयन्तु पुनः पुनः ।
[1]एतांश्चान्यांश्च सुबहून् देशांश्च नगराणि च ॥ १६॥
न च तेषां गतिर्वासः प्रवृत्तिश्चोपलक्ष्यते ।
अत्याहता वा गूढास्ते पारमूर्मिगणा इव ॥ १७॥
व्यालैर्वाऽपि महारण्ये निहताश्शूरमानिनः ।
द्वीपं वा परमं प्राप्ता गिरिदुर्गवनेष्वपि ॥ १८॥
हीनदर्पा निराशास्ते भक्षिता वाऽपि राक्षसैः ।
अथवा विषमं प्राप्य विनष्टाश्शाश्वतीस्समाः ॥ १९॥
यथोद्दिष्टाश्चरास्सर्वे देशान् गच्छन्तु संवृताः ।
एते चान्ये च भूयोऽपि देशाद्देशं यथाविधि ॥ २०॥
इति तेषां गतिर्वासः प्रवृत्तिर्नोपलभ्यते ॥ २१
तस्मान्मानसमव्यग्रं कृत्वाऽऽत्मानं नियम्य च ।
कुरु कार्यं [2]यथान्यायं यद्वाऽन्यन्मन्यसे नृप ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ ४७ ॥ गोग्रहणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये २२ श्लोकाः]

---

1. क-ख-घ-म—एते चान्ये च ।
2. क-घ-म—महोत्साहं यन्मन्यसि नराधिप ॥

## ॥ पञ्चविंशोऽध्यायः ॥

द्रोणेन दुर्योधनं प्रति पाण्डवानां धार्मिकत्वादिगुणशालितया विना शाभावनिर्धारणेन तदन्वेषणविधानम् ॥ १ ॥ भीष्मेण पाण्डवावासदेशस्य लक्षणाभिधानपूर्वकं तेषां दुर्ज्ञेयत्वस्यापि कथनेन तैः सह सन्धिविधानकथनम् ॥ २ ॥

---

वैशम्पायनः—

अथाऽब्रवीत् सभामध्ये द्रोणस्सूक्ष्मार्थदर्शिवान् ॥ ॥

द्रोणः—

न तादृशा विनश्यन्ति नापि यान्ति पराभवम् ॥ १

शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः ।
धर्मज्ञास्सत्यसन्धाश्च युधिष्ठिरमनुव्रताः ॥ २

नीतिधर्मार्थ[1]तत्वज्ञाः पितृवच्च नराधिपम् ।
धर्मे स्थितं सत्यधृतिं ज्येष्ठं श्रेष्ठापचायिनम् ॥ ३

अनुव्रता महात्मानो [2]भ्रातरं भ्रातृवत्सलम् ।
अजातशत्रुं दुर्धर्षं स तानपि तथाऽनुजान् ॥ ४

तेषां तथा विधेयानां निभृतानां महात्मनाम् ।

---

1. क—कृतज्ञाः सत्यवादिनः । क-म—तत्त्वज्ञं पितृवच्च समाहितम् । घ—तत्त्वज्ञा नीतिवच्च सदाचरेत् ।
2. क—भ्रातरो भ्रातरं प्रियम् । ख-म—भ्रातरो भ्रातृवत्सलम् । च-ङ—भ्रातरो भ्रातृवत्सलाः ।

किमर्थं नीतिमान् प्राज्ञो निश्श्रेयो न करिष्यति ॥ ५

तस्माद्यत्ताः परीक्षध्वं न तावत् समयो गतः ।
न ते विनाशमृच्छेयुर् इति मे नैष्ठिकी मतिः ॥ ६

चिन्त्यतामिह यत् कार्यं तच्च क्षिप्रमकालिकम् ।
क्रियतां च विनिश्चित्य वासश्चैषां विचिन्त्यताम् ॥ ७

यथा च पाण्डुपुत्राणां सर्वार्थेषु हितात्मनाम् ।
प्रवृत्तिरुपलभ्येत तथा नीतिर्विधीयताम् ॥ ८

सर्वोपायैर्यतस्व त्वं यथा पश्यसि पाण्डवान् ।
दुर्ज्ञेयाः खलु ते वीरा रक्ष्या नित्यं च दैवतैः ॥ ९

शुद्धात्मा ज्ञानवान् पार्थस् सत्यवान् नीतिमाञ्छुचिः ।
तेजोराशिभिरापूर्णो दहेदपि च चक्षुषा ॥ १०

तस्माद्यत्नश्च क्रियतां भूयश्च मृगयामहे ।
ब्राह्मणैश्चारकैस्सिद्धैस् तापसैर्निपुणैरपि ॥ ११

वैशम्पायनः—

ततश्शान्तनवो धीमान् भारतानां पितामहः ।
श्रुतवान् देशकालज्ञो नीतिमांश्च महामतिः ॥ १२

तस्मिन्नुपरते वाक्ये आचार्यस्य महात्मनः ।
अनन्तरमुवाचेदं वाक्यं हेत्वर्थसंयुतम् ॥ १३

युधिष्ठिरे समासक्तां धर्मज्ञो धर्मसंहिताम् ।

पाण्डवे नित्यमव्यग्रां गिरं भीष्मस्समाददे ॥ १४

असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा ।
भीष्मस्त्वभ्यवदत् तत्र गिरं साधुभिरर्चिताम् ॥ १५

भीष्मः—

यथा नो ब्राह्मणोऽवादीद् आचार्यस्सर्वधर्मवित् ।
श्रुतवृत्तोपसम्पन्ना नाशं नायान्ति पाण्डवाः ॥ १६

सर्वलक्षणसम्पन्नास् साधुवृत्तसमन्विताः ।
वृद्धानुशासने यत्तास् सत्यधर्मपरायणाः ॥ १७

समयं समयज्ञास्ते पालयन्तश्शुभव्रताः ।
न विषीदन्ति ते पार्था उद्वहन्तस्सतां धुरम् ॥ १८

तपसा चैव गुप्तास्ते स्ववीर्येण च पाण्डवाः ।
न नाशमधिगच्छेयुर् इति मे नैष्ठिकी मतिः ॥ १९

तत्र बुद्धिं प्रदास्यामि पाण्डवान्वेषणे शृणु ।
न तु नीतिस्सुनीतस्य शक्यते वेदितुं परैः ॥ २०

यत्तु शक्यमिहास्माभिस् तान् वै सञ्चिन्त्य पाण्डवान् ।
बुद्ध्या प्रणेतुं तद्वोऽहं प्रवक्ष्यामि निबोध तत् ॥ २१

न त्वियं साधु वक्तव्या तस्य नीतिः कथञ्चन ।
वृद्धानुशासने तात तिष्ठतस्सत्यवादिनः ॥ २२

अयुक्तं तु मया वक्तुं तुल्या मे कुरुपाण्डवाः ।

निवासं पाण्डुपुत्राणां सञ्चिन्त्य च वदाम्यहम् ॥ २३
वहुना किं प्रलापेन यतो धर्मस्ततो जयः ॥ २३॥
अवश्यं तु नियुक्तेन सभामध्ये विवक्षता ।
यथामति [1]विवेक्तव्यं सदृशं धर्मलिप्सया ॥ २४॥
तत्र नाहं तथा मन्ये यथाऽन्ये मेनिरे जनाः ॥ २५
निवासं पाण्डुपुत्राणां शृणुष्व मनुजाधिप ॥ २५॥
[2]पुरे जनपदे वाऽपि यत्र राजा युधिष्ठिरः ॥ २६
नासूयको न वाग्दुष्टो नाल्पभोग्यो न मत्सरी ।
भविष्यति जनस्तत्र स्वयं धर्ममनुव्रतः ॥ २७
दानशीलः क्षमायुक्तो निभृतो ह्रीनिषेधनः ।
प्रियवाक् सत्यवाक् शूरो धर्मशीलो जितेन्द्रियः ॥ २८
हृष्टस्तुष्टश्शुचिर्दान्तो यत्र राजा युधिष्ठिरः ॥ २८॥
ब्रह्मघोषाश्च भूयांसश् शब्दाः पुण्यास्तथैव च ।
क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ २९॥
सदा च तत्र पर्जन्यस् सम्यग्वर्षी न संशयः ।
सम्पन्नसस्या च मही भविष्यति निरामया ॥ ३०॥
[3]गुणवन्ति च धान्यानि रसवन्ति फलानि च ।

---

1. क—च वक्तव्यं । ख-ब-म—हि वक्तव्यं ।
2. ख—पुरे जनपदे भव्यो यत्र राजा युधिष्ठिरः । [अधिकः पाठः]
3. क-ख-घ-च-म—रसवन्ति च धान्यानि गुणवन्ति.

गन्धवन्ति च माल्यानि शुभशब्दा च भारती ॥ ३१॥

वायुश्च सुखसंस्पर्शो यत्र राजा युधिष्ठिरः ।
[1]भयं च नाविशेत् तत्र निष्प्रतीपं च दर्शनम् ॥ ३२॥

बहुक्षीरदुघा गावस् सुपुष्टाश्च सुदोहनाः ।
पयांसि मधुसर्पींषि रसवन्ति हितानि च ॥ ३३॥

सलिलानि प्रसन्नानि सर्वे भावाश्च शोभनाः ।
गुणवन्ति च पानानि भोज्यानि विविधानि च ॥ ३४॥
तत्र राजन् भविष्यन्ति यत्र राजा युधिष्ठिरः ॥ ३५

[2]स्वैस्स्वैर्गुणैश्च संयुक्तास् तास्मिन् वर्षे त्रयोदशे ।
देशे तत्र भविष्यन्ति तात पाण्डवसंश्रिते ॥ ३६

सम्प्रीतिमाञ्जनस्तत्र सन्तुष्टश्शुचिरव्यथः ।
देवतातिथिपूजासु सर्वभूतानुरागवान् ॥ ३७

इष्टदानमहोत्साहा नित्यं धर्मपरायणाः ।

---

1. क-ख-ङ-च-म—न रोगास्तत्र दृश्यन्ते नाधयो व्याधयो न च ।
न चोरा न हि दम्भाश्च न च बाधा भवन्ति च ।
नाशक्ता न च दुष्टाश्च यत्र राजा युधिष्ठिरः ॥
म—रसास्स्पर्शाश्च शब्दाश्च गन्धाश्चापि गुणान्विताः ।
दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ॥
[अधिकः पाठः]

2. क-ख-च—रसास्स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणाधिकाः ।
दृश्याधिकप्रसन्नानि यत्र राजा युधिष्ठिरः ॥
[अधिकः पाठः]

व्यक्तवाक्यास्तथातात शुभकल्याणमङ्गलाः ॥ ३८

अशुभद्विट्च्छुभेच्छाश्च नित्यं तुष्टाश्श्रियाऽन्विताः ।
भविष्यन्ति जनास्तत्र यत्र राजा युधिष्ठिरः ॥ ३९

नित्योत्सवप्रमुदितो नित्यहृष्टश्श्रिया वृतः ।
भविष्यति निवासोऽयं यत्र राजा युधिष्ठिरः ॥ ४०

धर्मात्मा स तु दुर्ज्ञेयस् सर्वज्ञैश्च द्विजातिभिः ।
किं पुनः प्राकृतैः पार्थश् शक्यो ज्ञातुं वने वसन् ॥ ४१

तस्मिन् सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा ।
ह्रीश्श्रीः कीर्तिः परं तेज आनृशंस्यं तथाऽऽर्जवम् ॥ ४२

तस्मान्निवासः पार्थानां चिन्त्यतां यद्ब्रवीमि वः ।
गतिर्वा परमा तत्र नोत्सहे वक्तुमन्यथा ॥ ४३

एवमेव तु सञ्चिन्त्य यत् कृत्यं साधु मन्यसे ।
तत् क्षिप्रं कुरु कौरव्य यद्येतच्छ्रद्दधासि मे ॥ ४४

कुलस्य हि क्षमं तात यदहं तद् ब्रवीमि ते ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ ४० ॥ गोग्रहणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये ४४॥ श्लोकाः]

---

## ॥ षड्विंशोऽध्यायः ॥

दुर्योधनेन कीचकवधस्य भीमसेनकृतत्वसम्भावनया पाण्डवानां तत्र स्थितिसम्भावना ॥ १ ॥ तथा भीष्माद्यनुमत्या सुशर्मणो विराटनगरं प्रति प्रेषणम् ॥ २ ॥ सुशर्मणा विराटनगरमेत्य दक्षिणभागे गोग्रहणम् ॥ ३ ॥

वैशम्पायनः—

ततश्शारद्वतो वाक्यम् इत्युवाच कृपस्तदा ॥ ॥

कृपः—

युक्तं प्राप्तं च वृद्धेन पाण्डवान् प्रति भाषितम् ।
धर्मार्थसहितं श्लक्ष्णं सर्वं तथ्यं सहेतुकम् ॥ १॥
तत्रानुरूपं भीष्मस्य ममापि वचनं शृणु ॥ २
तेषां चैव गतिस्तत्र निवासश्चानुचिन्त्यताम् ।
नीतिर्विधीयतां चात्र साम्प्रतं या हिता भवेत् ॥ ३
नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ।
किं पुनः पाण्डवाश्शूरा विद्वांसो बलिनस्तथा ॥ ४
तस्मात् सत्रं प्रविष्टेषु पाण्डवेषु महात्मसु ।
गूढभावेषु छन्नेषु काले चोदयमागते ॥ ५
स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ।
उदयः पाण्डवानां च प्राप्तकालो न संशयः ॥ ६

निवासं पाण्डुपुत्राणां दर्शने मृगया[1]महे ।
निवृत्तसमयाः पार्था महात्मानो महाबलाः ॥ ७
महोत्साहा भविष्यन्ति [2]नित्यं धर्मपरायणाः ॥ ७॥
तस्माद्बलं च कोशं च नीतिश्चात्र विधीयताम् ।
यथा कालोदये प्राप्ते सम्यक् [3]सन्दध्महे परैः ॥ ८॥
यत्र यन्मन्यसे श्रेयो बुध्यस्व बलमात्मनः ॥ ९
निश्चयस्सर्वमित्रेषु बलवत्स्वबलेषु च ।
[4]सारं फल्गु बलं ज्ञात्वा मध्यस्थांश्चापि भारत ॥ १०
स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ॥ १०॥
प्रहृष्टमप्रहृष्टं वा तथा सन्दध्महे परैः ॥ ११
साम्ना दानेन भेदेन दण्डेन बलिकर्मणा ।
यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि ॥ १२
न्यायेना[5]यम्य बलिनो बलाद्वा[6]नीय दुर्हृदः ।
सान्त्वयित्वा च मित्राणि स्वं चाभाष्य बलं सुखम् ॥ १३
स्वकोशबलसंवृद्धस् सर्वां सिद्धिमवाप्स्यसि ॥ १३॥

---

1. अ-ब-ङ—महि ।
2. क-ख-म—पाण्डवा द्युतितेजसः ।
3. क—सन्धामहे । ख—स्थांश्चापि भारत ।
4. क—सारवल्गु फलं ज्ञात्वा मध्यस्थं चापि । ख—सत्वं परबलं ।
5. क-ख-ब-म—नम्य ।
6. क-ख-ब—नय्य । ङ—नम दुर्हृदम् ।

योत्स्यसे चापि बलिभिर् अरिभिः प्रत्युपस्थितैः ।
अन्यैर्वा पाण्डवैर्वाऽपि हीनैस्स्वबलवाहनैः ॥ १४॥

एवं सर्वं विनिश्चित्य व्यवहर्तासि न्यायतः ॥ १५

वैशम्पायनः—

ततो दुर्योधनो वाक्यं श्रुत्वा तेषां महात्मनाम् ।
मुहूर्तमिव सञ्चिन्त्य सचिवानिदमब्रवीत् ॥ १६

दुर्योधनः—

श्रुतं ह्येतन्मया पूर्वं कथासु जनसंसदि ।
वीराणां शास्त्रविदुषां प्राज्ञानां मतिनिश्चये ॥ १७

कृतिनां सारफल्गुत्वं जानामि नयचक्षुषा ॥ १७॥

सत्वे बाहुबले धैर्ये प्राणे शारीरसम्भवे ।
साम्प्रतं मानुषे लोके सदैत्यनरराक्षसे ॥ १८॥

चत्वारस्तु नरव्याघ्रा बले शक्रोपमा भुवि ॥ १९

उत्तमाः प्राणिनां तेषां नास्ति कश्चिद्बले समः ॥ १९॥

समप्राणबला नित्यं सम्पूर्णबलपौरुषाः ॥ २०

बलदेवश्च भीमश्च मद्रराजश्च वीर्यवान् ।
चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः ॥ २१

अन्योन्यानन्तरबलाः परस्परजयैषिणः ।
बाहुयुद्धमभीप्सन्तो नित्यं संरब्धमानसाः ॥ २२

तेनाहमवगच्छामि प्रत्ययेन वृकोदरम् ।
मनस्यभिनिविष्टं मे व्यक्तं जीवन्ति पाण्डवाः ॥ २३

तत्राहं कीचकं मन्ये भीमसेनेन मारितम् ।
सैरन्ध्रीं द्रौपदीं मन्ये नात्र कार्या विचारणा ॥ २४

शङ्के कृष्णानिमित्तं तु भीमसेनेन कीचकः ।
गन्धर्वव्यपदेशेन हतो निशि महाबलः ॥ २५

को हि शक्तः परो भीमात् कीचकं हन्तुमोजसा ।
शस्त्रं विना बाहुवीर्यात् तथा सर्वाङ्गचूर्णने ॥ २६

[1]मर्दितुं वा तथा शीघ्रं चर्ममांसास्थिचूर्णितम् ।
रूपमन्यत् समास्थाय भीमस्यैतद्विचेष्टितम् ॥ २७

ध्रुवं कृष्णानिमित्तं तु भीमसेनेन सूतजाः ।
गन्धर्वव्यपदेशेन हता निशि न संशयः ॥ २८

पितामहेन ये चोक्ता देशस्य च जनस्य च ।
गुणास्ते मत्स्यराष्ट्रस्य बहुशोऽपि मया श्रुताः ॥ २९

विराटनगरे मन्ये पाण्डवाश्छन्नचारिणः ।
निवसन्ति पुरे रम्ये तत्र यात्रा विधीयताम् ॥ ३०

मत्स्यराष्ट्रं हनिष्यामो ग्रहीष्यामश्च गोधनम् ।
गृहीते गोधने नूनं तेऽपि योत्स्यन्ति पाण्डवाः ॥ ३१

---

1. अ-ङ—इदमर्धं नास्ति ।

अपूर्णे समये चापि यदि पश्येम पाण्डवान् ।
द्वादशान्यानि वर्षाणि प्रवेक्ष्यन्ति पुनर्वनम् ॥ ३२

तस्मादन्यतरेणापि लाभोऽस्माकं भविष्यति ।
कोशवृद्धिरिहास्माकं शत्रूणां निधनं भवेत् ॥ ३३

कथं सुयोधनं गच्छेद् युधिष्ठिर[1]भृतः पुरा ।
एतच्चापि वदत्येष मात्स्यः परिभवान्मयि ॥ ३४

तस्मात् कर्तव्यमेतद्वै तत्र यात्रा विधीयताम् ।
एतत् सुनीतं मन्येऽहं सर्वेषां यदि रोचते ॥ ३५

वैशम्पायनः—

ततो राजा त्रिगर्तानां सुशर्मा रथयूथपः ।
पूर्वमाभाष्य कर्णेन तथा दुश्शासनेन च ॥ ३६
प्राप्तकालमिदं वाक्यम् उवाच त्वरितो बली ॥ ३६॥

सुशर्मा—

असकृन्निकृतः पूर्वं मात्स्यसाल्वेयकेकयैः ।
सूतेन च विराटस्य कीचकेन [2]पुनः पुनः ॥ ३७॥

बाधितो बन्धुभिस्सार्धं बलाद्बलवता विभो ।
[3]राष्ट्रं ममासकृद्राजन् राज्ञा मात्स्येन बाधितम् ॥ ३८॥

---

1. अ-ङ-म—भृते । ख—घृतः । च—हतः ।
2. क-ख-च-म—पुरा त्वहम् ।
3. क-ख-ङ—स कर्णमभिवीक्ष्याथ दुर्योधनमभाषत । [अधिकः पाठः]

प्रणेता कीचकस्तस्य बलमत्तोऽभवत् पुरा ।
अमर्षी दुर्जयो जेता प्रख्यातबलपौरुषः ॥ ३९॥
स हतस्तत्र गन्धर्वैः पापकर्मा नृशंसकृत् ॥ ४०

तस्मिन् विनिहते राजन् हीनदर्पो निराश्रयः ।
भविष्यति निरुत्साहो विराट इति मे मतिः ॥ ४१

तत्र यात्रा मम मता [1]निहते कीचकेऽनघ ।
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः ॥ ४२

एतत् कार्यमहं मन्ये परमात्ययिकं महत् ॥ ४२॥
राष्ट्रं तस्याभियात्वा तु धनधान्यसमाकुलम् ।
[2]आददामो हि रत्नानि विविधानि वसूनि च ॥ ४३॥

ग्रामान् राष्ट्राणि वा तस्य हरिष्यामो विभागशः ॥ ४४

अथवा गोसहस्राणि बहूनि शुभदर्शन ।
विविधं तद्धरिष्यामः परिपीड्य पुरं बलात् ॥ ४५

कौरवास्सह [3]संहत्य त्रिगर्ताश्च विशाम्पते ।
गाश्च तस्य हरामाशु सह सर्वैर्महारथैः ॥ ४६

सन्धिं वा तेन कृत्वा तु निबध्नीमोऽस्य पौरुषम् ।
हत्वा चास्य चमूं कृत्स्नां वश[4]मन्वानयामहे ॥ ४७

1. क-ख-च-म—यदि ते रोचतेऽनघ।
2. क-ख-घ-ङ-म—आददीमहि ।
3. ख-घ-ङ-म = सङ्गम्य।　　4. अ-ब-च—मानीयतां बलात्

तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम् ।
भवतो बलवृद्धिश्च भविष्यति न संशयः ॥ ४८

वैशम्पायनः—

तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत् ॥ ४८॥

कर्णः—

सूक्तं सुशर्मणा वाक्यं प्राप्तकालमिदं हि नः ।
तस्मात् क्षिप्रं विनिर्यामो योजयित्वा वरूथिनीम् ॥ ४९॥

यद्वेतत् तेऽभिरुचितं मम चैतद्धि रोचते ।
प्रविभज्य च सैन्यानि यथा वा मन्यते भवान् ॥ ५०॥

प्रज्ञावान् कुलवृद्धश्च सर्वेषां नः पितामहः ।
आचार्यश्च [1]कृपश्चापि शकुनिश्चापि सौबलः ॥ ५१॥

यथा [2]ते मन्वते सर्वे तथा यात्रा विधीयताम् ।
सम्मन्त्र्य चाशु गच्छामस् साधनार्थं महीपते ॥ ५२॥

किं नु नः पाण्डवैः कार्यं हीनार्थबलपौरुषैः ।
अत्यर्थं हि प्रणष्टास्ते प्राप्ता वाऽपि यमक्षयम् ॥ ५३॥

तद्भवांश्चतुरङ्गेण बलेन महता घृतः ।
विराटनगरं यातुं सर्वसैन्येन भारत ॥ ५४॥

---

1. ख-च – कृपो विद्वान् ।

2. क—मन्यन्त ते । ख—र्थां स्यन्ति ते । च-म—मंस्यन्ति ते ।
ङ—ते मन्यते ।

आदास्यामो हि गास्तस्य वसूनि विविधानि च ॥ ५५

वैशम्पायनः—

ततो दुर्योधनो राजा वचश्श्रुत्वा तु तस्य तत् ।
वैकर्तनस्य कर्णस्य क्षिप्रमाज्ञापयत् ततः ॥ ५६
शासने नित्ययुक्तं तु दुश्शासनमनन्तरम् ॥ ५६॥

दुर्योधनः—

सह वृद्धैस्तु सम्मन्त्र्य क्षिप्रं योजय वाहिनीम् ।
यथोद्देशं तु गच्छामस् सहितास्सर्वकौरवैः ॥ ५७॥
सुशर्मा तु यथोद्दिष्टं देशं यातु महारथः ।
त्रिगर्तैस्सहितस्सर्वैः प्रख्यातबलपौरुषैः ॥ ५८॥
प्रागेव [1]तु सुसंरब्धो विराटविषयं प्रति ॥ ५९
जघन्यतो वयं तस्य यास्यामो दिवसान्तरम् ।
विषयं मत्स्यराजस्य सुसमृद्धं सुसंहितम् ॥ ६०
सुशर्मणा गृहीते तु मत्स्यराजस्य गोधने ।
विराटस्सैन्यमादाय त्रिगर्तैस्सह योत्स्यते ॥ ६१
अपरं दिवसं गास्तु तत्र गृह्णन्तु कौरवाः ।
गवार्थे पाण्डवास्तत्र योत्स्यन्ति कुरुभिस्सह ॥ ६२
तथा गत्वा यथोद्देशं विराटनगरान्तिकम् ।

---

1. ग—तु सुसंयत्तो । क—हि सुसंयत्तो विराटनगरं ।
ख—हि सुसंरब्धो मत्स्यराजपुरं ।

क्षिप्रं गोष्ठं समासाद्य गृह्णन्तु विपुलं धनम् ॥ ६३
गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च ।
वयमस्य निगृह्णीमो द्विधा कृत्वा वरूथिनीम् ॥ ६४

वैशम्पायनः—

ते स्म गत्वा यथोद्दिष्टं देशं [1]मत्स्यमहीपतेः ।
आदत्त गास्सुशर्मा वै कृष्णपक्षस्य चाष्टमीम् ॥ ६५
अपरं दिवसं चापि सह सम्भूय कौरवाः ।
नवम्यां ते न्यगृह्णन्त गोकुलानि सहस्रशः ॥ ६६
कौरवास्तु महावीर्या मत्स्यानां विषयान्तरे ॥ ६६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ४७ ॥ गोग्रहणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ६६॥ श्लोकाः]

---

## ॥ सप्तविंशोऽध्यायः ॥

गोपैर्द्रुततरमागत्य विराटं प्रति सुशर्मणा गोग्रहणनिवेदनम् ॥ १ ॥ विराटादिभिर्युद्धाय निर्गमोद्यमः ॥ २ ॥ युधिष्ठिरेण विराटं प्रति स्वेषां युद्धकौशलनिवेदनेन भ्रातृभिः सह समराभियानम् ॥ ३ ॥

---

वैशम्पायनः—

ततस्तेषां [2]तदा राजंस् तत्रैवामिततेजसाम् ।
छद्मलिङ्गप्रविष्टानां पाण्डवानां महात्मनाम् ॥ १

---

1. म—व्यहे महीपते । क—ग्रहे महीपते । ख-च-ङ—तस्य महीपतेः ।
2. ख-च—महाराज । म—महाराज तत्रैवममितौजसाम् ।

व्यतीतस्समयस्सम्यग् विराटनगरे सताम् ।
कुर्वतां तस्य कर्माणि विराटस्य महीपतेः ॥ २

ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत ।
सुशर्मणा गृहीतं तु [1]गोधनं तरसा बहु ॥ ३

ततश्शब्दो महानासीद् रेणुश्च दिवमस्पृशत् ।
शङ्खदुन्दुभिघोषश्च भेरीणां च महास्वनः ॥ ४
गवाश्वरथनागानां नराणां च पदातिनाम् ॥ ४॥

एवं तैस्त्वभिनिर्याय मत्स्यराजस्य गोधने ।
त्रिगर्तैर्गृह्यमाणे तु गोपालाः प्रत्यषेधयन् ॥ ५॥

अथ त्रिगर्ता बहवः परिगृह्य धनं बहु ।
परिक्षिप्य हयैश्शीघ्रै रथव्रातैश्च भारत ॥ ६॥
गोपालान् प्रत्ययुध्यन्त रणे कृत्वा जये धृतिम् ॥ ७

ते हन्यमाना [2]रथिभिस् सादिभिः प्रासधारिभिः ।
गोपाला गोकुले भक्ता वारयामासुरोजसा ॥ ८

परश्वथैश्च मुसलैर् भिण्डिपालैश्च मुद्गरैः ।
गोपालाः कर्षणैश्चित्रैर् जघ्नुरश्वान् समन्ततः ॥ ९

ते हन्यमानास्सङ्क्रुद्धास् त्रिगर्ता रथयोधिनः ।

1. क—मत्स्यराजस्य गोधनम्। घ—गोधनं सर्वमेव हि।
2. ख-घ-म—बहुभिः प्रासतोमरपाणिभिः।

विसृज्य शरवर्षाणि गोपालान् द्रावयन् रणे ॥ १०

[1]हन्यमानेषु गोपेषु विमुखेषु विशाम्पते ।
ततो युवानस्सम्भीताश् श्वसन्तो रेणुकुण्ठिताः ॥ ११

जवेन महता चैव गोपालाः पुरमाव्रजन् । ११॥

विराटनगरं प्राप्य नरा राजानमब्रुवन् ॥ १२

सभायां राजशार्दूलम् आसीनं पाण्डवैस्सह ।
शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभिः ॥ १३

सद्भिश्च पण्डितैस्सार्धं मन्त्रिभिश्चापि संवृतम् ।
दृष्ट्वा शीघ्रं तु गोपाला विराटमिदमब्रुवन् ॥ १४

गोपालाः—

अस्मान् युधि विनिर्जित्य परिभूय सबान्धवान् ।
षष्टिं गवां सहस्राणि त्रिगर्ताः कालयन्ति ते ॥ १५

ताः परीप्स महाराज मा नेशुः पशवस्तव ॥ १५॥

वैशम्पायनः—

श्रुत्वा तु वचनं तेषां गोपालानामरिन्दमः ।
स राजा महतीं सेनां मात्स्यानां समवाहयत् ॥ १६॥

रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ॥ १७

राजानो राजपुत्राश्च तनुत्राण्यनुभेजिरे ।

---

1. म—इदमर्धं नास्ति ।

भानुमन्ति निवातानि सूपसेव्यानि भागशः ॥ १८

पृथक्काञ्चनसन्नाहान् रथेष्वश्वानयोजयन् ।
उत्कृष्य पाशान् मौर्वीणां वीराश्चापेष्वयोजयन् ॥ १९

दृढमायसगर्भं तु कवचं तप्तकाञ्चनम् ।
विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् ॥ २०

सर्वभारसहं वर्म कल्याणपटलं [1]दृढम् ।
शतानीकादवरजो मदिराश्वोऽभ्यहारयत् ॥ २१

उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ।
मृष्टहाटकपर्यन्तं सूर्यदत्तोऽभ्यहारयत् ॥ २२

दृढमायसगर्भं तु श्वेतं रुक्मपरिष्कृतम् ।
विराटस्य सुतो ज्येष्ठो वीरश्शङ्खोऽभ्यहारयत् ॥ २३

शतसूर्यं शतावर्तं शतबिन्दु शताक्षिमत् ।
[2]अभेद्यकल्पं मत्स्यानां राजा कवचमाहरत् ॥ २४

ततो नानातनुत्राणि स्वानि स्वान्यत्र क्षत्रियाः ।
युयुत्सवोऽभ्यपद्यन्त देवकल्पाः प्रहारिणः ॥ २५

सोपस्करेषु शुभ्रेषु महत्सु समलङ्कृतान् ।
[3]बृहत्काञ्चनसन्नाहान् रथेष्वश्वानयोजयन् ॥ २६

---

1. अ-क-ङ-च—ध्रुवम् ।
2. क—अवध्यकल्पं । ख-घ-ङ—अवध्यकल्पं ।
3. ख—पृथक् । च—मत्स्याः काञ्चनसंनाहा रथेष्व

सूर्यचन्द्रप्रतीकाशं मणिकाञ्चनभूषितम् ।
[1]मत्स्यस्योरुप्रमाणं च ध्वजमुच्छ्रियते रथे ॥ २७

ध्वजान् बहुविधाकारान् सौवर्णान् हेममालिनः ।
यथास्वं क्षत्रियाश्शूरा रथेषु समयोजयन् ॥ २८

रथेषु युज्यमानेषु कङ्को राजानमब्रवीत् ॥ २८॥

कङ्कः—

मयाऽप्यस्त्रं चतुर्मार्गम् अवाप्तमृषिसत्तमात् ।
[2]दंशितो रथमास्थाय पदं निर्यास्यहं गवाम् ॥ २९॥

अयं च बलवाञ् छूरो वल्लो दृश्यतेऽनघ ।
गोसङ्ख्यमश्वबन्धं च संयोजय रथेषु वै ॥ ३०॥

नैते न जातु युद्ध्येयुर् गवार्थमिति मे मतिः ॥ ३१

वैशम्पायनः—

अथ मात्स्योऽब्रवीद्राजा शतानीकं जघन्यजम् ॥ ३१॥

विराटः—

कङ्कश्च वल्लस्सूदो दामग्रन्थिश्च वीर्यवान् ।
[3]शूरास्सुवीराः पुरुषा नागराजवरोपमाः ॥ ३२॥

युद्ध्येयुरिति मे बुद्धिर् वर्तते नात्र संशयः ॥ ३३

1. क-ख-ङ-च-म—महाप्रमाणं मात्स्यस्य ध्वजमुच्छ्रायते।
2. ख-घ—दंसितो। क—रथमास्थाय पदवीमनुयास्याम्यहं गवाम्।
3. म—इदमर्धं नास्ति।

एतेषामपि दीयन्तां रथा ध्वजपताकिनः ।
कवचानि विचित्राणि सुदृढानि लघूनि च ॥ ३४

प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च ।
[1]नेमे जातु न युद्ध्येयुर् इति मे धीयते मतिः ॥ ३५

वैशम्पायनः—

तच्छ्रुत्वा नृपतेर्वाक्यं शीघ्रं त्वरितमानसः ।
शतानीकस्स पार्थेभ्यो रथान् [2]राजाज्ञयाऽऽदिशत् ॥ ३६

सहदेवाय राज्ञे च भीमाय नकुलाय च ॥ ३६॥

[3]तान् दृष्ट्वा सहसा [4]शूरा राजभक्तिपुरस्सराः ।
निर्दिष्टा नरदेवेन रथाञ्छीघ्रमयोजयन् ॥ ३७॥

कवचानि विचित्राणि नवानि च दृढानि च ।
विराटः [5]प्रादिशद्राजा तेषामक्लिष्टकारिणाम् ॥ ३८॥

तान्यामुच्य शरीरेषु दंशितास्ते महारथाः ।
तरस्विनश्छन्नरूपास् सर्वशस्त्रविशारदाः ॥ ३९॥

रथान् हेमपरिष्कारान् समास्थाय महारथाः ।
पाण्डवा निर्ययुर्हृष्टा दंशिता राजसत्तम ॥ ४०॥

---

1. क-म—वीराङ्गरूपाः पुरुषा नागराजकरोपमाः। [अधिकः पाठः]
2. क-ख-घ-ङ-म—राजन् समादिशत्।
3. क-ङ—ते वीराः सिंहविक्रान्ता बलवन्तो मनस्विनः।[अधिकः पाठः]
4. ख-घ-म—सूता राजभक्तिपुरस्कृताः।
5. ख-म—प्रददौ यानि।

विराटमन्वयुः पश्चात् सहिताः कुरुपुङ्गवाः ।
चत्वारो भ्रातरश्शूराः पाण्डवास्सत्यविक्रमाः ॥ ४१॥

दीर्घानां च दृढानां च धनुषां ते यथाबलम् ।
उत्कृष्य पाशान् मौर्वीणां वीराश्चापेष्व[1]योजयन् ॥ ४२॥

ततस्सुवाससस्सर्वे ते वीराश्चन्दनोक्षिताः ।
चोदिता नरदेवेन क्षिप्रमश्वानयोजयन् ॥ ४३॥

ते हया हेमसञ्छन्ना बृहन्तस्साधुवाहिनः ।
चोदिताः प्रत्यदृश्यन्त पत्रिणामिव पङ्क्तयः ॥ ४४॥

भीमरूपाश्च मातङ्गाः प्रभिन्न[2]करटामुखाः ।
स्वारूढा युद्धकुशलैर् महामात्राधिरोहिताः ॥ ४५॥

क्षरन्त इव जीमूतास् सुदन्ताष्षाष्टिहायनाः ।
राजानमन्वयुः पश्चात् क्रमन्त इव पर्वताः ॥ ४६॥

दृढायुधजनाकीर्णं रथाश्वगजसङ्कुलम् ।
तद्बलाग्र्यं विराटस्य शक्रस्येव तदा बभौ ॥ ४७॥

तं प्रयान्तं महा[3]राजं निनीषन्तं गवां पदम् ॥ ४८
विशारदानां वैश्यानां प्रकृष्टानां तदा नृप ।

1. क-च-म—चोदयन् ।
2. म—कटसंकुलाः । ख-घ—करटामुखाः । ङ—कटकामुखाः ।
3. ख—निषेधन्तं क—राज निनीषन्तं ।
ख—राज निरीक्षन्तं । घ—राजं निषीदन्तं ।

विंशतिस्तु सहस्राणि नराणामनुयायिनाम् ॥ ४९
अष्टौ रथसहस्राणि दश नागशतानि च ।
[1]विंशच्चाश्वसहस्राणि मात्स्यानां त्वरितं ययुः ॥ ५०
तदनीकं विराटस्य शुशुभेऽतीव भारत ।
वसन्ते बहुपुष्पाढ्यं काननं चित्रितं यथा ॥ ५१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

॥ ४७ ॥ गोग्रहणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[अस्मिन्नध्याये ५१ श्लोकाः]

---

## ॥ अष्टाविंशोऽध्यायः ॥

विराटसुशर्मसैन्ययोर्युद्धम् ॥ १ ॥ युधिष्ठिरादिनिहतानां गणनम् ॥ २ ॥ विराटसुशर्मणोर्युद्धम् ॥ ३ ॥

---

वैशम्पायनः—

[2]निर्ययुर्नगराच्छूरा व्यूढानीकाः प्रहारिणः ।
त्रिगर्तानस्पृशन् मात्स्यास् सूर्ये परिणते सति ॥ १
[3]ते त्रिगर्ताश्च मात्स्याश्च व्यूढानीकाः प्रहारिणः ।
अन्योन्यमभिवर्तन्ते गोषु गृध्रा महाबलाः ॥ २

---

1. अ—विंश ।
2. अ-घ-ङ-च-म—निर्याय न ।
3. अ—इदमर्धं नास्ति ।

भीमाश्च मत्तमातङ्गास् तोमराङ्कुशचोदिताः ।
ग्रामणीयैस्समारूढाः कुशलैर्हस्तिसादिभिः ॥ ३

तेषां समागमो घोरस् तुमुलो रोमहर्षणः ।
देवासुरसमो राजन्नासीत् सूर्येऽ[1]वलम्बति ॥ ४

उदतिष्ठद्रजो भौमं न प्राज्ञायत किञ्चन ।
पक्षिणश्चापतन् भूमौ सैन्येन रजसा वृताः ॥ ५

इषुभि[2]र्व्यतिसंयद्भिर् आदित्योऽन्तरधीयत ।
खद्योतैरिव सम्पृक्तम् अन्तरिक्षं व्यराजत ॥ ६

रुक्मपृष्ठानि चापानि विचेरुर्विद्युतो यथा ।
नर्दतां लोकवीराणां सव्यं दक्षिणमस्यताम् ॥ ७

रथा रथैस्समाजग्मुः पत्तयश्च पदातिभिः ।
सादिभिस्सादिनो जग्मुर् गजैश्चापि महागजाः ॥ ८

असिभिः पट्टसैश्चापि शक्तिभिस्तोमरैरपि ।
संरब्धास्समरे योधा निजघ्नुरितरेतरम् ॥ ९

निघ्नन्तस्समरेऽन्योन्यं हृष्टाः परिघबाहवः ।
न शेकुरतिसंरब्धाश् शूराः कर्तुं पराङ्मुखम् ॥ १०

रक्ताधरोष्ठं सुनसं रक्तश्मश्रु स्वलङ्कृतम् ।

1. क-ख-घ-ङ-म—विलम्बति ।
2. क—र्व्यवसंयद्भिः ; ख—र्व्यतिषक्तैः । घ—प्रतिसंपद्भिः ।

अदृश्यत शिरश्छिन्नं रजोध्वस्तं सकुण्डलम् ॥ ११

दृश्यन्ते तत्र गात्राणि वीरैश्छिन्नानि भागशः ।
सालस्कन्धनिकाशानि क्षत्रियाणां महामृधे ॥ १२

नागभोगनिकाशैश्च बाहुभिश्चन्दनोक्षितैः ।
आकीर्णा वसुधा तत्र शिरोभिश्च सकुण्डलैः ॥ १३

यथा वा वाससी श्लक्ष्णे महारजतरञ्जिते ।
बिभ्रती युवती श्यामा भाति तद्वद्वसुन्धरा ॥ १४

उपशाम्य रजो भौमं रुधिरेण प्रवर्षता ।
कश्मलं प्राविशद्घोरं निर्मर्यादमवर्तत ॥ १५

युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिस्सहितस्तदा ।
व्यूहं कृत्वा विराटस्य अन्वयुध्यत पाण्डवः ॥ १६

आत्मानं श्येनवत् कृत्वा तुण्डमासीद्युधिष्ठिरः ।
पक्षौ यमौ च भवतः पुच्छमासीद्वृकोदरः ॥ १७

सहस्रं न्यहनत् तत्र कुन्तीपुत्रो युधिष्ठिरः ॥ १७॥

भीमसेनस्सुसङ्क्रुद्धस् सर्वशस्त्रभृतां वरः ।
द्विसहस्रं रथान् वीरः परलोकं प्रवेशयत् ॥ १८॥

नकुलस्त्रिशतं जघ्ने सहदेवश्चतुश्शतम् ॥ १९

शतानीकश्शतं हत्वा मदिराश्वश्चतुश्शतम् ।

[1]प्रहृष्टां महतीं सेनां त्रिगर्तानां महारथौ ॥ २०
आर्च्छेतां बहुसाहस्रं केशाकेशि रथारथि ॥ २०॥

लक्षयित्वा त्रिगर्तानां तौ प्रविष्टौ महाचमूम् ।
जग्मतुस्सूर्यदत्तश्च [2]मदिराश्वश्च पृष्ठतः ॥ २१॥

शङ्खो विराटपुत्रस्तु महेष्वासो महाबलः ।
विनिघ्नन् समरे शत्रून् प्रविवेश महाचमूम् ॥ २२॥

विराटस्तत्र सङ्ग्रामे हत्वा पञ्चशतं रथान् ।
कुञ्जराणां शतं चैव सहस्रं वाजिनामपि ॥ २३॥

चरन् स विविधान् मार्गान् रथेन रथयूथपः ।
त्रिगर्तानां सुशर्माणम् आर्च्छेद्रुक्मरथं रणे ॥ २४॥

तौ तु प्राहरतां तत्र महेष्वासौ महाबलौ ।
अन्योन्यमभिनिघ्नन्तौ [3]गोषु गोवृषभाविव ॥ २५॥

राजसिंहौ सुसंरब्धौ [4]दन्ताभ्यामिव कुञ्जरौ ।
कृतास्त्रौ निशितैर्बाणैर् [5]वारयामासतू रणे ॥ २६॥

---

1. क-ख-च-म—प्रविष्टौ ।
2. च—विमलाक्षश्च । क—विमलाश्वश्च ।
   ख—विशालाश्वश्च विष्ठितः । ङ—बलकश्चापि ।
3. क-ख-म—गोष्ठे ।
4. क-ख-घ-च-म—विरेजतुरमर्षणौ ।
5. क-ख-च—असिशक्तिपरश्वधैः । घ—दारयामासतू रणे ।
   म—अभिघ्नन्तौ परस्परम् ।

[1]मात्स्यो राजा सुशर्माणं विव्याध निशितैश्शरैः ।
पञ्चभिः पञ्चभिर्बाणैर् विव्याध चतुरो हयान् ॥ २७॥
द्वाभ्यां सूतं च विव्याध केतुं च त्रिभिराशुगैः ॥ २८
तथैव मात्स्यराजं तु सुशर्मा युद्धदुर्मदः ।
पञ्चाशद्भिश्शितैर्बाणैर् विव्याध परमास्त्रवित् ॥ २९
तयोर्बलानि राजेन्द्र समस्तानि महारणे ।
नाजानन्त तदाऽन्योन्यं प्रदोषे रजसा वृते ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ४७ ॥ गोग्रहणपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

---

1. क-ख-च-म—ततो रथाभ्यां रथिनौ व्यतीयातां समन्ततः ।
शरान् ससृजतुश्शीघ्रं तोयधारा घनाविव ॥
अन्योन्यमभिसंरब्धौ दन्ताभ्यामिव कुञ्जरौ ।
कृतास्त्रौ निशितैर्बाणैर् दारयामासतुः रणे ॥
[अधिकः पाठ

## ॥ एकोनत्रिंशोऽध्यायः ॥

सुशर्मणा युद्धे विराटस्य ग्रहणम् ॥ १ ॥ भीमेन युधिष्ठिरचोदनया विराटस्य मोचनपूर्वकं सुशर्मणो बन्धनम् ॥ २ ॥ युधिष्ठिरेण करुणया सुशर्मणो विमोक्षणम् ॥ ३ ॥

वैशम्पायनः—

तमसाऽभिप्लुते लोके रजसा चैव भारत ।
व्यतिष्ठन्त मुहूर्तं ते व्यूढानीकाः प्रहारिणः ॥ १

ततोऽन्धकारं प्रणुदन्नुदतिष्ठन्निशाकरः ।
कुर्वाणो विमलां रात्रिं नन्दयन् क्षत्रियान् रणे ॥ २

ततः प्रकाशमासाद्य पुनर्युद्धमवर्तत ।
घोररूपं [1]तदा तस्मिन्नवैक्षन्त परस्परम् ॥ ३

ततस्सुशर्मा त्रैगर्तस् सह भ्रात्रा सुवर्मणा ।
अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥ ४

ततो रथाभ्यां प्रस्कन्द्य भ्रातरौ क्षत्रियावुभौ ।
गदापाणी सुसंरब्धौ समभ्यद्रवतां हयान् ॥ ५

तथैव तेषां तुमुलानि तानि
क्रुद्धानि चान्योन्यमभिद्रवन्ति ।

[1] म—तदा तेषामवेक्षन्त । क-ख-घ—तदा तेषां नावेक्षन्तः ।

गदासि[1]पट्टैश्च परश्वथैश्च
प्रासैश्च तीक्ष्णाग्रसुरूपधारैः ॥ ६

बलं तु मात्स्यस्य बलेन राजा
सर्वं त्रिगर्ताधिपतिस्सुशर्मा ।
प्रमथ्य जित्वा च निपीड्य मत्स्यान्
विराटमोजस्विनमभ्यधावत् ॥ ७

मत्ताविव वृषावेतौ गजाविव मदोद्धतौ ।
सिंहाविव गजग्राहौ वृत्रशक्राविवोद्धतौ ॥ ८

उभौ तुल्यबलोत्साहावुभौ तुल्यपराक्रमौ ।
उभौ तुल्यास्त्रवि[2]दुषावुभौ युद्धविशारदौ ॥ ९

तौ निहत्य पृथग्धुर्यावुभौ तौ पार्ष्णिसारथी ।
आस्तां तुल्यधनुर्ग्राहौ विष्णुकंसाविवोद्धतौ ॥ १०

सुशर्मा परवीरघ्नो बलवान् वीर्यवान् गदी ।
विरथं मत्स्यराजानं जीवग्राहमथाग्रहीत् ॥ ११

तमुन्मथ्य सुशर्मा तु विराटं भीमविक्रमम् ।
स्यन्दनं स्वं समारोप्य प्रययौ शीघ्रवाहनः ॥ १२

तस्मिन् गृहीते नृपतौ विराटे बलवत्तरे ।
बलं सर्वं विभग्नं तन्निरुत्साहं निराशकम् ॥ १३

---

1. क-म—शूलैश्च ।　　ख-ग—खड्गैश्च ।
2. क-ख-ङ—क्षेपा ।

प्राद्रवन्त भयान्मात्स्यास् त्रिगर्तैरर्दिता रणे ।
विदिक्षु दिक्षु सर्वासु पलायन्ति घ यान्ति च ॥ १४
तेषु विद्राव्यमाणेषु कुन्तीपुत्रो युधिष्ठिरः ।
अभ्यभाषत धर्मात्मा भीमसेनमरिन्दमम् ॥ १५

युधिष्ठिरः—

मात्स्यराजः परामृष्टस् त्रिगर्तेन सुशर्मणा ।
तं मोक्षय महाबाहो मा गमद्द्विषतां वशम् ॥ १६
उषितास्स्म सुखं सर्वे सर्वकामैस्सुपूजिताः ॥ १६॥
भीमसेन महाबाहो गृहीतं तु सुशर्मणा ।
त्रायस्व मोचय क्षिप्रम् अस्मत्प्रीतिकरं नृपम् ॥ १७॥
भीमसेन त्वया कार्या तस्य वासस्य निष्कृतिः ॥ १८

वैशम्पायनः—

तं तथावादिनं तत्र भीमसेनो महाबलः ।
अभ्यभाषत दुर्धर्षो रणमध्ये युधिष्ठिरम् ॥ १९

भीमः—

अहमेनं परित्रास्ये शासनात् तव पार्थिव ।
पश्येदं सुमहत् कर्म युध्यतो मम शत्रुभिः ॥ २०
स्वबाहुबलमाश्रित्य परेषामसमं रणे ।
एकान्तमाश्रितो राजंस् तिष्ठ त्वं भ्रातृभिस्सह ॥ २१

[1]अयं वृक्षो महासारो गिरिमात्रो वनस्पतिः ।
अहमेनं समारुज्य पोथयिष्यामि शात्रवान् ॥ २२

वैशम्पायनः—

तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
अब्रवीद्भ्रातरं वीरं धर्मराजो युधिष्ठिरः ॥ २३

युधिष्ठिरः—

मा भीम साहसं कार्षीस् तिष्ठत्वेष वनस्पतिः ॥ २३॥

मा त्वां वृक्षेण कर्माणि कुर्वन्तमतिमानुषम् ।
जनास्समवबुध्येरन् भीमोऽयमिति भारत ॥ २४॥

मा ग्रहीस्त्वमिमं वृक्षं सिंहनादं च मानद ।
[2]वृक्षं चेत् त्वं नयेर्वीर विज्ञास्यति जनो ध्रुवम् ॥ २५॥

अन्यदेवायुधं गृह्य प्रतिपद्यस्व मानुषम् ।
चापं वा यदि वा शक्तिं निस्त्रिंशं वा गृहाण भो ॥ २६॥

यदेव मानुषं भीम भवेदन्यैरलक्षितम् ।
तदेवायुधमादाय मोचयाशु महीपतिम् ॥ २७॥

यमौ च पक्षरक्षौ ते भवितारौ महाबलौ ।
व्यायच्छतस्ते समरे मत्स्यराजं परीप्सतः ॥ २८॥

---

1. क-म—सुस्कन्धोऽयं महावृक्षो गदारूप इव स्थितः । [इति पाठान्तरम्]

2. ख—इमं वृक्षं गृहीत्वा त्वं नेमां सेनामभिद्रव । [अधिकः पाठः]

[1]वैशम्पायनः—
[1]इत्युक्त्वा भीमसेनं तं स्वयमेव युधिष्ठिरः ।
अन्वयाज्जवनैरश्वैः परीप्सन् मात्स्यसत्तमम् ॥ २९॥
भ्रातुर्वेधनमादाय भीमो वृक्षं विसृज्य च ।
चापमादाय सम्प्राप्तो रथमारुह्य पाण्डवः ॥ ३०॥
[2]ते संहतास्सर्व एव हयान् पार्था अचोदयन् ।
दिव्यास्त्रकुशलास्सर्वे नीतिज्ञाश्चास्पृशन् परान् ॥ ३१॥
ततस्समस्तास्ते सर्वे तुरगानभ्यचोदयन् ।
दिव्यमस्त्रं विकुर्वाणास् त्रिगर्तांश्चाप्युपाद्रवन् ॥ ३२॥
तान् निवृत्तरथान् दृष्ट्वा पाण्डवान् महतीं चमूम् ।
वैराटिः परमक्रुद्धो युयुधे परमाद्भुतम् ॥ ३३॥
[3]त्रिगर्तास्समतिक्रम्य अयुध्यन्त जयैषिणः ॥ ३४
तान् भीमसेनस्सङ्क्रुद्धस् सर्वशस्त्रभृतां वरः ।
द्विसहस्रं रथान् वीरः परलोकं [4]प्रवेशयत् ॥ ३५
सहस्रं प्राहिणोद्राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलश्चापि सप्तैव शतानि प्राहिणोच्छरैः ॥ ३६
शतानि त्रीणि शूराणां सहदेवः प्रतापवान् ।
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः ॥ ३७

1. अ-ख-ब-ङ-च-म—अयं श्लोको न दृश्यते।
2. अ-ख-ध-ङ-च-म—अयं श्लोकोनास्ति।
3. क—त्रिगर्तान् समतिक्रम्य जयमत्तान् सुयुध्यतः।
4. ख-म—अदर्शयत्।

प्रविश्य महतीं सेनां त्रिगर्तानां महाबलाः ।
क्षोभयन्तश्च सैन्यानि सिंहाः क्षुद्रमृगानिव ॥ ३८

ततो युधिष्ठिरो राजा त्वरमाणो महाबलः ।
अभिद्रुत्य सुशर्माणं शरैरभ्यहनद्भृशम् ॥ ३९

सुशर्माऽपि सुसङ्क्रुद्धस् त्वरमाणो युधिष्ठिरम् ।
अविध्य[1] दशभिर्बाणैश् चतुर्भिश्चतुरो हयान् ॥ ४०

ततो राजन् क्षिप्रकारी कुन्तीपुत्रो [2]वृकोदरः ।
समासाद्य सुशर्माणम् अश्वांस्तस्य न्यपातयत् ॥ ४१

पृष्ठ[3]गोपांस्तु तस्याथ हत्वा परमसायकैः ।
अथास्य सारथिं क्रुद्धो रथोपस्थादपातयत् ॥ ४२

चक्ररक्षस्तु शूरश्च शोणाश्वो नाम नामतः ।
स भयाद्विरथं दृष्ट्वा त्रिगर्तं व्याजहात् तदा ॥ ४३

ततो विराटः प्रस्कन्द्य रथादथ सुशर्मणः ।
गदामस्य परामृश्य तमेवाभ्यहनद्बली ॥ ४४

स चचार गदापाणिर् वृद्धोऽपि तरुणो यथा ॥ ४४॥

1. क-म — च विभि ।
2. अ-ख-घ-ङ—युधिष्ठिरः ।
3. ख-घ-म—गोपौ च ।

[1]भीमस्तु भीमसङ्काशो रथात् प्रस्कन्द्य वीर्यवान् ।
[2]त्रिगर्तराजमादत्त सिंहः क्षुद्रमृगं यथा ॥ ४५॥
तस्मिन् वीरे गृहीते तु त्रिगर्तानां महारथे ।
अभज्यत बलं सर्वं त्रिगर्तानां भयातुरम् ॥ ४६॥
निवर्त्य गास्ततस्सर्वाः पाण्डुपुत्रा महाबलाः ।
अवजित्य सुशर्माणं धनं चादाय [3]सर्वशः ॥ ४७॥
स्वबाहुबलसम्पन्ना ह्रीनिषेधा [4]यतव्रताः ।
विराटस्य महात्मानः परिक्लेशविनाशनाः ॥ ४८॥
स्थितास्समक्षं ते सर्वे त्वथ भीमोऽभ्यभाषत ॥ ४९
नायं पापसमाचारो मत्तो जीवितुमर्हति ।
किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी ॥ ५०
गले गृहीत्वा राजानम् आनीय विवशं वशम् ।
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ॥ ५१
रथमारोपयामास विसंज्ञं पांसुकुण्ठितम् ॥ ५१॥
अभ्येत्य रणमध्यस्थम् अभ्यगच्छद् युधिष्ठिरम् ।

---

1. ख—प्रस्कन्द्य तावद्भीमस्तु स्वरथाद्भीमविक्रमः ।
उत्प्लुत्यागत्य वेगेन तद्रथे विनिपात्य च ॥
सुशर्मणश्शिरोऽगृह्णात् पुनराश्वास्य युध्यतः ।
अग्राद्गिरेर्विनिक्षिप्य सिंहः क्षुद्रमृगं यथा ॥
ऊर्ध्वमुत्प्लुत्य मार्जार आखोर्यद्वच्छिरो रुषा ॥

2. अ-ख-च-म—इदमर्धं नास्ति ।

3. अ-ङ-च—वीर्यवान् ।

4. क—महाबलाः । अ-ङ-च—जितेन्द्रियाः ।

दर्शयामास भीमस्तु सुशर्माणं नराधिपम् ॥ ५२॥
प्रोवाच पुरुषव्याघ्रो भीममाहवशोभिनम् ॥ ५३

युधिष्ठिरः—

तं राजा प्राहसद्दृष्ट्वा मुच्यतां वै नराधमः ॥ ५३॥

वैशम्पायनः—

एवमुक्तोऽब्रवीद्भीमस् सुशर्माणं महाबलम् ॥ ५४

भीमः—

जीवितुं चेच्छसे मूढ हेतुं मे गदतश्शृणु ।
दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ॥ ५५
एवं ते जीवितं दद्याम् एष युद्धजितो विधिः ॥ ५५॥

वैशम्पायनः—

तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ॥ ५६

युधिष्ठिरः—

मुञ्च मुञ्चाधमाचारं प्रमाणं यदि ते वयम् ।
दासभावं गतो ह्येष विराटस्य महीपतेः ॥ ५७
अदासो गच्छ मुक्तोऽसि मैवं कार्षीः कदाचन ॥ ५७॥

वैशम्पायनः—

एवमुक्ते तु सव्रीडस् सुशर्माऽसीदधोमुखः ॥ ५८
[1]मोचयित्वा विराटं तु पाण्डवास्ते हतद्विषः ।
स्वबाहुबलसम्पन्ना ह्रीनिषेवा यतव्रताः ॥ ५९
सङ्ग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ॥ ५९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ ४० ॥ गोग्रहणपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ५९॥ श्लोकाः]

---

1. क-स मुक्तोऽभ्येत्य राजानम् अभिवाद्य प्रतस्थिवान् ॥ [अधिकः पाठः]

## ॥ त्रिंशोऽध्यायः ॥

युधिष्ठिरचोदनया विराटप्रेषितैर्दूतैर्नगरमेत्य जयोद्घोषणम् ॥ १ ॥

वैशम्पायनः—

ततो विराटः कौन्तेयान् अतिमानुषविक्रमान् ।
अर्चयामास वित्तेन मानेन च महारथान् ॥ १
वचसा चैव सान्त्वेन स्नेहेन च मुदाऽन्वितः ॥ १॥

विराटः—

यथैव मम रत्नानि युष्माकं तानि वै तथा ।
कार्यं कुरुत तैस्सर्वैर् यथाकामं यथासुखम् ॥ २॥
ददाम्यलङ्कृताः कन्या वसूनि विविधानि च ।
मनसा चाप्यभिप्रेतं यद्वश्शत्रुनिबर्हणाः ॥ ३॥
युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिति ।
तस्माद्भवन्तो मत्स्यानाम् ईश्वरास्सर्वे एव हि ॥ ४॥

वैशम्पायनः—

तं तथावादिनं सर्वे कौरवेयाः पृथक् पृथक् ।
ऊचुः प्रहृष्टमनसो युधिष्ठिरपुरोगमाः ॥ ५॥

पाण्डवाः—

प्रतिनन्दामहे वाचं सर्वथैव विशाम्पते ।
एतेनैवाद्य प्रीतास्स्मो यत् त्वं मुक्तोऽसि शत्रुभिः ॥ ६॥

यत् त्वं मुक्तोऽसि शत्रुभ्यो ह्येतत् कार्यं हितं हि नः ।
न किञ्चित् कार्यमस्माकं न धनं मृगयामहे ॥ ७॥

वैशम्पायनः—

अथाब्रवीत् प्रीतमना मात्स्यराजो युधिष्ठिरम् ।
[1]पुनरेव महाबाहुर् विराटो राजसत्तमः ॥ ८॥

विराटः—

एहि त्वामभिषेक्ष्यामि मत्स्यराजस्तु नो भवान् ॥ ९
मनसा चाप्यभिप्रेतं यत् ते शत्रुनिबर्हण ।
[2]तत् तुभ्यं सम्प्रदास्यामि सर्वमर्हति नो भवान् ॥ १०
रत्नानि गास्सुवर्णं च मणिमुक्तमथापि च ।
वैयाघ्रपद्य विप्रेन्द्र सर्वथैव नमोऽस्तु ते ॥ ११
त्वत्कृते ह्यद्य पश्यामि राज्यमात्मानमेव च ।
यतश्च जातस्संरम्भस् स च शत्रुवशं गतः ॥ १२

वैशम्पायनः—

ततो युधिष्ठिरो मात्स्यं पुनरेवाब्रवीद्वचः ॥ १२॥

युधिष्ठिरः—

प्रतिनन्दामि ते वाक्यं मनोज्ञं मात्स्य भाषितम् ।
आनृशंस्यपरो नित्यं सुमुखस्सततं भव ॥ १३॥

वैशम्पायनः—

पुनरेव विराटश्च राजा कङ्कमभाषत ॥ १४

---

1. ख—निर्भरः प्रीतिपूर्वेण हर्षगद्गदया गिरा ।　　[अधिकः पाठः]
2. क-ख-घ-म—तत्तेऽहं ।

विराटः—

अहो [1]सूदस्य कर्माणि वललस्य द्विजोत्तम ।
सोऽहं शूद्रेण सङ्ग्रामे वललेनाभिरक्षितः ॥ १५

त्वत्कृते सर्वमेवैतद् उपपन्नं ममानघ ।
वरं वृणीष्व भद्रं ते ब्रूहि किं करवाणि ते ॥ १६

ददामि ते महाप्रीत्या रत्नान्युच्चावचानि च ।
शयनासनयानानि कन्याश्च समलङ्कृताः ॥ १७

हस्त्यश्वरथसङ्घाश्च राष्ट्राणि विविधानि च ।
[2]एतानि च मम प्रीत्या प्रतिगृह्णीष्व सुव्रत ॥ १८

वैशम्पायनः—

तं तथावादिनं तत्र कौरव्यः प्रत्यभाषत ॥ १८॥

युधिष्ठिरः—

एषैव तु मम प्रीतिर् यत् त्वं मुक्तोऽसि शत्रुभिः ।
[3]प्रतीतश्च पुरं तुष्टः प्रवेक्ष्यासि तदाऽनघ ॥ १९॥

दारैः पुत्रैश्च संश्लिष्य सा हि प्रीतिर्ममातुला ॥ २०

सुशर्माणं तु राजेन्द्र सभृत्यबलवाहनम् ।

---

1. क-ख-ङ-म—शूद्रस्य । घ—रुद्रस्य ।
2. क-ख-च-म—तथैव च मम प्रीत्या प्रतिगृह्य ममान्तिके ।
3. क-म—प्रतीतश्चेत् पुनस्तुष्टः । ख—प्रतीतश्चेत् ततस्तुष्टः ।
घ—प्रतीतश्चेत् पुरं तुष्टः ।

विसर्जय नृपश्रेष्ठ वरमेतदहं वृणे ॥ २१

वैशम्पायनः—

एवमुक्तस्तु कङ्केन विराटो राजसत्तमः ।
प्रत्युवाच ततः कङ्कं सुशर्मा यातु चेष्टतः ॥ २२

कङ्कः—

गच्छन्तु दूतास्त्वरिता नगरं तव पार्थिव ।
सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ २३

वैशम्पायनः—

ततस्तद्वचनान्मात्स्यो दूतान् राजा समादिशत् ॥ २३॥

विराटः—

आचक्षध्वं पुरं गत्वा सङ्ग्रामे विजयं मम ।
[1]कुमार्यस्समलङ्कृत्य पर्यागच्छन्तु मे पुरात् ॥ २४॥
वादित्राणि च सर्वाणि गणिकाश्च स्वलङ्कृताः ।
प्रत्यायान्तु च मे शीघ्रं नागरास्सर्वे एव हि ॥ २५॥

वैशम्पायनः—

एवमुक्तास्तथा दूता रात्रौ यात्वा तु केवलम् ।
ततोऽन्तरा वै उषिता दूताश्शीघ्रानुयायिनः ॥ २६॥
नगरं प्राविशंस्ते वै [2]सम्यगभ्युदिते रवौ ॥ २७

---

1. ख-च-छ-म—कुमारा।
2. क-छ-च-म—सूर्ये सम्यगथोदिते। ख—सूर्ये सद्यो यथोदिते। घ—सूर्यस्योदयने तथा।

विराटनगरं प्राप्य शीघ्रं नान्दीमघोषयन् ।
[1]पताकोत्तरमालाढ्यं पुरमप्रतिमं यथा ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
॥ ४७ ॥ गोग्रहणपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

## ॥ एकत्रिंशोऽध्यायः ॥

दुर्योधनेन भीष्मद्रोणादिभिः सह विराटनगरमेत्य उत्तरभागे गवां ग्रहणम् ॥ १ ॥ गोपालेन केनचित् पुरमेत्य उत्तरं प्रति कुरुभिर्गोग्रहणस्य निवेदनम् ॥ २ ॥

---

वैशम्पायनः—

याते त्रिगर्तान् मात्स्ये तु पशूंस्तान् वै परीप्सति ।
दुर्योधनस्सहामात्यो विराटपुर[2]मभ्यगात् ॥ १

भीष्मद्रोणौ च कर्णश्च कृपोऽपि परमास्त्रवित् ।
द्रौणिश्च सौबलश्चैव तथा दुश्शासनश्शलः ॥ २

विविंशतिर्विकर्णश्च चित्रसेनश्च वीर्यवान् ।
दुस्सहो दुर्मुखश्चैव एते चान्ये महारथाः ॥ ३

---

1. क-ख-ङ-च-म—पताकोच्छ्रयमालाढ्यं ।
2. क-ख-च-म—मेत्य च ।

सर्वे मत्स्यानुपागम्य विराटस्य महीपतेः ।
गोपान् विद्राव्य तरसा गोधनं जह्रुरोजसा ॥ ४

गवां शतसहस्राणि कुरवः कालयन्ति च ।
महता रथवंशेन परिगृह्य समन्ततः ॥ ५

गोपालानां तु [1]रोषेण हन्यतां तैर्महारथैः ।
आरावस्सुमहानासीत् सम्प्रहारे भयङ्करे ॥ ६

गवाध्यक्षस्तु सन्त्रस्तो रथमास्थाय सत्वरः ।
जगाम नगरायैव परिक्रोशंस्तदाऽऽर्तवत् ॥ ७

सम्प्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात् तदा ।
अवतीर्य रथात् तूर्णम् आख्यातुं प्रविवेश ह ॥ ८

दृष्ट्वा भूमिञ्जयं नाम पुत्रं मात्स्यस्य मानिनम् ।
तस्मै तत् सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ ९

गवाध्यक्षः—

गवां शतसहस्राणि कुरवः कालयन्ति ते ।
प्रतिजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्धन ॥ १०

राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि वै स्वयम् ।
त्वां हि मात्स्यो महीपालस् सैन्यपालमिहाकरोत् ॥ ११

1. क-च-म—घोषेण। ख—घोषेषु हन्यते दुन्दुभिर्महान्।

त्वां वै परिषदो मध्ये श्लाघते हि नराधिपः ।
पुत्रो ममानुरूपश्च शूरश्चेति कुलोद्वहः ॥ १२

इष्वस्त्रनिपुणो योद्धा सर्वशस्त्रविशारदः ।
समर्थस्समरे योद्धुं कौरवैस्सह तादृशैः ॥ १३

तस्य तत् सत्यमेवास्तु मनुष्येन्द्रस्य भाषितम् ।
जयश्च नियतो युद्धे कौरवा[1] यान्तु विद्रुताः ॥ १४

आवर्तय कुरूञ्जित्वा पशून् पशुपतिर्यथा ।
निर्दहैषामनीकानि भीमेनेश्वरतेजसा ॥ १५

धनुश्च्युतै रुक्मपुङ्खैश् शितैस्सन्नतपर्वभिः ।
द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः ॥ १६

बाणापवीणां ज्यातन्त्रीं चापदण्डां महास्वनाम् ।
प्रविश्य महतीं सेनां धनुर्वीणां प्रवादय ॥ १७

निर्याहि नगरात् तूर्णं राजपुत्र किमास्यते ।
श्वेताः काञ्चनसंनाहा रथे युज्यन्तु ते हयाः ॥ १८
ध्वजं च सिंहं सौवर्णम् उच्छ्रयस्व[2] रथे विभो ॥ १८॥

रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता त्वया ।
छादयन्तु शरास्सूर्यं राज्ञामायुर्निरोधकाः ॥ १९॥

---

1. क-ख-ङ-च-म—श्च ध्रुवं हताः । घ—श्च ध्रुवं गताः ।
2. म—तथा विभो । अ—रथोत्तम । ख—महाविभो ।
घ—यथा विभो । ङ—रथोत्तमे ।

रणे जित्वा कुरून् सर्वान् वज्रपाणिरिवासुरान् ।
यशो महदवाप्य त्वं प्रविशेदं पुरं पुनः ॥ २०॥

त्वं हि राष्ट्रस्य परमा गतिर्मात्स्यपतेस्सुत ।
गतिमन्तो भवन्त्वद्य सर्वे विषयवासिनः ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ ४७ ॥ गोग्रहणपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २१॥ श्लोकाः]

---

## ॥ द्वात्रिंशोऽध्यायः ॥

---

उत्तरे समुचितसारथेरभावेन खिद्यमाने अर्जुनेन द्रौपदीं प्रति उत्तराय बृहन्नलायाः सारथ्यकौशलनिवेदनचोदना ॥ १ ॥ भ्रातृचोदितया उत्तरया बृहन्नलां प्रति उत्तररथसारथ्यकरणप्रार्थना ॥ २ ॥ उत्तरेण सारथीभूतेनार्जुनेन सह कुरून् प्रति रणायाभियानम् ॥ ३ ॥

---

वैशम्पायनः—

[1]स्त्रीमध्य उक्तस्तेनासौ वाक्यं तेजःप्रवर्धनम् ।
अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् ॥ १

उत्तरः—

अद्याहमनुगच्छेयं दृढधन्वा गवां पदम् ।

---

1. ख-घ—ततो जनसमक्षं तु स्त्रीमध्ये च विशेषतः ।
गवाध्यक्षेण संप्रोक्तं वाक्यं तेजःप्रवर्धनम् ॥ [अधिकः पाठः]

यदि मे सारथिः कश्चिद् भवेदश्वेषु कोविदः ॥ २
तमहं नाधिगच्छामि यो मे यन्ता समो भवेत् ।
पश्यध्वं सारथिं शीघ्रं मम [1]युद्धं प्रदास्यतः ॥ ३
अष्टाविंशतिरात्रं वा मासं वाऽपि भवेत् ततः ।
यत्तु चासीन्महायुद्धं तत्र मे सारथिर्हतः ॥ ४
यद्यहं त्वभिगच्छेयं यो मे यन्ता भवेद्युधि ।
त्वरावानद्य यास्यामि समुच्छ्रितमहाध्वजः ॥ ५
विगाह्य तत् परानीकं गजवाजिरथाकुलम् ।
शस्त्रप्रतापान्निर्वीर्यान् कुरूञ्जित्वाऽऽनये पशून् ॥ ६
दुर्योधनं शान्तनवं कर्णं वैकर्तनं कृपम् ।
द्रोणं च सह पुत्रेण महेष्वासान् समागतान् ॥ ७
वित्रासयित्वा सङ्ग्रामे दानवान् मघवानिव ।
अनेनैव मुहूर्तेन पुनः प्रत्यानये पशून् ॥ ८
शून्यमाज्ञाय कुरवः प्रयान्त्यादाय गोधनम् ।
किं नु शक्यं च तैः कर्तुं यदहं तत्र नाभवम् ॥ ९
पश्येयुरद्य मे वीर्यं कुरवस्ते समागताः ।
किं नु पार्थोऽर्जुनस्साक्षाद् इति मंस्यन्ति मां परे ॥ १०

1. क—युक्तं प्रयास्यतः। ख-म—युद्धं प्रयास्यतः।
च—युद्धं प्रधार्यताम्।

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा स्त्रीषु चात्म[1]प्रशंसनम् ।
नामर्षयत पाञ्चाली बीभत्सोः परिकीर्तनम् ॥ ११

श्रुत्वा तदर्जुनो वाक्यम् उत्तरेण प्रभाषितम् ।
[2]पाञ्चालीमर्जुनो वाक्यम् उवाच तदनुस्मरन् ॥ १२

अतीतसमये काले प्रियां भार्यामभाषत ।

द्रुपदस्य सुतां राज्ञः पाञ्चालीं रूपसम्मताम् ॥ १३
सत्यार्जवगुणोपेतां भर्तुः प्रियहितैषिणीम् ॥ १३॥

अर्जुनः—

उत्तरां ब्रूहि पाञ्चालि गत्वा क्षिप्रं शुचिस्मिते ॥ १४

इयं किल पुरा युद्धे खाण्डवे सव्यसाचिनः ।

सारथिः पाण्डुपुत्रस्य पार्थस्य तु बृहन्नला ॥ १५
महाञ्जयो भवेद्युद्धे सा चेद्यन्ता बृहन्नला ॥ १५॥

वैशम्पायनः—

सा चोदिता तदा तेन ह्यर्जुनेन शुचिस्मिता ।
पाञ्चाली च तदाऽऽगम्य उत्तराया निवेशनम् ॥ १६॥

ज्ञात्वा तु समयान्मुक्तं चन्द्रं राहुमुखादिव ।
युधिष्ठिरं धर्मपरं सत्यार्जवपथे स्थितम् ॥ १७॥

अमर्षयन्ती तद्दुःखं कृष्णा कमललोचना ।

1. अ-ह-प्रदर्शनम्। 2. अ-च—इदमर्धं नास्ति ।

उत्तरामाह वचनं सखीमध्ये विलासिनीम् ॥ १८॥

द्रौपदी—

योऽयं युवा वारणयूथपोपमो
बृहन्नलाऽस्मीति जनोऽभ्यभाषत ।
पुरा हि पार्थस्य स सारथिस्सदा
धनुर्धराणां प्रवरस्य मन्ये ॥ १९॥

[1]स दृष्टपूर्वो हि मया चरन्त्या पाण्डवालये ॥ २०
यदा येन सहायेन खाण्डवं चादहत् पुरा ।
अर्जुनस्य तदा तेन सङ्गृहीता हयोत्तमाः ॥ २१
तेन सारथिना पार्थस् सर्वभूतानि सर्वशः ।
अजयत् खाण्डवप्रस्थे न हि यन्ताऽस्ति तादृशः ॥ २२

1. ख-च—एतेन वै सारथिना तदाऽर्जुनस्
सदेवगन्धर्वमहोरगासुरान् ।
सर्वाणि भूतान्यजयत् स वीर्यवान्
अतर्पयच्चापि हिरण्यरेतसम् ॥
यद्दस्य संस्थामपि तस्य संयुगे
जानामि वीर्यं परवीरमध्यगम् ।
सङ्गृह्य रश्मीनपि चास्य वीर्यवान्
आदाय चापं प्रययौ रथे स्थितः ॥
न सर्वभूतानि न देवदानवा
न चापि सर्वे कुरवस्समागताः ।
धनं हरेयुस्तव जातु धन्विनो
बृहन्नला तूत्तरसारथिर्यदि ॥
धनुष्यनवमश्चासीत् तस्य शिष्यो महात्मनः । [अधिकः पाठः]

वैशम्पायनः—

ततस्सैरन्ध्रिसहिता उत्तरा भ्रातुरब्रवीत् ॥ २२॥

उत्तरः—

अभ्यर्थयेमां सारथ्ये वीर शीघ्रं बृहन्नलाम् ॥ २३

शिक्षितैषा हि सारथ्ये नर्तने गीत[1]वादने ।
सैरन्ध्रयाह महाप्राज्ञा स्तुवन्ती वै बृहन्नलाम् ॥ २४

[2] उत्तरः—

सैरन्ध्रि जानासि मम व्रतं यथा
क्लीबं न भाषे पुरुषस्स्वयं हि ।
सोऽहं न शक्ष्यामि बृहन्नलां शुभे
वक्तुं स्वयं यच्छ हयान् ममेति ॥ २५

सैरन्ध्री—

[3]भयकाले तु सम्प्राप्ते न व्रतं नाव्रतं पुनः ।
यथा दुःखं प्रतरति तथा युक्तं चरेद्बुधः ॥ २६

इति धर्मविदः प्राहुस् तस्माद्वाच्या बृहन्नला ॥ २६॥
येयं कुमारी सुश्रोणी भगिनी ते यवीयसी ।
अस्यास्तु वचनं वीर करिष्यति न संशयः ॥ २७॥

---

1. क-ख-म—वादिते ।
2. ख—श्रुत्वोत्तरोत्तरावाक्यं सैरन्ध्र्या समुदीरितम् ।
सन्धार्य मनसा सम्यक् सैरन्ध्रीं पुनरब्रवीत् ॥ [अधिकः पाठः]
3. म—इदमादि अर्धत्रयं नास्ति ।

यदि ते सारथिस्सा स्यात् कुरून् सर्वानसंशयम् ।
जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ॥ २८॥

वैशम्पायनः—

एवमुक्तस्स सैरन्ध्र्या भगिनीं प्रत्यभाषत ॥ २९

उत्तरः—

गच्छ त्वमनवद्याङ्गि तामानय बृहन्नलाम् ॥ २९॥

वैशम्पायनः—

सा प्राद्रवत् काञ्चनमाल्यधारिणी
ज्येष्ठेन भ्रात्रा प्रहिता यशस्विनी ।
[1]भ्रातुर्नियोगं तु निशम्य सुभ्रूश्
शुभानना हाटकरत्नभूषिता ॥ ३०॥

सा वज्रमुक्तामणिहेमकुण्डला
मृदुप्रभा भ्रातृनियोगचोदिता ।
प्रदक्षिणावर्ततनुद्विशिखण्डिनी
पद्मानना पद्मदलायताक्षी ॥ ३१॥

तन्वी समाङ्गी मृदुमन्द्रलोचना
मात्स्यस्य राज्ञो दुहिता विलासिनी ।
सा नर्तनागारमरालपक्ष्मा
शतह्रदा मेघमिवान्वपद्यत ॥ ३२॥

सा नागनासोपमसंहितोरूर्
अनिन्दिता वेदिविलग्नमध्या ।

1. ख—श्लोकद्वयं नास्ति ।

आसाद्य तस्थौ वरमाल्यधारिणी
पार्थं शुभा नागवधूरिव द्विपम् ॥ ३३॥
तामागतामायतताम्रलोचनाम्
अवेक्ष्य पार्थस्समयेऽभ्यभाषत ॥ ३४

अर्जुनः—
किमागता काञ्चनमाल्यधारिणी
सुगात्रि किञ्चित् त्वरिताऽसि सुभ्रु ।
किं ते मुखं सुन्दरि न प्रसन्नम्
आचक्ष्व शीघ्रं मम चारुहासिनि ॥ ३५

वैशम्पायनः—
सा वज्रवैडूर्यविकारकुण्डला
विनिद्रपद्मोत्पलपत्रगन्धिनी ।
प्रसन्नताराधिपसन्निभानना
पार्थं कुमारी वचनं बभाषे ॥ ३६

उत्तरा—
हरन्ति वित्तं कुरवः पितुर्मे
शतं सहस्राणि गवां बृहन्नले ।
सा भ्रातुरस्थान् मम संयमस्व
पुरा परे दूरतरं हरन्ति गाः ॥ ३७
सैरन्ध्रिराख्याति बृहन्नले त्वां
सुशिक्षितां सङ्ग्रहणे रथाश्वयोः ।

अहं मरिष्यामि न मेऽत्र संशयो
मया धृता तत्र न चेद्गमिष्यसि ॥ ३८

वैशम्पायनः—

तथा नियुक्तो नरदेवकन्यया
नरोत्तमः प्रीतमना धनञ्जयः ।
उवाच पार्थश्शुभमन्दया गिरा
शुभाननां शुक्लदतीं शुचिस्मिताम् ॥ ३९

अर्जुनः—

गच्छामि यत्रेच्छसि चारुहासिनि
हुताशनं प्रज्वलितं [1]विशामि वा ।
इच्छामि तेऽहं वरगात्रि जीवितं
करोमि किं ते प्रियमद्य सुन्दरि ॥ ४०
न मत्कृते द्रक्ष्यसि तत्पुरं प्रिये
वैवस्वतं प्रेतपतेर्महाभयम् ॥ ४०॥

वैशम्पायनः—

स एवमुक्त्वा कुरुवीरपुङ्गवो
विलासिनीं शुक्लदतीं शुचिस्मिताम् ।
बृहन्नलारूपविभूषिताननो
विराटपुत्रस्य समीपमाव्रजत् ॥ ४१॥

1. क-ख-म—व्रजामि ।

[1]तं सा व्रजन्तं त्वरितं प्रभिन्नमिव कुञ्जरम् ।
अन्वगच्छद्विशालाक्षी गजं गजवधूरिव ॥ ४२॥

दूरादेव तु सम्प्रेक्ष्य राजपुत्रोऽभ्यभाषत ॥ ४३

उत्तरः—

त्वया सारथिना पार्थः खाण्डवेऽग्निमतर्पयत् ।
पृथिवीं चाजयत् कृत्स्नां कुन्तीपुत्रो धनञ्जयः ॥ ४४
सैरन्ध्री त्वां ममाचष्ट सा हि जानाति पाण्डवान् ॥ ४४॥

[2]देवेन्द्रसारथिर्वीरो मातलिः ख्यातविक्रमः ।
सुहोत्रो जामदग्नेश्च विष्णोर्यन्ता च दारुकः ॥ ४५॥

[3]अरुणस्सूर्ययन्ता च सुमन्त्रो दशरथस्य च ।
सर्वे सारथयः ख्याता न बृहन्नलया समाः ॥ ४६॥

इत्युक्तोऽहं च सैरन्ध्र्या तेन त्वामाह्वयामि वै ॥ ४७

---

1. ख-च—तमापतन्तं वरभूषणैर्वृतं
महाप्रभं वारणयूथपोपमम् ।
गजेन्द्रबाहुं कमलायतेक्षणं
कवाटवक्षस्स्थलमुन्नतांसकम् ॥
तमागतं पार्थमभिप्रकर्शनं
महाबलं नागमिव प्रमाथिनम् ।
वैराटिरामन्त्र्य ततो बृहन्नलां
गवां निनीषन् पदमुत्तरोऽब्रवीत् ॥ [अधिकः पाठः]
2. क-म—सहस्राहो जामदग्नेः । ख—सुमहो । च—सोमो यथा ।
3. ख-च—सुमन्त्रो वा दाशरथेः सूर्ययन्ता यथाऽरुणः ।

आहूता त्वं मया सार्धं योद्धुं याहि बृहन्नले ।
दूराद्दूरतरं गावो भवन्ति कुरुभिर्हृताः ॥ ४८

वैशम्पायनः—

तथोक्ता प्रत्युवाचैनं राजपुत्रं बृहन्नला॥ ४८॥

बृहन्नला—

का शक्तिर्मम सारथ्यं कर्तुं सङ्ग्राममूर्धनि ॥ ४९
नृत्तं वा यदिवा गीतं वादित्रं वा पृथग्विधम् ।
तत् करिष्यामि भद्रं ते सारथ्यं तु कुतो मम ॥ ५०

उत्तरः—

त्वं नर्तको वा यदि वाऽपि गायकः
क्षिप्रं तनुत्रं परिधत्स्व भानुमत् ।
अभीक्ष्णमाहुस्तव कर्म पौरुषं
स्त्रियः प्रशंसन्ति ममाद्य चान्तिके ॥ ५१

वैशम्पायनः—

इत्येवमुक्त्वा नृपसूनुसत्तमस्
तदा स्मयित्वाऽर्जुनमभ्यनन्दत् ।
अथोत्तरः [1]पारशवं शताक्षिमत्
सुवर्णचित्रं [2]परिगृह्य भानुमत् ॥ ५२

1. अ—पद्मशतं। ख—पारवशं। घ—पारशतं।
2. म—परिवाह्य। अ-क-ङ-च—परिधाप्य। घ—परिधत्स्व।

बृहन्नलायै प्रददौ स्वयं तदा
विराटपुत्रः परवीरघातिने ।
तदाज्ञया मात्स्यसुतस्य वीर्यवान्
अकर्तुकामेव समाददे तदा ॥ ५३

बृहन्नला—

यद्यस्ति च रणे शौर्यं शक्यं चेद् द्विषतां वधः ।
अहं त्वामभिगच्छामि यत्र त्वं यासि तत्र भो ॥ ५४

वैशम्पायनः—

स तत्र नर्मसंयुक्तम् अकरोत् पाण्डवो बहु ।
उत्तरायाः प्रमुखतस् सर्वं जानन्नरिन्दमः ॥ ५५

तमाददानं प्रमदा जहासिरे
ह्यधोमुखं वीरवरोऽभ्यहारयत् ।
ततस्तिरश्चीनकृतं सपत्नहा
ह्यधोमुखं कवचमथाभ्यकर्षत ॥ ५६

[1]सम्यक् प्रजानन्नपि सत्यविक्रमो
ह्यज्ञातवत् सर्वकुरुप्रवीरः ।
ऊर्ध्वं क्षिपन् वीरवरोऽभ्यहारयत्
[2]पुनश्च यत्नात् कवचं धनञ्जयः ॥ ५७

1. क-ख-ङ-म—स नाम जानन्नपि ।
2. क—पुनर्नियन्ता वचनाद्धनञ्जयः । ख-घ-म—पुनश्च यन्ता कवचं ।

एवंप्रकाराणि बहूनि कुर्वति
तस्मिन् कुमार्यः प्रमदा जहासिरे ।
तथाऽपि कुर्वन्तममित्रकर्शनं
न चोत्तरः पर्यभवद्धनञ्जयम् ॥ ५८
तं राजपुत्रस्समनाहयत् स्वयं
[1]जाम्बूनदान्तेन दृढेन वर्मणा ।
कृशानुतप्तप्रतिमेन भास्वता
जाज्वल्यमानेन सहस्ररश्मिना ॥ ५९
अथास्य शीघ्रं प्रसमीक्ष्य योजयद्
रथे हयान् काञ्चनजालसंवृतान् ।
सुवर्णजालान्तरयोक्त्रभूषणं
सिंहं च सौवर्णमुपाश्रयद्रथे ॥ ६०
धनूंषि च विचित्राणि बाणांश्च रुचिरान् बहून् ।
आयुधानि च [2]तत्रैव रथोपस्थे न्ययोजयत् ॥ ६१
आरुह्य प्रययौ वीरस् सबृहन्नलसारथिः ॥ ६१॥
अथोत्तरा च कन्याश्च सख्यश्चैवाब्रुवंस्तदा ॥ ६२

उत्तरा—
बृहन्नले आनयेथा वासांसि रुचिराणि नः ।

---

1. क—जाम्बूनदान्ताभरणेन । ख—जाम्बूनदान्तेन शुभेन ।
घ—जाम्बूनदाभेन शुभेन ।
2. क-ख-ग-ङ—वै तत्र रथोपस्थे च स न्यधात् ।

[1]पालिकार्थं सुसूक्ष्माणि रत्नानि विविधानि च।। ६३

विजित्य सङ्ग्रामगतान् भीष्मद्रोणमुखान् कुरून् ।। ६३।।

वैशम्पायनः—

अथानुब्रुवतीः कन्यास् संहिताः पाण्डुनन्दनः ।

प्रत्युवाच हसन् पार्थो मेघदुन्दुभिनिस्वनः ।। ६४।।

बृहन्नला—

यद्युत्तरोऽयं सङ्ग्रामे विजेष्यति महारथान् ।

अथाहरिष्ये वासांसि सूक्ष्माण्याभरणानि च ।। ६५।।

वैशम्पायनः—

अथोत्तरो वर्म महाप्रभाववत्
सुवर्णवैडूर्यपरिष्कृतं दृढम् ।
आमुच्य वीरः प्रययौ रथोत्तमं
धनञ्जयं सारथिनं प्रगृह्य ।। ६६।।

तमुत्तरं प्रेक्ष्य रथोत्तमे स्थितं
बृहन्नळां चैव महाजनस्तदा ।
स्त्रियश्च कन्याश्च द्विजाश्च सुव्रताः
प्रदक्षिणं मङ्गलिनोऽभ्यपूजयन् ।। ६७।।

पौराः—

यदर्जुनस्यर्षभतुल्यगामिनः
पुराऽभवत् खाण्डवदाहमङ्गलम् ।

1. ख—पाञ्चालिकार्थं सूक्ष्माणि रत्नानि ।

कुरून् समासाद्य रणे बृहन्नले
सहोत्तरेणास्तु तवाद्य मङ्गलम् ॥ ६८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ४७ ॥ गोग्रहणपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये ६८॥ श्लोकाः]

---

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

---

उत्तरस्य कुरुसेनावलोकनमात्रेण रथादवस्कन्द्य भयात् पलायनम् ॥१॥ तमनुधाविनाऽर्जुनेन तस्य केशपाशे ग्रहणेन परिसान्त्वनपूर्वकं पुना रथारोपणम् ॥ २ ॥ तथा तेन सह गाण्डीवाद्यानयनाय शमीं प्रति गमनम् ॥ ३ ॥

---

वैशम्पायनः—

स राजधान्या निर्याय वैराटिः पृथिवीञ्जयः ।
प्रयाहीत्यब्रवीत् सूतं यत्र ते कुरवो गताः ॥ १

समवेतान् कुरून् यावज् जिगीषूनवजित्य च ।
गाश्चैताः क्षिप्रमादाय पुनरायामि मत्पुरम् ॥ २

ततस्तांश्चोदयामास सदश्वान् पाण्डुनन्दनः ॥ २॥

ते हया नरसिंहेन चोदितास्त्वशीघ्र[1]गामिनः ।

---

1. क-ख-म—वाहिनः ।

आलिखन्त इवाकाशम् ऊहुः काञ्चनमालिनः ॥ ३॥

नातिदूरमथो यात्वा मात्स्यपुत्रधनञ्जयौ ।
अवैक्षेतामविलस्तौ कुरूणा[1]मुत्तमं बलम् ॥ ४॥

श्मशानमभितो गत्वा शूरौ ददृशतुः कुरून् ॥ ५

तदनीकं महत् तेषां विबभौ [2]सागरस्वनम् ॥ ५॥
संसर्पमाणमाकाशे वनं बहुलपादपम् ॥ ६

ददृशे पार्थिवो रेणुर् जनितस्तेन [3]सर्वतः ।
दृष्टिप्रणाशो भूतानां दिवस्पृक् नरसत्तम ॥ ७

तदनीकमथ प्रेक्ष्य गजाश्वरथसङ्कुलम् ।
कर्णदुर्योधनकृपैर् गुप्तं शान्तनवेन च ॥ ८
द्रोणेन च सपुत्रेण महेष्वासेन धीमता ।
हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत् ॥ ९

उत्तरः—
नोत्सहे कुरुभिर्योद्धुं रोमहर्षं च पश्य मे ॥ ९॥
बहुप्रवीरमत्युग्रं देवैरपि दुरासदम् ।
प्रतियोद्धुं न शक्नोमि कुरुसैन्यं भयानकम् ॥ १०॥

---

1. क-ख-ङ-च-म—बलिनां । घ—बलिनां वरम् ।
2. च—सागराह्वयम् । ङ—सारसस्वनम् ।
3. क—सर्पता । ख—सर्वशः । ङ—संवृतः ।

नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ।
देवैरपि सहेन्द्रेण न शक्यं किम्पुनर्नरैः ॥ ११॥

रथनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।
दृष्ट्वैव हि परानीकं मनः प्रव्यथतीव मे ॥ १२॥

यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ॥ १३॥

दुर्योधनस्तथा राजा वीरो दुर्मर्षणः [1]प्रभुः ॥ १४

धृतिमन्तो महेष्वासास् सर्वे युद्धविशारदाः ।
मत्ता इव महानागा युक्तध्वजपताकिनः ॥ १५

नीतिमन्तो महेष्वासास् सर्वास्त्रकृतनिश्चयाः ।
दुर्जयास्सर्वसैन्यानां देवैरपि सवासवैः ॥ १६

पताकिनश्च मातङ्गास् सध्वजाश्च महारथाः ।
विप्रकीर्णाः कृतोद्योगा वाजिनाश्चित्रभूषिताः ॥ १७

ताञ्जेतुं समरे शूरान् दुर्बुद्धिरहमागतः ॥ १७॥

दृष्ट्वैव हि कुरून् सर्वान् व्यूढानीकान् प्रहारिणः ।
हृषितानि च रोमाणि [2]कश्मलं चागमन्महत् ॥ १८॥

---

1. क-ख-म—पटुः ।  घ—परः ।
2. च—कश्मलं च गतं मनः ।  क-म—कश्मलं चागतं मम ।
ख—कश्मलेनाहतं मनः ।  ङ—कश्मलं चागमन्मनः ।

वैशम्पायनः—

दृष्ट्वा च महतीं सेनां कुरूणां दृढधन्विनाम् ।
परिदेवयते मन्दस् सकाशे सव्यसाचिनः ॥ १९॥

उत्तरः—

त्रिगर्तान् मे पिता यातश् शून्ये वै प्रणिधाय माम् ।
सर्वां सेनां समादाय न मे सन्तीह सैनिकाः ॥ २०॥

अहमेको बहून् बालः कृतास्त्रानकृतश्रमः ।
प्रतियोद्धुं न शक्नोमि निवर्तय बृहन्नले ॥ २१॥

वैशम्पायनः—

तं तथा वादिनं तत्र बीभत्सुः प्रत्यभाषत ।
सम्प्रहस्य पुनस्तं वै सर्वलोकमहारथः ॥ २२॥

अर्जुनः—

भयादुदीर्णरूपोऽसि द्विषतां हर्षवर्धनः ।
न च तावत् कृतं किञ्चित् परैः कर्म रणाजिरे ॥ २३॥

स्वयमेव च मामात्थ वह मां कौरवान् प्रति ।
सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥ २४॥

मध्यमामिषगृध्रानां कुरूणामाततायिनाम् ।
नेष्यामि त्वां महाबाहो मा त्वं हि विमना भव ॥ २५॥

समुद्रमिव गम्भीरं कुरुसैन्यमरिन्दम ॥ २६

स्त्रीसकाशे प्रतिज्ञाय पुरुषाणां हि शृण्वताम् ।
विकत्थमानो निर्यात्वा ब्रूषि किं नात्र युद्ध्यसे ॥ २७

तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च ।
रथमारुह्य [1]निर्याय किमर्थं न च योत्स्यसे ॥ २८

न चेद्विजित्य गास्त्वं हि नगरं प्रतियास्यसि ।
प्रहसिष्यन्ति धीरास्त्वां नरा नार्यश्च सङ्गताः ॥ २९

अहमप्यस्मि सैरन्ध्र्या स्तुतस्सारथ्यकर्मणि ।
नाहं शक्नोम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ॥ ३०

स्तोत्रेण चैव सैरन्ध्र्यास् तव वाक्येन चोदितः ।
कथं न युद्ध्येयमहं कुरूनेतान् स्थिरो भव ॥ ३१

उत्तरः—

कामं हरन्तु मात्स्यानां भूयांसः कुरवो धनम् ।
प्रहसन्तु च मां नार्यो नराश्चापि बृहन्नले ॥ ३२

सङ्ग्रामेण न मे कार्यं गावो गच्छन्तु चापि मे ।
नगरं च प्रवेक्ष्यामि पश्यतस्ते बृहन्नले ॥ ३३

वैशम्पायनः—

इत्युक्त्वा प्राद्रवद्भीतो रथात् प्रस्कन्द्य कुण्डली ।
त्यक्त्वा मानं सुसन्त्रस्तो विसृज्य सशरं धनुः ॥ ३४

---

1. ख—निर्यात्वं किमर्थं न च वेत्स्यसे ।
च-म—निर्यात्वा। ख—निर्या त्वां ब्रूहि ?।

**अर्जुनः—**

नैष [1]शूरैस्स्मृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयो हि मरणं युद्धे क्षत्रियस्य पलायनात् ॥ ३५

**वैशम्पायनः—**

इति चोक्त्वा तु कौन्तेयो रथादवततार ह ।
दीर्घां वेणीं विधून्वानस् साधु रक्ते च वाससी ॥ ३६

अन्वधावन्महाबाहू राजपुत्रं धनञ्जयः ॥ ३६॥
विक्रमन्तं पदन्यासैः [2]कम्पयन्तं च मेदिनीम् ।
विधूय वेणीं धावन्तम् अजानन्तोऽर्जुनं तदा ॥ ३७॥
सैनिकाः प्राहसन केचित् [3]तस्य रूपमवेक्ष्य च ॥ ३८

तं च शीघ्रं प्रधावन्तं सम्प्रेक्ष्य कुरवोऽब्रुवन् ॥ ३८॥

**सैनिकाः—**

कोऽयं धावत्यसङ्गेन पूर्वं मुक्त्वा रथोत्तमम् ।
क एष वेषप्रच्छन्नो [4]भस्मच्छन्न इवानलः ॥ ३९॥
किञ्चिदस्य यथा पुंसः किञ्चित् तस्य यथा स्त्रियः ॥ ४०

**वैशम्पायनः—**

इत्येवं सैनिकाः प्राहुर् द्रोणस्तानिदमब्रवीत् ।
आचार्यः कुरुपाण्डूनां मतौ शुक्राङ्गिरोपमः ॥ ४१

---

1. ङ-च-म—पूर्वैः। क—पूर्व। ख—पूर्वैः स्तुतो। घ—पूर्वस्थितो।
2. क-च-म—नमयन्निव भूतलम्। ख—नमयन्तं च भूतलम्।
3. क-ख-घ-च-म—केचिद्।
4. क-ख-घ-च-म—भस्मनेव हुताशनः।

द्रोणः—

किं विचारेण वः कार्यम् एतेनानुस्मृतेन वै ॥ ४१॥

धावन्तमनुधावंश्च निर्भयो भयविप्लुतम् ।

वेणी[1]कलापं निर्धूय प्रविभाति नरर्षभः ॥ ४२॥

आकारमर्जुनस्यैतत् क्लीबरूपं बिभर्ति च ।

रूपेण पार्थसदृशस् स्त्रीवेषसमलङ्कृतः ॥ ४३॥

तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ।

तत्तदेवास्य विक्रान्तं नायमन्यो धनञ्जयात् ॥ ४४॥

अमरेष्विव देवेन्द्रो मानुषेषु धनञ्जयः ।

एकोऽस्माननुयात्येष नायमन्यो धनञ्जयात् ॥ ४५॥

वैशम्पायनः—

द्रोणेन चैवमुक्तस्तु कर्णः प्रोवाच बुद्धिमान् ॥ ४६

कर्णः—

एकः पुत्रो विराटस्य शून्ये सन्निहितः पुरे ।

स एष किल निर्यातो बालभावान्न पौरुषात् ॥ ४७

क्लीबं वै सारथिं कृत्वा निर्यातो नगराद्बहिः ॥ ४७॥

छन्नं [2]गात्रेण वा नूनं जानीध्वं यान्तमर्जुनम् ।

ते हि नः प्रतिसंयातुं सङ्ग्रामे न हि शक्नुयुः ॥ ४८॥

---

1. ख—कलापिनं भूयः । घ—कलापमुद्धूय ।

2. क-म—सत्रेण । ख—छत्रेण वा । ङ—शास्त्रेण वा ।

कथमेकतरस्तेषां समस्तान् योधयेत् कुरून् ॥ ४९

उत्तरस्सारथिं कृत्वा निर्यातो नगराद्बहिः ।
स नो मन्ये ध्वजान् दृष्ट्वा भीत एष पलायते ॥ ५०

कृपः—

[1]नूनं तमेव धावन्तं जिघृक्षति धनञ्जयः ।
उत्तरं सारथिं कृत्वा स्वयं योद्धुमिहेच्छति ॥ ५१

वैशम्पायनः—

इति स्म कुरवस्सर्वे विमृशन्तः पुनः पुनः ।
न च व्यवसितुं वीरा अर्जुनं शक्नुवन्ति ते ॥ ५२

दुर्योधन उवाचेदं सैनिकान् रथसत्तमान् ॥ ५२॥

दुर्योधनः—

अर्जुनो वासुदेवो वा रामः प्रद्युम्न एव वा ।
ते हि नः प्रतिसंयातुं सङ्ग्रामे न च शक्नुयुः ॥ ५३॥

अन्यो वा क्लीबरूपेण यद्यागच्छेद्ध्रुवां पदम् ।
अर्पयित्वा शरैस्तीक्ष्णैः पातयिष्यामि भूतले ॥ ५४॥

कथमेकतरस्तेषां समस्तान् योधयेत् कुरून् ॥ ५५

वैशम्पायनः—

छन्नं तथा[2]गतं सर्वे पाण्डवं प्रेक्ष्य सैनिकाः ।

---

1. क—एकोऽस्माननुयात्येष नायमन्यो धनञ्जयात्। [अधिकः पाठः]
2. ङ—तं शस्त्रेण। क-म—तं सखेण। ख—विधं सखे। (घ) तं सर्वेण।

अर्जुनो नेति चेत्येनं न व्यवस्यन्ति ते पुनः ॥ ५६

इति स्म कुरवस्सर्वे मन्त्रयन्तो महारथाः ॥ ५६॥

दृढवेधी महासत्त्वश् शक्रतुल्यपराक्रमः ।
अथागच्छति चेद्योद्धुं सर्वं संशयितं बलम् ॥ ५७॥

[1]न चाप्यन्यं नरं तत्र व्यवस्यन्ति धनञ्जयात् ॥ ५८

उत्तरं तु प्रधावन्तम् अनुद्रुत्य धनञ्जयः ।
गत्वा शतपदं तूर्णं केशपक्षे परामृशत् ॥ ५९

[2]विराटपुत्रं बीभत्सुर् बलवानरिमर्दनः ॥ ५९॥

सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।
बहुलं कृपणं चैव वित्तं प्रावेदयद्बहु ॥ ६०॥

[3]उत्तरः—

सुवर्णमणिमुक्तानां यद्यदिच्छसि दद्मि ते ।

---

1. अ—कोशे–इदमर्धं नास्ति ।
2. ख—मा मा गृहाण भद्रं ते दासोऽहं ते बृहन्नले ।
इति वादिनमेवाशु धावन्तं तरसाऽग्रहीत् ॥ [अधिकः पाठः]
3. ख—उत्तरः—
मा मा मारय भद्रं ते मुञ्च मामेव मे गृहम् ।
मुञ्च मां मुञ्च मुञ्चेति तत्पादावग्रहीद्ब्रुवन् ॥
दर्शयित्वा ततस्सर्वान् अददात् सोऽङ्गुलिं नृप ।
माभैस्त्वमिति पार्थेन प्रार्थितः पर्यदेवयत् ॥ [अधिकः पाठः]
क—भीतस्त्रस्ताङ्गप्रत्यङ्गो घूर्णिताक्षो विवर्णवान् । [अधिकः पाठः]

हस्तिनोऽश्वान् रथान् गावस् स्त्रियश्च समलङ्कृताः ॥ ६१॥

शातकुम्भस्य शुद्धस्य श्रेष्ठस्य रजतस्य च ।
ददामि शतनिष्कं ते मुञ्च मां त्वं बृहन्नले ॥ ६२॥

मणीनष्टौ च वैडूर्यान् हेमबद्धान् महाप्रभान् ।
हेम[1]दण्डप्रतिच्छन्नं रथं युक्तं तु वाजिभिः ॥ ६३॥

मत्तांश्च दश मातङ्गान मुञ्च मां त्वं बृहन्नले ॥ ६४

षष्टिं स्वलङ्कृताः कन्या ग्राममेकं ददामि ते ॥ ६४॥

मुञ्च मां त्वं भृशं दीनं विह्वलं भयकम्पितम् ।
गमिष्यामि पुरं [2]शीघ्रं द्रष्टुं मातरमर्दिताम् ॥ ६५॥

[3]वैशम्पायनः—

एवमादीनि वाक्यानि विलपन्तमचेतनम् ।
प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ ६६॥

---

1. अ-क—भाण्डपरिच्छन्ने ।	ङ—परिच्छन्न ।
2. ख-घ-च-म—षण्ड ।
3. ख—मात्स्यस्य पुत्रो बालोऽहं तेन चास्मि सुपोषितः ।
मातृपार्श्वशयानोऽहम् अस्पृष्टातपवायुमान् ॥
अदृष्टबालयुद्धोऽहं कुतस्ते कुरवः कुतः ।
मातृपार्श्वं गमिष्यामि मुञ्च मां त्वं बृहन्नले ॥
प्रलयार्णवसङ्काशं दृश्यते कौरवं बलम् ॥
स्त्रीणां मध्येऽहमज्ञानाद् वीर्यशौर्याङ्कितां गिरम् ।
उक्तो यौवनगर्वेण को जेतुं शक्नुयात् कुरून् ॥
अमुक्त्वा मां यदि नयेर् मरिष्यामि तवाग्रतः ॥ [अधिकः पाठः]

अथैनमब्रवीन् पार्थो भयार्तं नष्टचेतसम् ॥ ६७

अर्जुनः—

[1]संयच्छामि हयान् यस्य न स भीतः पलायति ॥ ६७॥

यदि नोत्सहसे योद्धुं शत्रुभिश्शत्रुकर्शन ।
एहि मे त्वं हयान् यच्छ युध्यमानस्य शत्रुभिः ॥ ६८॥

प्रयाह्येतद्रथानीकं मद्बाहुपरिरक्षितः ।
अप्रधृष्यतमं घोरं गुप्तं घोरैर्महारथैः ॥ ६९॥

मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप ।
अहं तैः कुरुभिर्योत्स्ये प्रत्यानेष्यामि ते पशून् ॥ ७०॥

प्रविशैतद्रथानीकम् अप्रधृष्यं दुरासदम् ।
यन्ता भूस्त्वं नरश्रेष्ठ योत्स्येऽहं कुरुभिस्सह ॥ ७१॥

---

1. ख—अहं योत्स्यामि कौरव्यैर् हयान् संयच्छ मेति माम् ।
आददानः किमर्थं त्वं पलायनपरोऽभवः ॥
युद्धयस्व कौरवैस्सार्धं विजयस्ते भविष्यति ॥
यस्य यन्तास्म्यहं युद्धे संयच्छामि हयोत्तमान् ।
राज्ञो वा राजपुत्रस्य तस्य युद्धे जयो ध्रुवम् ॥
सर्वथोत्तर युध्यस्व यन्त्रा साकं मया कुरून् ।
जित्वा महीं यशः प्राप्य भोक्ष्यसे सकलामिमाम् ॥
हतो वा प्राप्स्यसे स्वर्गं न श्रेयस्ते पलायनम् ॥
अद्य सर्वान् कुरूञ्जित्वा यथा जयमवाप्स्यसि ।
यथाऽहं प्रयतिष्येऽत्र सहायोऽत्र मतोऽस्म्यहम् ॥
[अधिकः पाठः]

शूरान् समरचण्डांश्च [1]नेष्यामि यमसादनम् ॥ ७२

वैशम्पायनः—

एवं ब्रुवाणो बीभत्सुर् वैराटिमपराजितः ।
समाश्वास्य भयार्तं तम् उत्तरं भरतर्षभ ॥ ७३

तत एनं विचेष्टन्तम् अकामं भयपीडितम् ।
रथमारोपयामास पार्थः परपुरञ्जयः ॥ ७४

[2]तमारोप्य रथोपस्थे विलपन्तं धनञ्जयः ।
गाण्डीवं [3]पुनरादातुम् उपायात् तां शमीं प्रति ॥ ७५
[4]इत्युत्तरं समाश्वास्य कृत्वा यन्तारमर्जुनः ॥ ७५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ४७ ॥ गोग्रहणपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये ७५॥ श्लोकाः]

---

1. क-ब-ङ-म—नयिष्ये । ख—स्थापयिष्ये यमालये ।
2. अ-च—इदमर्धं नास्ति ।
3. क-ख-ब-ङ-म—धनु ।
4. क-च-म—उत्तरं तं । ख-ब—उत्तरं स ।

## ॥ चतुस्त्रिंशोऽध्यायः ॥

उत्तरेणार्जुनचोदनया शमीमारुह्य धनुरादानम् ॥ १ ॥

वैशम्पायनः—

तं दृष्ट्वा क्लीबरूपेण रथस्थं रथिपुङ्गवम् ।
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ॥ १

द्रोणभीष्मादयश्शूराः कुरूणां रथिसत्तमाः ।
वित्रस्तमनसश्चासन् धनञ्जयकृताद्भयात् ॥ २

तानवेक्ष्य हतोत्साहान् उत्पातानपि चाद्भुतान् ।
गुरुश्शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ॥ ३

द्रोणः—

खराश्च वातास्संवान्ति रूक्षाः परुषनिस्वनाः ।
भस्मवर्षप्रकाशेन तमसा संवृतं नभः ॥ ४

रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः ।
निस्सरन्ति च कोशेभ्यश् शस्त्राणि विविधानि च ॥ ५

शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः ।
हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ॥ ६

यादृशानीह दृश्यन्ते रूपाणि विविधानि च ।

[1]एकैकमेषां पर्याप्तम् अखिलक्षयकारणम् ॥ ७

यत्ता भवन्तस्तिष्ठन्तु युद्धं स्यात् समुपस्थितम् ।
रक्षध्वमपि चात्मानं व्यूहध्वं वाहिनीमपि ॥ ८

वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ॥ ८॥

वैशम्पायनः—

एतावदुक्त्वा वचनं भीष्ममालोक्य चाब्रवीत् ॥ ९

नदीज लङ्केशवनारिकेतुर्
नगाह्वयो नाम नगारिसूनुः ।
गत्या सुरेशः कचिदङ्गनेव
गुरुर्बभाषे वचनं तदानीम् ॥ १०

इत्युक्त्वा संज्ञया द्रोणस् तूष्णीमासीद्विशाम्पते ।
भारद्वाजवचश्श्रुत्वा गाङ्गेयस्संज्ञयाऽब्रवीत् ॥ ११

भीष्मः—

अतीतं चक्रमस्माकं विषयान्तरमागताः ।
अतीतस्समयश्चोक्तो ह्यस्माभिर्यस्सभातले ॥ १२
न भयं शत्रुतः कार्यं शङ्कां त्यज नरर्षभ ॥ १२॥

वैशम्पायनः—

देवव्रतेनैवमुक्ते वचने हितकारिणा ।
[2]दुर्योधनमथालोक्य संज्ञया द्रोण अब्रवीत् ॥ १३॥

---

1. म—इदमर्धं नास्ति।
2. अ-क-घ-ङ-च-म—इदमर्धं नास्ति।

द्रोणः—

एष वीरो महेष्वासस् सर्वशस्त्रभृतां वरः ।
आगतः क्लीबरूपेण पार्थो नास्त्यत्र संशयः ॥ १४॥
[1]एष पार्थो हि विक्रान्तस् सव्यसाची परन्तपः ।
नाजित्वा विनिवर्तेत सर्वानपि मरुद्गणान् ॥ १५॥
क्लेशितश्च वने शूरो वासवेन च शिक्षितः ।
अमर्षवशमापन्नो योत्स्यते नात्र संशयः ॥ १६॥
न ह्यस्य प्रतियोद्धारम् अन्यं पश्यामि कौरवम् ॥ १७

1. ख—ये जेतारो महीपानाम् अमुना कुरवो हताः ।
यस्मिञ्जाते मही कृत्स्ना निर्भरोच्छ्वसिताऽभवत् ॥
येन मे दक्षिणा दत्ता बद्ध्वा द्रुपदमोजसा ।
विद्ध्वा वियद्गतं लक्ष्यं विनिर्जित्य च पार्थिवान् ॥
निर्जिता येन पाञ्चाली पुरा येन स्वयंवरे ।
खाण्डवे येन संतृप्तो वह्निर्जित्वा सुरासुरान् ॥
परिणीता सुभद्रा च येन निर्जित्य यादवान् ।
निर्जितो येन युद्धेन त्रिपुरारिस्स्मरार्दनः ॥
गत्वा त्रिविष्टपं येन जितेन्द्रा दानवा युधि ।
निवातकवचा राजन् दानवानां नृकोविदः ॥
निर्जिताः कालकेयाश्च हिरण्यपुरवासिनः ।
येन त्वं मोक्षितो बद्धश् चित्रसेनेन तद्वने ॥
येन गत्वोत्तरं मेरोर् आनिनाय महद्धनम् ।
याजितो धर्मसूनुश्च नृपान् सर्वान् विजित्य च ॥
यस्मिञ्शौर्यं च वीर्यं च तेजो धैर्यं पराक्रमः ।
औदार्यं चैव गाम्भीर्यं ह्रीश्श्रीर्धर्मो दयाऽऽर्जवम् ॥
एवमादिगुणोपेतस् सोऽयं पार्थो न संशयः । [अधिकः पाठः]

महादेवोपि पार्थेन श्रूयते युद्धतोषितः ॥ १७॥

वैशम्पायनः—

[1]इत्येवंवादिनं द्रोणं कर्णः क्रुद्धोऽभ्यभाषत ॥ १८

कर्णः—

सदा भवानर्जुनस्य गुणानस्मासु कत्थते ।

न चार्जुनः कलापूर्णो मम दुर्योधनस्य वा ॥ १९

दुर्योधनः—

यद्येष पार्थो राधेय कृतं कार्यं महन्मम ।

ज्ञाताः पुनश्चरिष्यन्ति द्वादशान्यांश्च वत्सरान् ॥ २०

अथैष कश्चिदेवान्यः क्लीवरूपेण देवराट् ।

शरैरेनं सुनिशितैः पातयिष्यामि भूतले ॥ २१

वैशम्पायनः—

तस्मिन् वदति तां वाचं धार्तराष्ट्रे परन्तपे ।

भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ॥ २२

तां शमीमभिसङ्क्रम्य पार्थो वैराटिमब्रवीत् ।

सुखसंवर्धितं पित्रा समराणामकोविदम् ॥ २३

अर्जुनः—

एहि भूमिञ्जयारुह्य वैराटे महतीं शमीम् ।

समादिष्टो मया क्षिप्रं धनुर्गाण्डीवमानय ॥ २४

नेमानीष्वसनानीह सोढुं शक्ष्यन्ति मे बलम् ।

1. अ-क-ब-ङ-म—इदमर्धं नास्ति ।

नालं भारं गुरुं [1]भर्तुं कुञ्जरं वा प्रमर्दितुम् ॥ २५

मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ।
नैभिः काममलं कर्तुं कर्म वैजयिकं त्विह ॥ २६

अतिसूक्ष्माणि ह्रस्वानि सर्वाणि च मृदूनि च ।
आयुधानि महाबाहो तवैतानि परन्तप ॥ २७

तस्माद्भूमिञ्जयारोह शमीमेनां पलाशिनीम् ॥ २७॥

अस्यां हि पाण्डुपुत्राणां धनूंषि निहितान्युत ।
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ॥ २८॥
ध्वजाश्शराश्च शूराणां दिव्यानि कवचानि च ॥ २९

अत्र चैव महावीर्यं धनुः पार्थस्य गाण्डिवम् ।
एकं शतसहस्रेण सम्मितं राष्ट्रवर्धनम् ॥ ३०

व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्वायुधमहामात्रं सर्वारिक्षयकारणम् ॥ ३१

सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम् ।
अलं भारं गुरुं [2]वोढुं वारुणं चारुदर्शनम् ॥ ३२

[3]तादृशान्येव सर्वाणि बलवन्ति दृढानि च ।

---

1. म—कर्तुं। क—हर्तुं (ग) हन्तुं। ख—भक्तुं।

2. क—सोढुं कुञ्जरं वा प्रमर्दितुम्॥ ख-घ—सोढुं।

3. क—मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः। [अधिकः पाठः]

[1]प्रधानानि विशिष्टानि दुर्दर्शानि भवन्ति च ॥ ३३

उत्तरः—

शरीरमिव चासक्तं शम्यां शुष्कं पुरातनम् ।
तदहं राजपुत्रस्सन् स्पृशेयं पाणिना कथम् ॥ ३४
न मामेवंविधं कर्म कारयस्व बृहन्नले ।
कथं वा शक्यते कर्तुं बुद्ध्या त्वं मन्यसे कथम् ॥ ३५

वैशम्पायनः—

तमुवाच ततश्शूरः पार्थः परपुरञ्जयः ।
दायादं सर्वमत्स्यानां कुले जातं विशारदम् ॥ ३६

अर्जुनः—

जानामि त्वां महाप्राज्ञ [2]कुले जातं मनस्विनम् ।
कथं नु पापकं कर्म ब्रूयां [3]चाहं परन्तप ॥ ३७
व्यवहार्यश्च राजेन्द्र शुद्धश्चैव भविष्यसि ।
धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते ॥ ३८
दायादं मत्स्यराजस्य [4]शुभ्रं जात्या कुलेन च ।
कथं वा निन्दितं [5]कार्यं कारये त्वां नृपात्मज ॥ ३९

वैशम्पायनः—

एवमुक्तस्स पार्थेन रथात् प्रस्कन्द्य कुण्डली ।

---

1. अ—इदमर्धं नास्ति ।
2. क-ख-घ-म—शुभं जात्या कुलेन च ।
3. क-ख-घ-म—त्वाऽहं ।
4. क-ख-घ-म—कुले जातं मनस्विनम् ।
5. क-ख-घ-म—कर्म ।

आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ ४०

तमन्वशासच्छत्रुघ्नो रथे तिष्ठन् धनञ्जयः ॥ ४०॥

अर्जुनः—

परिवेष्टनमेतेषां सर्वं मुञ्चस्व मा चिरम् ॥ ४१

वैशम्पायनः—

तेषां सन्नहनीयानि परिमुच्य परन्तपः ।

अपश्यत् तत्र गाण्डीवं चतुर्भिरपरैस्सह ॥ ४२

तेषां विमुच्यमानानां धनुषां सूर्यवर्चसाम् ।

विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव ॥ ४३

स तेषां रूपमालोक्य भोगिनामिव जृम्भताम् ।

हृष्टरोमा भयोद्विग्नः प्रवेपिततनुस्तदा ॥ ४४

अर्जुनेन समाश्वस्तः किञ्चिद्धृष्टो नृपात्मजः ॥ ४४॥

[1]तेषां सन्दर्शनाभ्यासं स्पर्शाभ्यासं पुनः पुनः ।

आमील्य पुनरुन्मील्य स्पृष्ट्वा स्पृष्ट्वा चकार सः ॥ ४५॥

सम्यग्घुष्टस्तदाऽऽश्वस्तः क्षणेन समपद्यत ॥ ४६

संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च ।

वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ ४७ ॥ गोग्रहणपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये ४७ श्लोकाः]

---

1अ -क-घ-ङ—अर्धत्रयं नास्ति ।

## ॥ पञ्चत्रिंशोऽध्यायः ॥

पाण्डवकार्मुकाद्यवलोकनविस्मितेनोत्तरकुमारेणार्जुनं प्रति तत्तदायुधवर्णनपूर्वकं तत्तत्स्वामिनां प्रश्नः ॥ १ ॥

उत्तरः—

सारथे किमिदं दिव्यं नागो वा यदि वा धनुः ।
सौवर्णान्यत्र पद्मानि शतपत्राणि भागशः ॥ १
[1]कुशाग्निप्रतितप्तानि भानुमन्ति बृहन्ति च ॥ १॥
बिन्दवश्चात्र सौवर्णा मणिप्रोतास्समन्ततः ।
शशिसूर्यप्रभाः पृष्ठे भान्ति रुक्मपरिष्कृताः ॥ २॥
पुष्पाण्यत्र सुवर्णस्य शतपत्राणि भागशः ॥ ३
विस्मापनीयरूपं च भीमं भीमप्रदर्शनम् ।
नीलोत्पलनिभं कस्य शातकुम्भपरिष्कृतम् ॥ ४
ऋषभा यस्य सौवर्णाः पृष्ठे तिष्ठन्ति शृङ्गिणः ।
तालप्रमाणं कस्येदं मणिरुक्मविभूषितम् ॥ ५
हाटकस्य सुवर्णस्य यस्मिञ्शाखामृगा दश ।
दुरानमं महादीर्घं सुरूपं दुष्प्रधर्षणम् ॥ ६
कस्येदमीदृशं चित्रं धनुस्सर्वे च दंसिताः ॥ ६॥

1. अ—इदमर्धं नास्ति

चन्द्रार्कविमला भासस् सुरूपास्सुप्रदर्शनाः ।
हंसाः [1]पृष्ठाश्रिता यस्य कुशाग्निप्रतिमार्चिषः ॥ ७॥

शार्ङ्गगाण्डीवसदृशं कस्येदं सारथे धनुः ॥ ८

[2]भूषितं काञ्चनवपुर् भाति विद्युद्गणोपमम् ।
नीलोपलिप्तमच्छिद्रं जातरूपमयं धनुः ॥ ९

मत्स्याश्चास्य हिरण्यस्य पृष्ठे तिष्ठन्ति [3]भासिताः ।
शक्रचापोपमं दिव्यं कस्येदं सारथे धनुः ॥ १०

उच्छ्रितं [4]फणिवद्दीर्घं सारवत्त्वाद्दुरानमम् ॥ १०॥

सहस्रगोधास्सौवर्णा द्वीपिनश्च चतुर्दश ।
[5]बर्हिणश्चात्र सौवर्णाश् शतचन्द्रविभूषिताः ॥ ११॥

जाम्बूनदविचित्राङ्गं कस्येदं पञ्चमं धनुः ॥ १२

कस्येमे क्षुरनाराचास् सहस्रं लोम[6]वापिनः ।
[7]प्रक्षिप्तास्तीक्ष्णतुण्डाग्रा उपासङ्गे हिरण्मये ॥ १३

---

1. क-म—पृष्ठे श्रिता । ख-च—पृष्ठे स्थिता ।
2. क-ख-च—चतुर्थं ।
3. ख-ङ-म—दंसिताः ।
4. क—पर्णवद् । ख—फलवद् । म—वर्णवद्दीप्तं ।
5. म—इदमर्धं नास्ति ।
6. म—वाहिनः । ङ—वाजिनः ।
7. ङ—पक्षिणस्तीक्ष्णतुण्डाग्राः कस्येमे रुचिराश्शराः ॥ [अधिकः पाठः]

हारिद्रवर्णाः कस्येमे शिताः पञ्चशतं शराः ।
आशीविषसमस्पर्शा गतौ घाजिह्मगा दृढाः ॥ १४

विपाठाः पृथवः कस्य गृध्रपत्रार्धवाजिताः ।
वराहकर्णास्तीक्ष्णाग्राः कस्येमे रुधिराशशराः ॥ १५

वज्राशनिसमस्पर्शा वैश्वानरशिखार्विषः ।
सुवर्णपुङ्खास्तीक्ष्णाग्राः कस्य सप्तशतं शराः ॥ १६

कस्यायं सायको दीर्घो [1]दिव्ये कोशे च दर्शितः ।
कस्य दण्डो दृढश्लक्ष्णो रुचिरोऽयं प्रकाशते ॥ १७

वैयाघ्रकोशः कस्यायं दिव्यः खड्गो महाप्रभः ।
कस्यायमसि[2]रावापे [3]सिंहशार्दूललक्षणः ॥ १८

कस्यायं निर्मलः खड्गो द्वीपिचर्मनिवासितः ।
नीलोत्पलसवर्णोऽयं कस्य खड्गः पृथुर्महान् ॥ १९

मृगेन्द्र[4]चर्मावसितस् सूक्ष्मधारस्सुनिर्मलः ।
ऋषभाजिनकोशस्तु कस्य खड्गो महानयम् ॥ • २०

यस्यापिधाने दृश्यन्ते सूर्याः पञ्च परिष्कृताः ।

---

1. म—दिव्यो गव्ये कोशेऽभिदंसितः ।
   क-ख-घ—गव्ये कोशे च दंसितः
2. अ—रावापः । च—रायासः । ख—रावासः ।
   घ—रामाति सिंहशार्दूल ।
3. अ-क-ख-ङ-च-म—पञ्च ।
4. क-ङ—चर्मावहितस्तीक्ष्ण । ख-घ-च—चर्मावसितस्तीक्ष्ण ।

[1]कस्यायं [2]निर्मलः खड्गश् शृङ्गत्सरुमनोरमः ॥ २१

निहितः पार्षते कोशे तैलधौतस्समाहितः ।
प्रमाणवर्णयुक्तश्च कस्य खड्गो महानयम् ॥ २२

नैतेन प्रतिविद्धस्सन् जीवेत् कश्चन कुञ्जरः ॥ २२॥

निर्दिशस्व यथामार्गं मया [3]पृष्टा बृहन्नले ।
विस्मयो मे परो जातो दृष्ट्वा सर्वमिदं महत् ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ ४७ ॥ गोग्रहणपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[अस्मिन्नध्याये २३॥ श्लोकाः]

---

1. अ—वैयाघ्रकोशः कस्यायं दिव्यश्शाङ्गो महान् पृथुः ।
यस्यापिधाने दृश्यन्ते शार्दूलाः काञ्चनाश्शुभाः ॥ [अधिकः पाठः]
2. क-ख-घ-च—विपुलः खड्गः श्लक्ष्ण । म—विमलः+हरः ।
3. अ—दृष्टा

## ॥ षट्त्रिंशोऽध्यायः ॥

अर्जुनेनोत्तरं प्रति युधिष्ठिराद्यायुधानां पृथक्पृथङ्निर्देशेन तत्तत्स्वा-कत्वकथनम् ॥ १ ॥

---

[1]अर्जुनः—

यत् त्वया प्रथमं पृष्टं शत्रुसेनाङ्गमर्दनम् ।
[2]पार्थस्यैतद्धनुर्दिव्यं गाण्डीवमिति विश्रुतम् ॥ १

अभेद्यम[3]जरं श्रीमद् दिव्यमच्छेद्यमव्रणम् ।
सर्वायुधमहामात्रं शातकुम्भमयं धनुः ॥ २

एतच्छतसहस्रेण सम्मितं राष्ट्रवर्धनम् ।
देवदानवगन्धर्वैः पूजितं शाश्वतीस्समाः ॥ ३

येन देवासुरान् पार्थस् सर्वान् विषहते रणे ।
एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥ ४

तदनन्तरमेवैतत् प्रजापतिरधारयत् ।
प्रजापतिश्चतुष्षष्टिं शक्रोऽशीतिं च पञ्च च ॥ ५

सोमः पञ्चसहस्राणि तथैव वरुणश्शतम् ॥ ५॥

---

1. ख—वैशम्पायनः—उत्तरेणैवमुक्तस्तु पार्थो वैराटिमब्रवीत् ।
मृद्व्या प्रत्याययन् वाचा भीतं शङ्कावशं गतम् ॥
[अधिकः पाठः]

2. ङ—श्लोकद्वयं नास्ति । 3. क—जयं । च—मयं ।

तस्माच्च वरुणादग्निः प्रेम्णा प्राहृत्य तच्छुभम् ।
अग्निना प्रातिभाव्येन दत्तं पार्थाय गाण्डिवम् ॥ ६॥
पार्थः पञ्च च षष्टिं च कौन्तेयो धारयिष्यति ।
एवंवीर्यं महावेगम् एतच्च धनुरुत्तमम् ॥ ७॥
नीलोत्पलनिभं राज्ञः कौरव्यस्य महात्मनः ।
बिन्दव[1]श्चास्य सौवर्णाः पृष्ठे साधु नियोजिताः ॥ ८॥
[2]मिश्रकं भीमसेनस्य जातरूप[3]ग्रहं दृढम् ॥ ९

सहस्रगोधास्सौवर्णा द्वीपिनश्च चतुर्दश ।
ऋषभा यस्य सौवर्णाः पृष्ठे तिष्ठन्ति शृङ्गिणः ॥ १०

येन [4]भीमो दिशं प्राचीम् अजैषीच्च परन्तपः ।
पृष्ठे विभक्ताश्शोभन्ते कुशाग्निप्रतिदीपिताः ॥ ११

पूजितं सुरमर्त्येषु प्रथितं धनुरुत्तमम् ।
तालप्रमाणं भीमस्य मणिरुक्मविभूषितम् ॥ १२

दुरानमं महद्दीर्घं सुरूपं दुष्प्रधर्षणम् ।
बर्हिणश्चात्र सौवर्णाश् शतचन्द्रार्कभूषणाः ॥ १३

नकुलस्य धनुस्त्वेतन्माद्रीपुत्रस्य धीमतः ।

---

1. क-च-म—श्चात्र । 2. ब-च—मिश्रितं ।
3. ख-घ-ङ-म—मयं ।
4. क-ख-ब-म—पार्थोऽजयत् कृत्स्नां दिशं प्राचीं ।

[1]एतेन सदृशं चित्रं धनुश्चैतद्यवीयसः ॥ १४
हारिद्रवर्णं राज्ञश्च कौरव्यस्य महात्मनः ॥ १४॥
विपाठा भीमसेनस्य गिरीणामपि दारणाः ।
सुप्रभास्सुमहाकायास् तीक्ष्णाग्रास्सुकृता दृढाः ॥ १५॥
भीमेन प्रहिता ह्येते वारणानां निवारणाः ॥ १६
सुवर्णदण्डरुचिराः कालदण्डोपमाऽशुभाः ।
नकुलस्य शरा ह्येते वज्राशनिसमप्रभाः ॥ १७
यांस्तु त्वं पृच्छसे दीप्तान् समधारान् समाहितान् ।
वराहकर्णास्तीक्ष्णाग्रास् सहदेवस्य ते शराः ॥ १८
यस्त्वयं सायको [2]दीर्घो गव्ये कोशे च दंसितः ।
पार्थस्यास्त्रमिदं [3]दिव्यं सर्वभारसहं महत् ॥ १९
यस्त्वयं निर्मलः खड्गो द्वीपिचर्मणि दंसितः ।
राज्ञो युधिष्ठिरस्यायं कुन्तीपुत्रस्य धीमतः ॥ २०
वैयाघ्रकोशो भीमस्य पञ्चशार्दूललक्षणः ।
वारणानां सुदृप्तानां शिक्षितस्स्कन्धशातने ॥ २१
नीलोत्पलसवर्णाभः खड्गः पार्थस्य निर्मलः ।
मृगेन्द्रचर्मपिहितस् तीक्ष्णधारस्समाहितः ॥ २२

1. क—अन्यत्तु सहदेवस्य धनुश्श्रेष्ठं महौजसः । [इति पाठान्तरम्]
2. क-ख-च-म—दिव्यो ।　　3. ङ-च-म—घोरं ।

दर्शनीयस्सुतीक्ष्णाग्रः कुन्तीपुत्रस्य धीमतः ।
अर्जुनस्यैष निस्त्रिंशः परसैन्याङ्गदूषणः ॥ २३

यस्त्वयं पार्षते कोशे प्रक्षिप्तो रुचिरत्सरुः ।
नकुलस्यैष निस्त्रिंशो वैश्वानरसमप्रभः ॥ २४

यस्त्वयं पिङ्गलः खड्गश् चित्रो मणिमयत्सरुः ।
सहदेवस्य खड्गोऽयं भारसाहोऽतिदंसितः ॥ २५

भीमस्यायं महादण्डस् सर्वामित्रविनाशनः ॥ २५॥

वैशम्पायनः—

भेदतो ह्यर्जुनस्तूर्णं कथयामास तत्त्वतः ।
आयुधानि कलापांश्च निस्त्रिंशांश्चातुलप्रभान् ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां

विराटपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ ४७ ॥ गोग्रहणपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[अस्मिन्नध्याये २६॥ श्लोकाः]

## ॥ सप्तत्रिंशोऽध्यायः ॥

अर्जुनेनोत्तरं प्रति स्वस्यार्जुनत्वकथनपूर्वकं कङ्कादीनां युधिष्ठिरादित्व-कथनम् ॥ १ ॥ तत्प्रत्ययार्थं स्वनामदशककथनपूर्वकं तन्निर्वचनम् ॥ २ ॥

वैशम्पायनः—

एतस्मिन्नन्तरे पार्थं न मूढात्मा व्यजानत ।
विराटपुत्रः प्रमुखे पप्रच्छ पुनरेव तम् ॥ १

उत्तरः—

सुवर्णरुचिराण्येषाम् आयुधानि महात्मनाम् ।
रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम् ॥ २

क नु ते पाण्डवाश्शूरास् सङ्ग्रामेष्वपराजिताः ।
येषामिमानि [1]दीप्तानि श्रिया दीप्यन्ति भान्ति च ॥ ३

कस्मिन् वसन्ति ते देशे धर्मज्ञा बन्धुवत्सलाः ।
क धर्मराजः कौरव्यो धर्मपुत्रो युधिष्ठिरः ॥ ४

[2]भीमसेनार्जुनौ चैव सर्वे ते मम मातुलाः ।
नकुलस्सहदेवो वा सर्वास्त्रकुशलौ रणे ॥ ५

---

1. क-म—दिव्यानि।
2. ख—धर्मशीलश्च धर्मात्मा धर्मवान् धर्मविद् सुधीः।
धर्माध्यक्षो धर्मव्रतो धर्मज्ञो धर्ममूर्तिमान् ॥
धर्मनिष्ठो धर्मकर्ता धर्मगोप्ता सुधर्मकृत्।
सत्यार्जवक्षमाधारो घृणी धर्मपरायणः ॥ [अधिकः पाठः]

सर्वे एव [1]महावीरास् सर्वामित्रविनाशनाः ।
राज्यमक्षैः पराजित्य नश्श्रूयन्ते वनं गताः ॥ ६

द्रौपदी चापि पाञ्चाली स्त्रीरत्नमिति विश्रुता ।
जिता चाक्षैस्तदा कृष्णा तानेवान्वगमद्वने ॥ ७

उत्सृज्य राज्यं धर्म्ये ते नश्श्रूयन्ते वनं गताः ॥ ७॥

पाण्डवान् यदि जानीषे क नु ते धर्मचारिणः ।
[2]क चाद्य निवसन्त्येते सत्यं ब्रूहि बृहन्नले ॥ ८॥

[3]वैशम्पायनः—

ततः प्रहस्य बीभत्सुः कौन्तेयश्श्वेतवाहनः ।
उवाच राजपुत्रं तम् उत्तरं श्रृणु मे वचः ॥ ९॥

अर्जुनः—

अहमस्म्यर्जुनो नाम्ना कङ्को नाम युधिष्ठिरः ।
भीमसेनस्तु वलः पितुस्ते परिचारकः ॥ १०॥

अश्वबन्धस्तु नकुलस् सहदेवस्तु गोपतिः ।

---

1. ङ—महावीर्याः । क-ख-घ-म—महात्मानः ।
2. क-ङ-म—क वाद्य निवसन्तीति । ख—क तेऽद्य निवसन्तीति ।
 घ—क वा ते निवसन्त्यद्य ।
3. ख—किमर्थमागतान्यत्र शस्त्राणि महात्मनाम् ।
 कथं ज्ञातानि भवता तथा मे ब्रूहि शोभने ॥
 [अधिकः पाठः]

सैरन्ध्रीं द्रौपदीं विद्धि यदर्थे कीचको हतः ॥ ११॥
भीमसेनेन दुर्वृत्तस् सह भ्रातृभिराहवे ॥ १२

[1]उत्तरः—

दश पार्थस्य नामानि श्रूयन्ते मे कथासु च ।
[2]ब्रूहि त्वं यदि जानीषे श्रद्दधेयं वचस्तव ॥ १३

अर्जुनः—

[3]अहं तर्हि तवाचक्षे दश नामानि यानि मे ।
ईशानो विदधे देवस् त्रिदिवस्येश्वरो दिवि ॥ १४
अर्जुनः फल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बीभत्सुर्विजयः पार्थस् सव्यसाची धनञ्जयः ॥ १५
एतानि मम नामानि स्थापितानि सुरोत्तमैः ॥ १५॥

उत्तरः—

गुणतो दश नामानि समवेतानि पाण्डवे ।
चरन्ति लोके ख्यातानि विदितानि ममानघ ॥ १६॥
केनासि विजयो नाम केनासि श्वेतवाहनः ।
सव्यसाची तु केनासि [4]जिष्णुर्बीभत्सुरेव च ॥ १७॥

---

1. ख—श्रुत्वैतद्वचनं जिष्णोर् विस्मयस्फारितेक्षणः ।
पश्यन्ननिमिषः पार्थं शनैर्वाचमुवाच ह ॥ [अधिकः पाठः]
2. क-ख-ङ-म—ब्रूयास्त्वं ।
3. क-च—हन्त । ख—अहं तात ।
4. क-च-ङ—कृष्णो ।

अर्जुनः फल्गुनः [1]पार्थः किरीटी श्वेतवाहनः ।
धनञ्जयश्च केनासि शीघ्रं ब्रूहि बृहन्नले ॥ १८॥
श्रुता मे तस्य वीरस्य केवला नामहेतवः ॥ १९

[2]अर्जुनः—

सर्वाञ्जनपदाञ्जित्वा धनान्याच्छिद्य सर्वशः ।
मध्ये धनस्य तिष्ठन्तं [3]तेनाहुर्मां धनञ्जयम् ॥ २०
अभिप्रयामि सङ्ग्रामे यदाऽहं युद्धदुर्मदान् ।
अजित्वा न निवर्तेयं तेन मां विजयं विदुः ॥ २१
श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति मे हयाः ।
शत्रुभिर्युध्यमानस्य तेनाहं श्वेतवाहनः ॥ २२
किरीटं सूर्यसङ्काशं भ्राजते मे शिरोगतम् ।
रणमध्ये रथस्थस्य सूर्यपावकसन्निभम् ॥ २३
अच्छेद्यं रुचिरं चित्रं जाम्बूनदपरिष्कृतम् ।
इन्द्रदत्तमनाहार्यं तेनाहुर्मां किरीटिनम् ॥ २४
न कुर्यां कर्म बीभत्सं युध्यमानः कथञ्चन ।

1. क-ङ-च—जिष्णुः पार्थः केनासि सारथे ।
ख—कृष्णः पार्थः केनासि सारथे ॥
घ-म—पार्थः किरीटी केन सारथे ।
2. ख—इतस्ततो परत्वे? तन्मनो मे चञ्चलं त्वयि ।
अर्जुनो वा भवाश्चेति वद शीघ्रं बृहन्नले ॥ [अधिकः पाठः]
3. ख—तन्मामाहुः । घ-ङ—तस्मादाहुः । म—तं मामाहुः ।

तेन देवमनुष्येषु बीभत्सुरिति मां विदुः ॥ २५

उभौ मे तुल्यकर्माणौ गाण्डीवस्य विकर्षणे ।
भुजौ मे भवतस्सङ्ख्ये परसैन्य[1]विनाशनौ ॥ २६

तयोस्सव्योऽधिकस्तस्मात् सव्यसाचीति मां विदुः ॥ २६॥

पृथिव्यां सागरान्तायां वर्णो मे दुर्लभस्समः ।
शुद्धत्वाद्रूपवत्त्वाच्च तेन मामर्जुनं विदुः ॥ २७॥

उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यामहं दिवा ।
जातो हिमवतः पृष्ठे तेन मां फल्गुनं विदुः ॥ २८॥

यो ममाङ्गे व्रणं कुर्या[2]द्भ्रातुर्ज्येष्ठस्य पश्यतः ।
युधिष्ठिरस्य रुधिरं दर्शयेद्वा कदाचन ॥ २९॥

पराभवमहं तस्य कुले कुर्यां न संशयः ॥ ३०

योत्स्यामि यैरहं [3]घोरैर् न मे तेभ्यः पराभवः ।
तेन देवमनुष्येषु जिष्णुर्नामास्मि विश्रुतः ॥ ३१

माता मम पृथा नाम तेन मां पार्थमब्रुवन् ॥ ३१॥

देवदानवगन्धर्वपिशाचोरगराक्षसान् ।
अहं पुरा रणे जित्वा खाण्डवेऽग्निमतर्पयम् ॥ ३२॥

---

1. क-ख—विनाशने। अ-ङ-च—विनाशिनौ
2. क-ख-घ—म्मम ज्ये।
3. क-म—सङ्ख्ये। ख-ब—सवैंर्।

हुताशनं तर्पयित्वा सहितश्शार्ङ्गधन्वना ।
त्रिविष्टपगतौ दृष्ट्वा पितामहमहेश्वरौ ॥ ३३॥

मूर्च्छया पतितं भूमावागतौ देवसत्तमौ ।
दृष्ट्वा तौ वरदौ देवौ संज्ञां लब्ध्वोत्थितः पुनः ॥ ३४॥

मूर्ध्नाऽभिप्रणतं भूमौ तौ तदा वरदौ वरौ ।
कृष्णेत्येकादशं नाम प्रीत्या मे तत्र चक्रतुः ॥ ३५॥

तुष्टौ च मम वीर्येण कर्मणा चाभि[1]राधितौ ।
सर्वदेवैः परिवृतौ भूयो मां स्वयमूचतुः ॥ ३६॥

वरं [2]तात वृणीष्वेति यं प्रार्थयासि पाण्डव ॥ ३७

ततोऽहमस्त्राण्यलभं दिव्यानि च दृढानि च ।
ब्राह्मं पाशुपतं चैव स्थूणाकर्णं च दुर्जयम् ॥ ३८

ऐन्द्रं वारुणमाग्नेयं वायव्यमथ वैष्णवम् ॥ ३८॥

ततोऽहमजयं भूयो रथेनैन्द्रेण दुर्जयान् ।
मातलिं सारथिं कृत्वा निवातकवचान् रणे ॥ ३९॥

अवध्यकवचान् देवैर् वरदत्तान् महासुरान् ॥ ४०

तिस्रः कोटीर्दानवानां संयुगेष्वनिवर्तिनाम् ।
एको निर्जित्य सङ्ग्रामे भूयो देवानतोषयम् ॥ ४१

---

1. क—तोषितौ। ब—रक्षितौ।
2. अ-ङ-च—तत। ब—दातुं।

ततो मे भगवानिन्द्रः किरीटमददात् स्वयम् ।
देवाश्च शङ्खमददुश् शत्रुसैन्यानिवारणम् ॥ ४२
अहं पारे समुद्रस्य हिरण्यपुरवासिनाम् ।
हत्वा षष्टिं सहस्राणि जयं सम्प्राप्तवा[1]नपि ॥ ४३
असम्भ्रान्तो रथे तिष्ठन् सहस्रेषु शतेषु च ।
शत्रुमध्ये दुराधर्षो न [2]च मुह्ये कथञ्चन ॥ ४४
अहं गन्धर्वराजेन ह्रियमाणं सुयोधनम् ।
भ्रातृभिस्सहितं तात गन्धर्वैस्समरे जितम् ॥ ४५
चतुर्दश सहस्राणि हत्वा चैनममोचयम् ॥ ४५॥
[3]अद्य पश्य महाबाहो मम वीर्यं सुदुस्सहम् ।
मा भैषीर्गतसन्त्रासः कुरूनेतान् समागतान् ॥ ४६॥
सुयोधनस्य मिषतः कर्णस्य च कृपस्य च ।
पितामहस्य भीष्मस्य द्रौणेर्द्रोणस्य च स्वयम् ॥ ४७॥
सर्वानेव कुरूञ्जित्वा प्रत्यानेष्यामि ते पशून् ॥ ४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ४७ ॥ गोग्रहणपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ४८ श्लोकाः]

---

1. क-ख-च—नहम् ।
2. क-ख-ङ-च-म—मुह्यन्ति च मे दिशः । ब—मुह्यति च मे दिशम् ।
3. म—इदमर्धं नास्ति ।

## ॥ अष्टात्रिंशोऽध्यायः ॥

उत्तरेण बृहन्नलाया अर्जुनत्वविज्ञानेन तं प्रति अज्ञानमूलकभूतपूर्वस्वापराधक्षमापनम् ॥१॥ अर्जुनेनोत्तरं प्रति स्वस्य क्लैब्यप्राप्तिहेतुकथनम् ॥ २ ॥ तथोत्तरस्य सारथीकरणपूर्वकं रथारोहणेन रणायाभियानम् ॥ ३ ॥

वैशम्पायनः—

ततः पार्थं च वैराटिः प्राञ्जलिस्त्वभ्यवादयत् ॥ ॥

उत्तरः—

अहं भूमिञ्जयो नाम्ना प्रणतोऽस्मि धनञ्जय ॥ १

दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनञ्जय ।
लोहिताक्ष महाबाहो नागराज[1]वरोपम ॥ २

यदज्ञानादवोचं त्वां प्रमादेन नरोत्तम ।
अकृत्वा हृदये सर्वं क्षन्तुमर्हसि तन्मम ॥ ३

यत्तु त्वया कृतं कर्म विचित्रं वै सुदुष्करम् ।
अतो भयं व्यपेतं मे प्रीतिश्च परमा त्वयि ॥ ४

दासोऽहं ते भविष्यामि पश्य मामनुकम्पया ॥ ४॥

या प्रतिज्ञा कृता पूर्वं तव सारथ्य[2]कर्मणि ।
मनस्स्वास्थ्यं च मे जातं [3]जातं भाग्यं च मे महत् ॥ ५॥

1. क-ङ—करोपम। 2. क-ख-घ-च-म—कारणात्।
3. अ—जातु। ङ—जातं भाग्यं महोदयम्।

आस्थाय विपुलं वीर रथं सारथिना मया ।
दुर्योधनं च जित्वाऽऽजौ निवर्तय पशून् मम ॥ ६॥

अर्जुनः—
प्रीतोऽस्मि राजपुत्राद्य न भयं विद्यते तव ।
सर्वान् नुदामि ते शत्रून् रणे रण[1]कृतां वर ॥ ७॥

स्वस्थो भव महाबुद्धे पश्य मां शत्रुभिस्सह ।
युध्यमानं विमर्देऽस्मिन् कुर्वाणं भैरवं स्वनम् ॥ ८॥

गाण्डीवं देवदत्तं च शरान् कनकभूषितान् ।
एतान् सर्वानुपासङ्गान् क्षिप्रं बध्नीहि मे रथे ॥ ९॥
एतं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ॥ १०

अहं वै कुरुभि[2]र्योत्स्ये मोक्षयिष्यामि ते पशून् ।
तोषयिष्यामि राजानं प्रवेक्ष्यामि पुरं पुनः ॥ ११

सङ्कल्पागाधपरिघं बाहुप्राकारतोरणम् ।
त्रिदण्ड[3]स्थूणसम्बाधं नैकध्वजसमाकुलम् ॥ १२
[4]ज्याक्षेपणक्रीडनकं नेमीनिनददुन्दुभि ।

---

1. क-ख-घ-म—विशारद ।
2. क-घ-म—योत्स्याम्यवजेष्यामि । ख—योत्स्याम्यपचेष्यामि ।
3. ख—तूण । घ—गुण ।
4. म—ज्याक्षेपणं क्रोधकरं । च—क्रोधमकरम् । क—ज्याक्षेपणक्रोधनकं
क—घोरतरं । ख—णी रोधकरं ।
घ—क्रोधकरं नेमिदुन्दुभिनादितम् ।

शरजालवितानाढ्यम् आस्वेडितमहास्वनम् ॥ १२

नगरं ते मया गुप्तं रथोपस्थं भविष्यति ॥ १३॥

अधिष्ठितो मया सङ्ख्ये रथो गाण्डीवधन्विना ।

अजय्यश्शत्रुसैन्यानां वैराटे व्येतु ते भयम् ॥ १४॥

उत्तरः—

विभेमि नाहमेतेभ्यो जानामि त्वां स्थिरं युधि ।

केशवेनापि सङ्ग्रामे साक्षादिन्द्रेण वा समम् ॥ १५॥

[1]इदं तु चिन्तयन्नेव परिमुह्यामि केवलम् ।

निश्चयं नाधिगच्छामि नावगच्छामि किञ्चन ॥ १६॥

एवं [2]युक्ताङ्गरूपस्य लक्षणैरुदितस्य च ।

केन कर्मविपाकेन क्लीवत्वं समुपागतम् ॥ १७॥

मन्ये त्वां क्लीबरूपेण चरन्तं शूलपाणिनम् ।

[3]गन्धर्वराजप्रतिमं देवं वाऽपि शतक्रतुम् ॥ १८॥

अर्जुनः—

भ्रातुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम् ।

चरामि ब्रह्मचर्यं वै सत्यमेतद्ब्रवीमि ते ॥ १९॥

---

1. ख—बहुना किं प्रलापेन शृणु मे परमं वचः ।
नाहं बिभेमि कौन्तेय साक्षादपि शतक्रतोः ॥
यमपाशिकुबेरेभ्यो द्रोणभीष्मशतादपि ॥ [अधिकः पाठः]

2. म—नीराङ्ग । क-ख-ङ—वीरा । च—वराङ्ग ।

3. अ-म—इदमर्धं नास्ति ।

नास्मि क्लीबो महाबाहो परवान् धर्मसंयुतः ।
[1]उर्वशीशापसम्भूतं क्लैब्यं मां समुपस्थितम् ॥ २०॥

[2]पुराऽहमाज्ञया भ्रातुर् ज्येष्ठस्यास्मि सुरालयम् ।
प्राप्तवानुर्वशी दृष्टा सुधर्मायां मया तदा ॥ २१॥

नृत्यन्तीं परमं रूपं बिभ्रतीं वज्रिसंनिधौ ।
अपश्यं तामनिमिषं कूटस्थामन्वयस्य मे ॥ २२॥

रात्रौ समागता मह्यं शयानं रन्तुमिच्छया ।
अहं तामभिवाद्यैव मातृसत्कारमाचरम् ॥ २३॥

सा च मामशपत् क्रुद्धा शिखण्डी त्वं भवेरिति ।
श्रुत्वा तमिन्द्रो मामाह मा भैस्त्वं पार्थ षण्डता ॥ २४॥

उपकारो भवेत् तुभ्यम् अज्ञातवसतौ पुरा ।
इतीन्द्रो मामनुग्राह्य ततः प्रेषितवान् वृषा ॥ २५॥

तदिदं समनुप्राप्तं व्रतं तीर्णं मयाऽनघ ।
समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज ॥ २६॥

उत्तरः—

परमोऽनुग्रहो मेऽद्य यत् प्रतर्को न मे वृथा ।
न हीदृशाः क्लीबरूपा भवन्तीह नरोत्तमाः ॥ २७॥

सहायवानस्मि रणे युद्ध्येयममरैरपि ।
साध्वसं तत् प्रणष्टं मे किं करोमि प्रशाधि माम् ॥ २८॥

अहं ते सङ्ग्रहीष्यामि हयाञ्शत्रूनथारुजः ।
शिक्षितो ह्यस्मि सारथ्ये निष्ठितः पुरुषर्षभ ॥ २९॥

---

1. म—इदमर्धं नास्ति।
2. अ-क-ख-ङ-च-म—कोशेषु इत आरभ्य सार्धश्लोकपञ्चकं न दृश्यते।

दारुको वासुदेवस्य यथा शक्रस्य मातलिः ।
तथा मां विद्धि सारथ्ये शिक्षितं नरपुङ्गव ॥ ३०॥
अश्वा ह्येते महाबाहो [1]तदैवाहवदुर्जयाः ।
योग्या रथवरे युक्ताः प्राणवन्तो जितश्रमाः ॥ ३१॥
यस्य यातेन पश्यन्ति भूमौ प्राप्तं पदं पदम् ।
दक्षिणां यो धुरं वोढा सुग्रीवेण समो हयः ॥ ३२॥
योऽयं धुरं धुर्यवरो वामां वहति शोभनः ।
तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् ॥ ३३॥
योऽयं वहति वै पार्ष्णिं दक्षिणामश्वितोद्यमः ।
बलाहकाद[2]पि मतस् तेजसा वीर्यवत्तरः ॥ ३४॥
योऽयं काञ्चनसन्नाहो वामं वहति शोभनः ।
धुर्यं सैन्यस्य तं मन्ये जवेन बलवत्तरम् ॥ ३५॥
त्वामेवायं रथो वोढुं सङ्ग्रामेऽर्हति धन्विनम् ।
त्वं चेमं रथमास्थाय योद्धुमर्हो मतो मम ॥ ३६॥
सर्वशत्रुभिरायातैर् देवराज इवासुरैः ॥ ३७

वैशम्पायनः—

ततो रथादवस्कन्द्य वीर्यवानरिमर्दनः ।
प्रणम्य देवान् गाण्डीवम् आदाय रुरुचे श्रिया ॥ ३८

1. क-ख-ग-च-म—तवैवाहवदुर्जयाः ।
2. अ—पिततस् । ख-च – भिमतम् ; ग—नवमस् तेजसा वीर्यसत्तमः ।

[1]ततो विमुच्य बाहुभ्यां शङ्खचूडानि पाण्डवः ।
तौ च दुन्दुभिसन्नादौ प्रतिबद्ध्य तलावुभौ ॥ ३९
इन्द्रदत्ते च ते दिव्ये उद्धृत्यामुच्य कुण्डले ।
श्लक्ष्णान् केशान् मृदून् स्निग्धान् श्वेतेनोद्ग्रथ्य वाससा ॥ ४०
अधिज्यं तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः ॥ ४०॥
तस्य विक्षिप्यमाणस्य धनुषोऽभून्महास्वनः ।
यथा शैलस्य महतश् [2]शैलानाक्षिप्य जघ्नुषः ॥ ४१॥
सनिर्घाताऽभवद्भूमिर् दिक्षु वायुर्ववौ भृशम् ।
भ्रान्तद्विजं खमभवत् प्राकम्पितमहाद्रुमम् ॥ ४२॥
तं शब्दं कुरवो राजन् विस्फोटमशनेरिव ।
तार्क्ष्यशब्दमिव श्रुत्वा वित्रेसुर्दीनमानसाः॥ ४३॥
यथेन्द्रो व्याक्षिपद्भीमं विस्फोटमशनेः प्रभुः ।
[3]तथाऽर्जुनो धनुश्श्रेष्ठं बाहुभ्यामाक्षिपद्रथे ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ४७ ॥ गोग्रहणपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये ४४॥ श्लोकाः]

---

1. घ—यथा प्रावृण्महामेघस् सेन्द्रचाप इवार्जुनः । [अधिकः पाठः]
2. क-ख—शैलेनाप्यभिजघ्नुषः । म—महता शैलेनाप्यभिज ।
3. ख-च—महाशनिमहाशब्दसदृशो ज्यास्वनो महान् ।
शत्रून् वीरांश्च संतर्ज्य निग्रहस्थो रणे स्थितः ॥[अधिकः पाठः]

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

अर्जुनेन युद्धप्रस्थानसमये उत्तररथात् सिंहध्वजस्यावरोपणपूर्वकं ध्यानसंनिहितस्य हनुमद्ध्वजस्य रथे स्थापनम् ॥ १ ॥ तथा स्वशङ्खादिशब्दश्रवणविस्तस्योत्तरस्य समाश्वासनपूर्वकं रणायाभियानम् ॥ २ ॥ द्रोणेनार्जुनशङ्खनादादिना तस्यार्जुनत्वनिर्धारणेन दुर्योधनं प्रति तन्निवेदनपूर्वकं दुर्निमित्तप्रदर्शनम् ॥ ३ ॥

वैशम्पायनः—

उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
आयुधं सर्वमादाय ततः प्रायाद्धनञ्जयः ॥ १

ध्वजं च सिंहं मात्स्यस्य भ्रातृणामायुधानि च ।
प्रणिधाय शमीमध्ये प्रयातुमुपचक्रमे ॥ २

ततः काञ्चनलाङ्गूलं ध्वजं वानरलक्षणम् ।
[1]दिव्यं मायामयं युक्तं विहितं विश्वकर्मणा ॥ ३

मनसा चिन्तयानास प्रसादं पावकस्य च ॥ ३॥

स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्यचोदयत् ।
रथे वानरमुच्छ्रित्य गाण्डीवं विक्षिपद्धनुः ॥ ४॥

[2]सपताकं विचित्राङ्गं सोपासङ्गं महारथः ।

---

1. च—दीर्घमायससंयुक्तं । अ—युक्त्वा
2. ख—उत्तस्थावुत्तरस्तावन्मत्वा पुनरिहागतः ।
तं समाश्वास्य बीभत्सुरभियातुं प्रतत्वरे ॥ [अधिकः पाठः]

रथमास्थाय बीभत्सुः कौन्तेयश्श्वेतवाहनः ॥ ५॥

बद्धासिस्सतलत्राणः प्रगृहीतशरासनः ।
ततः प्रायादुदीचीं स कपिप्रवरकेतनः ॥ ६॥

[1]स्वनवन्तं महाशङ्खं देवदत्तं धनञ्जयः ।
शशाङ्करूपं बीभत्सुः प्राध्मापयदरिन्दमः ॥ ७॥
[2]शङ्खशब्दोऽस्य सोऽत्यर्थं श्रूयते कालमेघवत् ॥ ८

तस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
वानरस्य च नादेन रथनेमिस्वनेन च ॥ ९

जङ्गमस्य भयं घोरम् अकरोत् पाकशासनिः ॥ ९॥

शङ्खशब्देन पार्थस्य मुखेनाश्वाः पतन् क्षितौ ।
उत्तरश्चापि सन्त्रस्तो रथोपस्थ उपाविशत् ॥ १०॥

अथाश्वान् रश्मिभिः पार्थस् समुद्यम्य परन्तपः ।
व्यभ्राजत रथोपस्थे भानुर्मेराविवोत्तरे ॥ ११॥

शङ्खशब्देन वित्रस्तं ज्यास्वनेन च मूर्च्छितम् ।

---

1. ख-च—सैन्याभ्याशं स संप्राप्य गृहीत्वा शङ्खमुत्तमम् [अधिकः पाठः]
2. ख—शशाङ्ककुन्दधवलं मुखे निक्षिप्य वासविः ।
उत्क्रमद्गण्डयुगलं सिरालयाचितफालकम् ॥
आयत्तनिम्ननयनं ह्रस्वस्थूलशिरोधरम् ।
अतिश्लिष्टोदरोरस्कं तिर्यगाननशोभितम् ॥
यावत् स्वशक्तिसामग्र्यं त्रैलोक्यं क्षोभयन्निव ।
मरुद्भिर्दशभिश्चैव प्राध्मापयदरिन्दमः ॥ [अधिकः पाठः]

उत्तरं सम्परिष्वज्य समाश्वासयदर्जुनः ॥ १२॥

अर्जुनः—

मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप ।
कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ॥ १३॥

श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च सर्वशः ।
कुञ्जराणां च नदतां व्यूढानीकेषु [1]तिष्ठताम् ॥ १४॥

स त्वं कथमिवानेन शङ्खशब्देन भीषितः ।
[2]विवर्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा ॥ १५॥

उत्तरः—

श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च सर्वशः ।
कुञ्जराणां च [3]निनदा व्यूढानीकेषु तिष्ठताम् ॥ १६॥

नैवंविधाश्शङ्खशब्दाः पुरा जातु मया श्रुताः ।
ध्वजस्य चापि रूपं मे दृष्टपूर्वं न हीदृशम् ॥ १७॥

धनुषश्चैव घोषो यश् श्रुतपूर्वो न मे क्वचित् ॥ १८

अस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
रथनेमि[4]निनादेन मनो मे मुह्यते भृशम् ॥ १९

व्याकुलाश्च दिशस्सर्वा हृदयं व्यथतीव च ।
ध्वजेन पिहितास्सर्वा दिशो न प्रतिभान्ति मे ॥ २०

---

1. ख-च—नित्यशः। घ—पश्यता।
2. क-च-म—विषण्ण।
3. क-ङ-म—नदतां। 4. ख-घ-च-म—प्रणादेन।

गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ ॥ २०॥

वैशम्पायनः—

पुनर्ध्वजं पुनश्शङ्खं धनुश्चैव पुनः पुनः ।
सम्मूढचेता वैराटिर् अर्जुनं समुदैक्षत ॥ २१॥
[1]ततोऽर्जुनोऽब्रवीद्वाक्यं राजपुत्रं परन्तपः ॥ २२

अर्जुनः—

स्थिरो भव महाबाहो संज्ञां चात्मानमानय ।
एकान्ते रथमास्थाय पद्भ्यां त्वमवपीड्य च ॥ २३
दृढं रश्मींश्च संयच्छ शङ्खं ध्मास्याम्यहं पुनः ॥ २३॥

वैशम्पायनः—

एवमुक्त्वा महाबाहुस् सव्यसाची परन्तपः ।
प्रदध्मौ च महाशङ्खं देवदत्तमनुत्तमम् ॥ २४॥
ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयत् ॥ २५
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।
गाण्डीवस्य च शब्देन पृथिवी समकम्पत ॥ २६

भारद्वाजस्ततो द्रोणस् सर्वशस्त्रभृतां वरः ।
राजानं चाह सम्प्रेक्ष्य दुर्योधनमरिन्दमः ॥ २७

द्रोणः—

यथा रथस्य निर्घोषो यथा शङ्ख उदीर्यते ।
कम्पते च यथा भूमिर् नैषोऽन्यस्सव्यसाचिनः ॥ २८

1. म—इदमर्धं नास्ति।

औत्पातिकमिदं राजन् निमित्तं भवतीह नः ।
न हि पश्यामि विजयं सैन्येऽस्माकं परन्तप ॥ २९

शस्त्राणि न प्रकाशन्ते न प्रहृष्यन्ति वाहनाः ।
अग्नयश्च न भासन्ते सुसमिद्धाश्च शोभनाः ॥ ३०

प्रत्यादित्यं च नस्सर्वे मृगा घोरा नदन्ति च ।
शकुनाश्चापसव्याश्च वेदयन्ति महद्भयम् ॥ ३१

गोमायुरेष सैन्यानां रुदन् मध्येऽनुधावति ।
चाषा नदन्ति चाकाशे वेदयन्तो महद्भयम् ॥ ३२

भवतां चैव रोमाणि [1]सम्प्रहृष्टानि लक्षये ।
अनुष्णाङ्गाश्च संस्विन्ना जृम्भन्ते चाप्यभीक्ष्णशः ॥ ३३

[2]विष्टम्भयन्ति मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ।
सदा मूत्रं पुरीषं च उत्सृजन्ति पुनः पुनः ॥ ३४

[3]लोहितार्द्रा च पृथिवी दिशस्सर्वाः प्रधूपिताः ।
न च सूर्यः प्रतपति महद्वेदयते भयम् ॥ ३५

हस्तिनश्चापि वित्रस्ता योधाश्चापि वितत्रसुः ।
पराभूता च नस्सेना न कश्चिद्योद्धुमिच्छति ॥ ३६

---

1. म—संहृष्टान्युपलक्षये । क—संहृष्टानीव ।
ख—संहृष्टान्येव । घ—संहृष्टानि च ।
2. म—विष्टम्भन्तीव । क—विष्टम्भन्ति न । ख—विष्टम्भन्तीह ।
च—विष्कम्पन्ति च ।
3. क—मृगाश्च पक्षिणश्चैव सव्यमेव पतन्ति नः । [अधिकः पाठः]

विषण्णमुखभूयिष्ठास् सर्वे योधा विचेतसः ।
दिशं ते दक्षिणां सर्वे विप्रेक्षन्ते पुनः पुनः ॥ ३७
मृगाश्च पक्षिणश्चैव [1]सव्यमेव पतन्ति नः ।
वादित्रोद्घुष्टघोषाश्च न च गाढं स्वनन्ति नः ॥ ३८
ध्वजाग्रेषु निलीयन्ते वायसास्तन्न शोभनम् ॥ ३८॥
यथा मेघस्य निनदो गम्भीरस्तूर्णमायतः ।
श्रूयते रथनिर्घोषो नायमन्यो धनञ्जयात् ॥ ३९॥
अश्वानां स्वनतां शब्दो वहतां पाकशासनिम् ।
वानरश्च ध्वजो दिव्यो निस्सङ्गं धूयते महान् ॥ ४०॥
शङ्खशब्देन पार्थस्य कर्णौ मे बधिरीकृतौ ।
सर्वसैन्यं च वित्रस्तं नायमन्यो धनञ्जयात् ॥ ४१॥
राजानमग्रतः कृत्वा दुर्योधनमरिन्दमम् ।
गाः प्रस्थाप्य च तिष्ठामो व्यूढानीकाः प्रहारिणः ॥ ४२॥
प्रविभज्य त्रिधा सेनां समुच्छ्रित्य ध्वजानपि ।
दिक्षु गुल्मा निवेश्यन्तां यत्ता योत्स्यामहेऽर्जुनम् ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ १७ ॥ गोग्रहणपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[अस्मिन्नध्याये ४३॥ श्लोकाः]

---

1. अ—सर्वमेव वदन्ति नः ।
ख-ङ—सर्व एव पतन्ति नः । घ—सव्य एव पतन्ति नः ।

## ॥ चत्वारिंशोऽध्यायः ॥

द्रोणवचनादर्जुनस्यार्जुनत्वावधारणेन विषादात् तूष्णीम्भूतेषु स्वीयेषु दुर्योधनेन द्रोणानादरपूर्वकं तान् प्रति समरप्रोत्साहनम् ॥ १ ॥

वैशम्पायनः—

ततो दुर्योधनो राजा समरे भीष्ममब्रवीत् ।
द्रोणं च [1]रणशार्दूलं कृपं च सुमहाबलम् ॥ १

दुर्योधनः—

उक्तोऽयमर्थ आचार्य मया कर्णेन चासकृत् ।
पुनरेव च वक्ष्यामि न हि तृप्यामि तद्ब्रुवन् ॥ २

पराजितैर्विवस्तव्यं तैश्च द्वादशवत्सरान् ।
वने जनपदेऽज्ञातैर् [2]एक एष पणो हि नः ॥ ३

एषां न तावन्निर्वृत्तो वत्सरस्तु त्रयोदशः ।
अज्ञातवासे बीभत्सुर् अथास्माभिः परिश्रुतः ॥ ४

अनिर्वृत्ते तु निर्वासे यदि बीभत्सुरागतः ।
पुनर्द्वादशवर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ५

लोभाद्वा ते न [3]विन्देयुर् अस्मान् वा मोह आविशत् ।

---

1. क-ख-म—रथशार्दूलं कृपं च सुमहारथम्। ख-च—रथशार्दूलं।
2. क-ख-च—एष एव। ङ—एक एव।
3. ख-ग-ङ-च-म—जानीयुर्।

हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ६

अर्थानां हि पुनर्द्वैधे नित्यं भवति संशयः ।
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति चान्यथा ॥ ७

उत्तरं मार्गमाणानां मात्स्यसेनां युयुत्सताम् ।
यदि बीभत्सुरायातः किं नः कृत्यमतः परम् ॥ ८

त्रिगर्तानामिदं कार्यं पाण्डवानां च मार्गणम् ।
विप्रकारैर्हि मात्स्येन सुशर्मा बाधितः पुरा ॥ ९

तेषां भयाभिपन्नानां त्रस्तानां त्राणमिच्छताम् ।
अभयं याचमानानां तदाऽस्माभिः परिश्रुतम् ॥ १०

प्रथमं तैर्गृहीतव्यं मात्स्यानां गोधनं महत् ।
अष्टम्यां चापराह्णे तु इति नस्तैस्समाहितम् ॥ ११

नवम्यां पुनरस्माभिस् सूर्यस्योदयनं प्रति ।
इमा गावो गृहीतव्या याते मत्स्ये गवां पदम् ॥ १२

इत्येष निश्चयोऽस्माकं [1]नगरे नागसाह्वये ।
पाण्डवानां परिज्ञाने सर्वेषां नः परस्परम् ॥ १३

ते वा गावो न पश्यन्ति यदि वा स्युः पराजिताः ।
अस्मान् वाऽप्यतिसन्धाय कुर्युर्मात्स्येन [2]सङ्गमम् ॥ १४

---

1. क-ख-च-म—मन्त्रोऽभूत्वा। घ—तत्राभूत्वा।
2. क—सङ्गतम्। ख-च—सङ्गतिम्। अ-ब—सङ्गताः

अथवा तानुपादाय मात्स्यो जानपदैस्सह ।
सर्वथा सेनया साधम् अस्मानेव युयुत्सति ॥ १५

तेषामेको महावीर्यः कश्चिदेव पुरस्सरः ।
अस्माञ्जेतुमिहायातो मात्स्यो वाऽपि स्वयं भवेत् ॥ १६

यद्येष राजा मात्स्यानां यदि बीभत्सुरागतः ।
सर्वैर्योद्धव्यमस्माभिर् इति [1]नस्समयः कृतः ॥ १७

अथ कस्मात् स्थिता ह्येते रथेषु रथिसत्तमाः ।
भीष्मो द्रोणः कृपः कर्णो विकर्णो द्रौणिरेव च ॥ १८

सम्भ्रान्तमनसस्सर्वे प्राप्ते ह्यस्मिन् धनञ्जये ।
नान्यत्र युद्धाच्छ्रेयोऽस्ति तथाऽऽत्मा [2]प्रविधीयताम् ॥ १९

सर्वलोकेन वा युद्धं देवैर्वाऽस्तु सवासवैः ।
[3]अनाच्छिन्ने पुनर्द्रव्ये को हास्तिनपुरं व्रजेत् ॥ २०

शरैरभिप्रणुन्नानां भग्नानां गहने वने ।
को हि जीवेत् पदातीनां भवेदश्वेषु संशयः ॥ २१

आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ।

---

1. च—नस्समयः कृतः । अ—नः कृतनिश्चयः । ख—नस्संशयः कृतः ।
म—नस्सङ्गतः कृतः ।
2. क-ख-घ-ङ-म—प्रणिधीयताम् । च—तथाद्यात्मा प्रणीयताम् ।
3. च—अनाच्छिन्ने धनेऽस्माकम् अथ शक्रेण वज्रिणा ।
यमेन वाऽपि सङ्ग्रामे को हास्तिनपुरं व्रजेत् ॥ [अधिकः पाठः]

[1]जानामि च गतं तेषाम् अतस्त्रासयतीव नः ॥ २२

अर्जुने चापि सम्प्रीतिम् अधिकामुपलक्षये ।
तथा दृष्ट्वा हि वीभत्सुम् उपायान्तं प्रशंसति ॥ २३

यथा सेना न भज्येत तथा नीतिर्विधीयताम् ॥ २३॥

अदेशिका ह्यरण्येऽस्मिन् कृच्छ्रे शत्रुवशं गता ।
यथा न विभ्रमेत् सेना तथा नीतिर्विधीयताम् ॥ २४॥

अश्वानां हेषितं श्रुत्वा का प्रशंसा भवेत् परे ।
स्थाने वाऽपि व्रजन्तो वा सदा हेषन्ति वाजिनः ॥ २५॥

सदा च वायवो वान्ति नित्यं वर्षति वासवः ।
स्तनयित्नोश्च निर्घोषश् श्रूयते बहुशस्तथा ॥ २६॥

भीषयन् पाण्डवेयेभ्यो भवान् सर्वानिमाञ्जनान् ।
प्रमुखे सर्वसैन्यानाम् अबद्धं बहु भाषते ॥ २७॥

यथैवाश्वान् मार्गमाणास् तानेवाभिपरीप्सवः ।
हेषितान्येव शृण्वन्ति स्यादिदं भवतस्तथा ॥ २८॥

किमत्र कार्यं पार्थस्य कथं वा स प्रशस्यते ।
अन्यत्र कामाद्द्वेषाद्वा रोषाद्वाऽस्मासु [2]केवलम् ॥ २९॥

आचार्या वै कारुणिकाः प्राज्ञाश्चापायदर्शिनः ।

---

1. अ-ब—श्लोकद्वयं नास्ति ।
2. क-ब-म—केवलात् । क—केवला ।

नैते महाहवे घोरे सम्प्रष्टव्याः कथञ्चन ॥ ३०॥

प्रासादेषु विचित्रेषु गोष्ठीपानाशनेषु च ।

[1]कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः ॥ ३१॥

बहून्याश्चर्यरूपाणि कुर्वन्तो जनसंसदि ।

इष्वस्त्रे चापसन्धाने पण्डितास्तत्र शोभनाः ॥ ३२॥

परेषां विवरज्ञाने मनुष्याचरितेषु च ।

अन्नसंस्कारदोषे च पण्डितास्तत्र शोभनाः ॥ ३३॥

पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः ।

विधीयतां तथा नीतिर् यथा वध्येत वै परः ॥ ३४॥

गावश्चैताः प्रतिष्ठन्तां सेनां व्यूहन्तु मा चिरम् ।

आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परैः ॥ ३५॥

यथाऽस्माकं जयो वीर चिन्तनीयस्तथा त्वया ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ ४० ॥ गोग्रहणपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[अस्मिन्नध्याये ३६ श्लोकाः]

---

1. च—इतः श्लोकद्वयं नास्ति ।

## ॥ एकचत्वारिंशोऽध्यायः ॥

कर्णेनात्मश्लाघनपूर्वकमर्जुनपराभवनमिथ्याप्रतिज्ञानम् ॥ १ ॥

कर्णः—

सर्वानायुष्मतो भीतान् सन्त्रस्तानिव लक्षये ।
अयुद्धमनसश्चैव सर्वांश्चैतानवस्थितान् ॥ १

यद्येष जामदग्न्यो वा यदि वेन्द्रः पुरन्दरः ।
वासुदेवेन सहितो यदि बीभत्सुरागतः ॥ २
अहमेनं निरोत्स्यामि वेलेव वरुणालयम् ॥ २॥

रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता मया ।
छादयन्तु शरास्सूर्यं पार्थस्यायुर्निरोधकाः ॥ ३॥

मम चाप[1]प्रणुन्नानां शराणां नतपर्वणाम् ।
निवृत्तिर्गच्छतां नास्ति सर्पाणां श्वसतामिव ॥ ४॥

शराणां पुङ्खसक्तानां मौर्व्योऽभिहतयोर्भृशम् ।
[2]श्रूयते तलयोश्शब्दो भेर्योराहतयोरिव ॥ ५॥

एकैकं चतुरः पञ्च कांचित् षष्टिं कांचिच्छतम् ।

1. क-च-म—प्रमुक्तानां । ख-घ—प्रयुक्तानां ।
2. क-म—श्रूयतां तलयो । ग—श्रूयते च तयो ।
ङ—श्रूयते च ततश्शब्दो ।

[1]हतान् पश्यत मातङ्गान् कीर्णानेकेषुणा मया ॥ ६॥

मद्बाहुमुक्तैरिषुभिस् तैलधौतैः पतत्रिभिः ।
खद्योतैरिव सम्पृक्तम् अन्तरिक्षं विराजताम् ॥ ७॥

ध्वजाग्राद्वानरस्तस्य भल्लेनाभिहतो मया ।
अद्यैव पततां भूमौ विनदन् भैरवान् रवान् ॥ ८॥

[2]शत्रोर्मयाऽभिपन्नानां भूतानां ध्वजवासिनाम् ।
दिशः प्रतिष्ठमानानाम् अस्तु शब्दो दिवं गतः ॥ ९॥

क्रुद्धेनास्त्रं मया मुक्तं निर्दहेत् पृथिवीमिमाम् ।
स्थितं सङ्ग्रामशिरसि पार्थमेकाकिनं किमु ॥ १०॥

समाहितश्च बीभत्सुर् वर्षाण्यष्टौ च पञ्च च ।
[3]जातं स्नेहं तु युद्धस्य मयि सन्दर्शयिष्यति ॥ ११॥

पात्रीभूतस्तु कौन्तेयो ब्राह्मणो गुणवानिव ।
शरमालां प्रगृह्णातु मत्प्रदत्तां स्वधामिव ॥ १२॥

---

1. क-ख-ङ-च-म—मया पश्यत मत्स्यानाम् इषुभिर्निहतान् रथान् ।
एकं द्वौ चतुरः पञ्च कचित् षष्टिं कचिच्छतम् ॥
[अधिकः पाठः]

2. च—शत्रोर्मया विपन्नानां हतानामाजिवाजिनाम् ॥

3. क-ख-ङ-म—जातस्नेहस्तु ।
च—ज्ञातस्तैर्युध्यमानस्य ममेदं दर्शयिष्यति ।
उपहूतस्तु कौन्तेयो भ्रातॄणां गुणवानिव ॥
[ इति पाठान्तरम् ]

एष चापि महेष्वासस् त्रिषु लोकेषु विश्रुतः ।
अहं चापि [1]कुरुश्रेष्ठ अर्जुनानवमः क्वचित् ॥ १३॥

मम हस्तप्रमुक्तानां शराणां नतपर्वणाम् ।
[2]निवृत्तिर्गच्छतां नास्ति वैश्वानरशिखार्चिषाम् ॥ १४॥

तुमुलश्श्रूयते शब्दष् षट्पदां गायतामिव ।
[3]इतश्चेतश्च मुक्तानां शराणां नतपर्वणाम् ॥ १५॥

अन्तरा सम्पतद्भिस्तु [4]गृध्रपक्षैश्शितैश्शरैः ।
शलभानामिवाकाशे छाया सम्प्रति दृश्यताम् ॥ १६॥

अद्य मत्कार्मुकोत्सृष्टाश् शिताः पार्थस्य मर्मगाः ।
शरीरमतिसर्पन्तु वल्मीकमिव पन्नगाः ॥ १७॥

बर्हिबर्हिणवाजानां बर्हिणां बर्हिणामिव ।
पततां पततां घोषः पततां पततामिव ॥ १८॥

अद्य त्वहमृणान्मोक्ष्ये यन्मया तत् प्रतिश्रुतम् ।
धार्तराष्ट्रस्य तत्काले निहत्य समरेऽर्जुनम् ॥ १९॥

इन्द्राशनिसमस्पर्शं महेन्द्रसमविक्रमम् ।
अर्दयिष्याम्यहं पार्थम् उल्काभिरिव कुञ्जरम् ॥ २०॥

---

1. क-ख-घ-म — कुरुश्रेष्ठादर्जुनान्नावमः क्वचित् ।
ङ — कुरुश्रेष्ठान्नार्जुनान्नावरमत्क्वचित् ।

2. म — इदमर्धं नास्ति । 3. अ-ब-च-म — इदमर्धं नास्ति ।

4. क-ख-घ-च-म — गृध्रपत्रैः शिलाशितैः । ङ — कङ्कपत्रैः शिलाशितैः ।

शरजालमहाज्वालम् असिशक्तिगदेन्धनम् ।
निर्दहन्तमनीकानि शमयिष्येऽर्जुनानलम् ॥ २१॥

रथादतिरथं लोके सर्वशस्त्रभृतां वरम् ।
विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ॥ २२॥
[1]क्षुरप्रैर्निशितैर्भल्लैर् निपतद्भिश्च मामकैः ।
सम्मूढचेताः कौन्तेयः कर्तव्यं नाभिपत्स्यते ॥ २३॥
अद्य दुर्योधनस्याहं शोकं हृदि चिरं स्थितम् ।
समूलमपनेष्यामि हरन् पार्थशिरश्शरैः ॥ २४॥
[2]हताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम् ।
निश्वसन्तं यथा नागम् अद्य पश्यन्तु कौरवाः ॥ २५॥
जामदग्न्यान्मया लब्धं दिव्यास्त्रमृषिसत्तमात् ।
तदुपाश्रित्य वीर्यं च युध्येयमपि वासवम् ॥ २६॥
कामं गच्छन्तु कुरवो गाः प्रगृह्य परन्तपाः ।
रथेषु वाऽवतिष्ठन्तो युद्धं पश्यन्तु मामकम् ॥ २७॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ४७ ॥ गोग्रहणपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[अस्मिन्नध्याये २७॥ श्लोकाः]

---

1. अ—क्षुतप्तैः क-ख-च-म—क्षुद्रकैर्विविधैः । घ—क्षुद्रकैर् ।
ङ—क्षुरप्रैर्विविधैः ।
2. ङ—अथ मत्कार्मुकोत्सृष्टैः शरैस्सन्नतपर्वभिः । [अधिकः पाठः]

## ॥ द्विचत्वारिंशोऽध्यायः ॥

कृपेणार्जुनचरित्रप्रशंसनपूर्वकं कर्णगर्हणम् ॥ १ ॥ तथा स्वेषु एकैकेनार्जुनस्य दुर्जयत्वकथनपूर्वकं सम्भूयाभियाननिर्धारणम् ॥ २ ॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा नीतिशास्त्रविशारदः ।
आचार्यः कुरुवीराणां कृपश्शारद्वतोऽब्रवीत् ॥ १

कृपः—

सदैव तव राधेय युद्धे क्रूरतरा मतिः ।
नार्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे ॥ २

नया हि बहवस्सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।
तेषां युद्धं सुपापिष्ठं वेदयन्ति पुराविदः ॥ ३

देशकालेन संयुक्तं युद्धं [1]हि फलदं भवेत् ।
हीनकालं [2]तदेवाहुर् अनर्थायोपकल्पते ॥ ४

[3]देशे काले च विक्रान्तं कल्याणाय विधीयते ।
आनुकूल्येन कार्याणाम् उत्तरं तु विधीयते ॥ ५

भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ।

1. क-ख-च-म—विजयदं ।
2. क-च-म—तदेवेह अन । ख-च—तदेवेह ह्यनर्थायोपपद्यते ।
3. क—देशकालेन विक्रान्तं कल्याणं सु । ख-ङ-म—देशकालेन ।

परिचिन्त्य तु पार्थेन सन्निपातो न नः क्षमः ॥ ६
एको हि शत्रून् समरे समर्थः प्रतिबाधितुम् ।
एकः कुरूनभ्यरक्षद् एकश्चाग्निमतर्पयत् ॥ ७
एकश्च पञ्च वर्षाणि ब्रह्मचर्यमधारयत् ।
एकस्सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत् ॥ ८
सैन्धवं वनवासे तु जित्वा कृष्णा[1]मथानयत् ।
एकश्च पञ्च वर्षाणि शक्रादस्त्रा[2]ण्यशिक्षयत् ॥ ९
एक[3]स्संयमिनं दृष्ट्वा कुरूणामकरोद्यशः ॥ ९॥
एको गन्धर्वराजानं चित्रसेनमरिन्दमः ।
विजिग्ये तरसा सङ्ख्ये सेनां चास्य सुदुर्जयाम् ॥ १०॥
पाञ्चालीं श्रीमतीं प्राप्तां क्षत्रं जित्वा [4]स्वयं रणे ।
आदाय गतवान् पार्थो भवान् क नु गतस्तदा ॥ ११॥
तथा निवातकवचाः कालकेयाश्च दानवाः ।
दैवतैरप्यवध्यास्ते एकेन युधि पातिताः ॥ १२॥
एकेन हि त्वया कर्ण किं नामेह कृतं पुरा ।
एकैकेन यथा तेषां भूमिपाला वशे कृताः ॥ १३॥

1 ख-ङ—मधारयत्। घ—मथाह्वयत्।
2. क-ख-ङ—ण्यशिक्षत।
3. क-ङ-म—स्सांयमिनीं जित्वा। ख—स्सपत्नाञ्जित्वा तु।
घ—स्संयमिनीं जित्वा। 4. ख-घ-ङ—स्वयंवरे।

इन्द्रोऽपि हि न पार्थेन संयुगे योद्धुमर्हति ।
यस्तेनाशंसते योद्धुं कर्तव्यं तस्य भेषजम् ॥ १४॥
आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम् ।
अनुसृत्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि ॥ १५॥
अथवा कुञ्जरं मत्तम् एकमेकचरं वने ।
अनङ्कुशं समारुह्य नगरं यातुमिच्छासि ॥ १६॥
समिद्धं पावकं चापि घृतमेदोवसाहुतम् ।
घृताक्तश्चीरवासास्त्वं मध्येनोत्तर्तुमिच्छसि ॥ १७॥
आत्मानं यस्समाबध्य कण्ठे बद्ध्वा [1]तथा शिलाम् ।
समुद्रं प्रतरेद्दोर्भ्यां तत्र किं कर्ण पौरुषम् ॥ १८॥
अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्बलः ।
तादृशं कर्ण यः पार्थं योद्धुमिच्छेत् स दुर्मतिः ॥ १९॥
अस्माभिरेष निकृतो वर्षाणीह त्रयोदश ।
सिंहः पाशाद्विमुक्तो वा न शेषं कर्तुमर्हति ॥ २०॥
एकान्ते पार्थमासीनं कूपेऽग्निमिव संघृतम् ।
अज्ञानादभ्यवस्कन्द्य प्राप्तास्स्मो भयमुत्तमम् ॥ २१॥
उत्सृष्टं तूलराशौ तु एकोऽग्निं शमयेत् कथम् ।

---
1. अ—शिलातलम् क-ख-ङ—ऽथवा शिलाम् । घ—शिलामपि ।

सह युद्ध्यामहे पार्थम् आगतं युद्धदुर्मदम् ॥ २२॥
[1]यत्तसेनाः पराक्रान्ता व्यूढानीकाः प्रहारिणः ।

युद्धायावस्थितं पार्थम् आगतं पाकशासनिम् ॥ २३॥
यत्तास्सर्वे रथश्रेष्ठं परिवार्य समन्ततः ।

षड्रथाः परिकीर्यन्तां वज्रपाणिमिवासुराः ॥ २४॥
द्रोणो दुर्योधनो भीष्मो भवान् द्रौणिस्तथा वयम् ।

सर्वे युद्ध्यामहे पार्थं कर्ण मा साहसं कृथाः ॥ २५॥
[2]नहःयसंहत्य समरे पार्थं जेष्यामहे वयम् ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ४७ ॥ गोग्रहणपर्वणि विंशोऽध्यायः ॥ २० ॥
[अस्मिन्नध्याये २६ श्लोकाः]

---

१. ख—यातु सेना । क—यातु सेना व्यूढानीका प्रहारिणी ।
ख—यत्ता वयं । घ—यत्ता स्सेनाः परिक्रान्ता ।
क—यत्तास्सैन्याः परामृष्टाः ।
2. अ—इदमर्धं नास्ति ।

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

कृपेण स्वगर्हणममृष्यता कर्णेन तदुपालम्भः ॥ १ ॥ तदसहिष्णुनाऽश्वत्थाम्ना सममोंद्घाटनं कर्णदुर्योधनोपालम्भः ॥ २ ॥

वैशम्पायनः—

कृपस्य तु वचश्श्रुत्वा कर्णो राजन् युधां पतिः ।
पुनः प्रोवाच संरब्धो गर्हयन् ब्राह्मणं कृपम् ॥ १

कर्णः—

लक्षयाम्यहमाचार्य भया[1]द्भीतिं गतं रिपौ ।
भीतेन हि न योद्धव्यम् अहं योत्स्ये धनञ्जयम् ॥ २

ननु वारुणमाग्नेयं याम्यं वायव्यमेव च ।
अस्त्रं ब्रह्मशिरश्चैव सत्वहीनस्य ते वृथा ॥ ३

मित्रकार्यं कृतमिदं पितापुत्रैर्महारथैः ।
भर्तृपिण्ड[2]स्य निर्दिष्टं यथेष्टं गन्तुमर्हथ ॥ ४

भिक्षां हरस्व त्वं नित्यं यज्ञाननुचरस्व च ।
आमन्त्रणानि भुङ्क्ष्वाद्य माऽस्मान् युद्धेन भीषय ॥ ५

भार्गवास्त्रं मया मुक्तं निर्दहेत् पृथिवीमिमाम् ।
किं पुनः पाण्डुपुत्राणाम् एकमर्जुनमाहवे ॥ ६

1. क—द्भक्तिं गतं रिपोः । ख-म—द्भक्तिं । घ-ङ-च—द्भक्तिगतं ।
2. क-ख-म—श्च निर्विष्टो । घ—श्च निर्वृत्तो । ङ—श्च निर्घृष्टो ।

आगमिष्यन्ति पदवीं मात्स्याः पाण्डवसंश्रिताः ।
[1]कीचकानां तु बलिनां शत्रुसेनावमर्दिनाम् ॥ ७

तानहं निहनिष्यामि भवता गम्यतां गृहम् ॥ ७॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा अश्वत्थामा प्रतापवान् ।
उवाच वदतां श्रेष्ठो दुर्योधनमवेक्ष्य च ॥ ८॥

अश्वत्थामा—

न च तावज्जिता गावो न च सीमान्तरं गताः ।
न हास्तिनपुरं प्राप्तास् त्वं च कर्ण विकत्थसे ॥ ९॥

बहूनि धर्मशास्त्राणि पठन्ति द्विजसत्तमाः ।
तेषु किंस्विदिदं दृष्टं द्यूते जीयेत यन्नृपः ॥ १०॥

सङ्ग्रामान् विपुलाञ्जित्वा लब्ध्वा च [2]बहुलं धनम् ।
विजित्य च महीं कृत्स्नां नैव कत्थेत पण्डितः ॥ ११॥

पचत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः ।
तूष्णीं धारयते लोकान् वसुधा सचराचरान् ॥ १२॥

चातुर्वर्ण्यस्य कर्माणि विहितानि मनीषिभिः ।
धनं यैरधिगन्तव्यं यच्च कुर्वन् न दुष्यति ॥ १३॥

अधीत्य ब्राह्मणो वेदान् याजयेत यजेत वा ।
क्षत्रियो धनमाहृत्य यजेतैव न याजयेत् ॥ १४॥

---

1. म—इदमर्धं नास्ति । 2. क-ख-ग-ङ-च-म—विपुलं ।

वैश्योऽधिगम्य द्रव्याणि वार्ताकर्माणि कारयेत्[1] ॥ १५

वर्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम् ।
प्रकुर्वन्ति महाभागास्[2] तथाऽऽज्ञां विपुलामपि ॥ १६

[3]वैशम्पायनः—

दुर्योधनमभि[4]प्रेक्ष्य कर्णं च कुरुसंसदि ।
अश्वत्थामा भृशं क्रुद्धो दुर्योधनमतर्जयत् ॥ १७

अश्वत्थामा—

प्राप्य द्यूतेन को राज्यं क्षत्रियो भोक्तुमर्हति ।
[5]यथा वृत्तानुरूपेण यदन्यः प्राकृतो जनः ॥ १८

[6]तेनाधिगम्य वित्तानि को विकत्थेद्विचक्षणः ।
न चानृतैर्योगविधिं चरेद्वै[7]तण्डिको यथा ॥ १९

इन्द्रप्रस्थं त्वया कस्मिन् सङ्ग्रामे निर्जितं पुरम् ।
युधिष्ठिरश्च भीमश्च कस्मिन् युद्धे त्वया जितौ ॥ २०

कतमे द्वैरथे राजंस् त्वमजैषीर्धनञ्जयम् ।

---

1. म—इतः परं सप्तार्धानि न सन्ति।
 'नचानृतैर्योगविधिम्' इत्यारभ्य वर्तते ॥
2. ख-ङ-च—यज्ञान् सुविपुलानपि ।
3. ख—का जाति स्तेषु सूतेयं केऽपि मन्त्राः क्रियाश्च काः।
 केयं वर्णेषु या राज्ञो वक्तृभोक्तृनियन्तृषु ॥ [अधिकः पाठः]
4. अ-क-घ-म—प्रेत्य
5. तद्वृत्तं प्राकृतैश्चीर्णं लोके सद्भिर्विगर्हितम् । [अधिकः पाठः]
6. ख—बुद्धिमान् नीतिमान् राजा क्षत्रियो यदि वेतरः । [अधिकः पाठः]
7. क-च-म—तंसिको । घ—शंसिको ।

नकुलं सहदेवं च धनं येषां त्वया हृतम् ॥ २१
भूयश्च कतमे युद्धे यत्र कृष्णा त्वया जिता ।
एकवस्त्रा सभां नीता क्षुद्रकर्मन् रजस्वला ॥ २२
मूलमेषां [1]महत् कृत्तं सारार्थी चन्दनं यथा ।
क्षुद्रं कर्म समास्थाय तत्र किं विदुरोऽब्रवीत् ॥ २३
यथाशक्ति मनुष्याणाम् अमर्षं लक्षयामहे ।
अन्येषामपि सत्वानाम् अपि कीटपिपीलिकैः ॥ २४
द्रौपद्यास्तु परिक्लेशं न क्षन्तुं पाण्डवोऽर्हति ।
दुःखाय धार्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः ॥ २५
त्वं पुनः पण्डितो भूत्वा ह्याचार्यं क्षेमु[2]मर्हसि ।
वैरान्तकरणो जिष्णुर् निश्शेषं कर्तुमर्हति ॥ २६
नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
भयादिह न युध्येरन् कुन्तीपुत्रेण धीमता ॥ २७
यं यमेकोऽपि संक्रुद्धस् सङ्ग्रामेऽभिभविष्यति ।
वृक्षं गरुडवेगो वा विनिहत्यान्तमेष्यति ॥ २८
त्वया विशिष्टं [3]सङ्ग्रामे धनुष्यमरराट्समम् ।
वासुदेवसमं युद्धे तं पार्थं को न पूजयेत् ॥ २९

---

1. क-ख-ग-ङ-च—अपाकृन्तन्। म—अपाकृन्तस्त्वा।
2. क-ख-ङ—मिच्छसि।
3. क-च—वीर्येण धनुष्यमरराट् स्वयम्। ख-ङ—वीर्येण।

देवं दैवेन युद्ध्येत मानुषेण च मानुषम् ।
अस्त्रेण चास्त्रं [1]को हन्याद् अर्जुनेन समः पुमान् ॥ ३०
पुत्रादनवमश्शिष्य इति धर्मविदो विदुः ।
एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः ॥ ३१
यथा त्वमकरोर्द्यूतम् इन्द्रप्रस्थं यथाऽहरः ।
सभां कृष्णां यथाऽनैषीस् तथा युध्यस्व पाण्डवम् ॥ ३२
अयं ते मातुलः प्राज्ञः क्षत्रधर्मस्य कोविदः ।
दुर्द्यूतदेवी गान्धारश् शकुनिर्युद्ध्यतामिह ॥ ३३
नाक्षान् क्षिपति गाण्डीवी न कृतं द्वापरं न च ।
ज्वलिताग्निशिखान् बाणांस् तीक्ष्णान् क्षिपति [2]पाण्डवः॥ ३४
न हि गाण्डीवनिर्मुक्ता गृध्रपक्षाश्शिलाशिताः ।
अन्तरेष्ववतिष्ठन्ते गिरीणामपि दारणाः ॥ ३५
अन्तकश्शमनो मृत्युस् तथाऽग्निर्बडवामुखः ।
कुर्युरेते क्वचिच्छेषं न तु क्रुद्धो धनञ्जयः ॥ ३६
युद्ध्यतां काममाचार्यो नाहं योत्स्ये धनञ्जयम् ।
मात्स्यस्त्वस्माभिरायोध्यो यद्यागच्छेद्गवां पदम् ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ४७ ॥ गोग्रहणपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[अस्मिन्नध्याये ३७ श्लोकाः]

---

1. क-ख-घ-ङ-च—यो हन्याद् अर्जुनेनाधिकः। म—यो।
2. अ-म—गाण्डिवः।

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

कर्णकृतद्रोणकृपाधिक्षेपसक्रुद्धमश्वत्थामानं प्रति भीष्मेण द्रोणादिप्रशंसनपूर्वकं परिसान्त्वनम् ॥ १ ॥ दुर्योधनेन भीष्मकर्णाभ्यां सह कृपद्रोणक्षमापनम् ॥ २ ॥

---

वैशम्पायनः—

[1]ततश्शान्तनवस्तत्र धर्मार्थकुशलं हितम् ।
दुर्योधनमिदं वाक्यम् अब्रवीत् कुरुसन्निधौ ॥ १

भीष्मः—

साधु पश्यति वै द्रोणः कृपस्साध्वनुपश्यति ।
[2]आचार्यपुत्रस्सहजं निश्चितं साधु भाषते ॥ २

कर्णस्तु क्षत्रधर्मेण यथावद्योद्धुमर्हति ।
आचार्यो नावमन्तव्यः पुरुषेण विजानता ॥ ३
देशकालौ तु सम्प्रेक्ष्य योद्धव्यमिति मे मतिः ॥ ३॥

यस्य सूर्यसमाः पञ्च सपत्नास्स्युः प्रहारिणः ।
कथमभ्युदये तेषां न सम्मुह्येत पण्डितः ॥ ४॥

स्वार्थे हि सर्वे मुह्यन्ति येऽपि धर्मविदो जनाः ।
तस्मात् तत्त्वं न जानाति यत्तु कार्यं नराधिपः ॥ ५॥

---

1. म—अयं प्रथमश्लोको नास्ति । 2. म—इदमर्धं नास्ति ।

धार्तराष्ट्रोऽपि दुर्बुद्धिः पश्यन्नपि धनञ्जयम् ।
नैव पश्यति नाघ्राति मन्दः क्रोधवशं गतः ॥ ६॥

वैशम्पायनः—

[1]एवमुक्त्वा तु राजानं पुनर्द्रौणिमुवाच ह ।
प्राञ्जलिर्भरतश्रेष्ठस् साम्ना बुद्धिमतां वरः ॥ ७॥

भीष्मः—

कर्णो यद्यदवोचद्धि तेजस्सञ्जननाय नः ।
आचार्यपुत्रः क्षमतां महत् कार्यमुपस्थितम् ॥ ८॥

नायं कालो विरोधस्य कौन्तेये समुपस्थिते ।
क्षन्तव्यं भवता सर्वम् आचार्येण कृपेण च ॥ ९॥

[2]भवतो हि कृतास्त्रत्वं यथाऽऽदित्ये प्रभा [3]यथा ।
यथा चन्द्रमसो लक्ष्मीस् सर्वथा नापकृष्यते ॥ १०॥

एवं [4]भवतु ब्रह्मत्वं ब्राह्मं चैव प्रतिष्ठितम् ।
एकत्र चतुरो वेदाः क्षात्रमेकत्र दृश्यते ॥ ११॥

नैतत् समस्तमुभयं कस्मिंश्चिदनुशुश्रुम ।

---

1. म—एतदादि अर्धत्रयं नास्ति ।
2. अ-क-ख-घ-ङ-च—बलस्य व्यसनान्याहुर् यानि धीरा मनीषिणः ।
मुख्यभेदश्च तेषां तु पापिष्ठं विदुषां मतम् ॥
[अधिकः पाठः]
3. क-च-म—तथा ।
4. क-ख-घ-ङ-म—भवत्सु ।

अन्यत्र भारताचार्यात् सपुत्रादिति मे मतिः ॥ १२॥

ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ॥ १३

आचार्यपुत्रः क्षमतां नैष कालो विभेदने ।
सर्वे [1]सङ्गत्य युद्ध्यामः पाकशासनिमागतम् ॥ १४

बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
[2]मुख्यो भेदो हि तेषां वै पापिष्ठो विदुषां मतः ॥ १५

अश्वत्थामा—

आचार्य एव क्षमतां शान्तिरत्र विधीयताम् ।
प्रशान्ते हि गुरौ मे स्यान्निवृत्तं कोप[3]कारणम् ॥ १६

वैशम्पायनः—

ततो दुर्योधनो द्रोणं क्षमयामास भारत ।
सह कर्णेन भीष्मेण कृपं [4]च सुमहाबलम् ॥ १७

द्रोणः—

यदैव प्रथमं वाक्यं भीष्मश्शान्तनवोऽब्रवीत् ।
[5]तदैवाहं प्रसन्नो वै परमत्र विधीयताम् ॥ १८

यथा दुर्योधनो राजा न गच्छेत् काञ्चिदापदम् ।

1. क-घ-च-म—संहत्य । ङ—समेत्य ।
2. क-घ-च—मुख्यभेदो हि । अ-ख—मुख्यभेदश्च ।
3. क-च-म—कारितम् । घ—वारितम् । 4. घ-च-म—चैव ।
5. क-ख-घ-ङ-म—तथैवावां प्रसन्नौ स्वः ।

साहसाद्यदि वा मोहात् तथा नीतिर्विधीयताम् ॥ १९

वनवासे तु निर्वृत्ते दर्शयेत धनञ्जयः ।
[1]धनुश्चालभमानोऽत्र नाद्य नः क्षन्तुमर्हति ॥ २०

यथा नायशसा युञ्ज्याद् धार्तराष्ट्रः कथञ्चन ।
यथा [2]न नः पराजैषीद् अर्जुनस्तद्विधीयताम् ॥ २१

उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम् ।
तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हति ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ ४७ ॥ गोग्रहणपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

---

1. क-ख-ङ-म—धनं चा। च—धनं च।
2. क-ख-ङ-च—च न पराजैषीद् पार्थो नः।
म—स च पराजैषीद् पार्थो नस्त।

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

भीष्मेण दुर्योधनं प्रति हेतूपन्यासपूर्वकं युधिष्ठिरं प्रति श्रुतवनवासादिकालस्य परिसमाप्तिकथनम् ॥ १ ॥ भीष्मेणार्जुनपराक्रमप्रशंसनपूर्वकं पाण्डवैस्सह सन्धिविधानेऽपि दुर्योधनेन तत्प्रतिषेधनम् ॥ २ ॥ भीष्मेण द्रोणवचनाद्योधैस्सह दुर्योधनस्य प्रस्थापनपूर्वकं सेनाया व्यूहीकरणेन समराभियानम् ॥ ३ ॥

---

भीष्मः—

कलांशास्तात युज्यन्ते मुहूर्ताश्च दिनानि च ।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥ १
ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि ।
एवं कालविभागेन कालचक्रं प्रवर्तते ॥ २

तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।
पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ ॥ ३

[1]तेषामभ्यधिका मासाः पञ्च द्वादश च क्षपाः ।
त्रयोदशानां वर्षाणाम् इति मे वर्तते मतिः ॥ ४

पूर्वेद्युरेव निर्वृत्तस् ततो बीभत्सुरागतः ॥ ४॥

सर्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम् ।
एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ ५॥

---

1. क—तेषां च ह्यधिका मासा ।
   अ—तेषामथ च मासानां ।

सर्वे पञ्च महात्मानस् सर्वे धर्मार्थकोविदाः ।
येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराङ्मुखः ॥ ६॥

[1]अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम् ।
न चापि केवलं राज्यम् इच्छेयुस्ते [2]ह्यधर्मतः ॥ ७॥

तदैव ते हि विक्रान्तुम् [3]ईषुः कौरवनन्दनाः ।
धर्मपाशनिबद्धास्तु न चेलुः क्षत्रियव्रतात् ॥ ८॥

यश्चानृत इति ख्यायेद् यश्च गच्छेत् परां गतिम् ।
वृणुयुर्मरणं पार्था नानृतत्वं कथञ्चन ॥ ९॥

प्राप्ते तु काले [4]सम्प्राप्ता नोत्सृजन्ति नरर्षभाः ।
अपि वज्रभृता गुप्तास् तथावीर्या हि पाण्डवाः ॥ १०॥

प्रतियुद्ध्येम समरे सर्वशस्त्रभृतां वरम् ॥ ११

तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम् ।
तत् संविधीयतां क्षिप्रं मा नो ह्यर्थोऽत्यगात् [5]परः ॥ १२

न हि पश्यामि सङ्ग्रामे कदाचिदपि कौरव ।

---

1. ख—कामात् क्रोधाच्च लोभाद्वा कामक्रोधभयादपि ।
स्नेहाद्वा यदि वा मोहाद्धर्मं नात्येति धर्मजः ॥ [अधिकः पाठः]
2. क-च-म—ऽनुपायतः । घ—ऽप्युपायतः ।
3. अ-च—ऊषुः । ख—इषुः ।
4. क-ख-ग-घ-म—स्तानर्थान्नोत्सृजेयुर्न ।
ङ—प्राप्तव्यान्नोत्सृजन्ति मनीषिणः ॥
5. क-ख-ङ-घ—परान । घ—पुरः । म—तिगात्परान् ।

एकान्तसिद्धिं राजेन्द्र सम्प्राप्तश्च धनञ्जयः ॥ १३

[1]सम्प्रवृत्ते च सङ्ग्रामे भावाभावौ जयाजयौ ।

अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ १४

तस्मा[2]द्युद्धोपचारितं कर्म वा धर्मसंहितम् ।

क्रियतामाशु राजेन्द्र सम्प्राप्तश्च धनञ्जयः ॥ १५

एको हि समरे पार्थः [3]पृथिवीमपि निर्दहेत् ।

भ्रातृभिस्सहितो वीरैः किं पुनः कौरवान् रणे । १६

तस्मात् सन्धिं कुरुश्रेष्ठ कुरुष्व यदि मन्यसे ॥ १६॥

दुर्योधनः—

नाहं राज्यं प्रदास्यामि पाण्डवेभ्यः पितामह ।

[4]युद्धायाचरितं यत्तु तत् सर्वं संविधीयताम् ॥ १७॥

वैशम्पायनः—

भीष्मस्योपरते वाक्ये तथा दुर्योधनस्य च ।

प्राप्तमर्थ्यं च यद्वाक्यं द्रोणश्चाह द्विजोत्तमः ॥ १८॥

द्रोणः—

यत्तु युद्धायाचरितं भवेद्वा धर्मसंहितम् ।

---

1. क—श्लोकद्वयं नास्ति ।
2. क-च-म—युद्धायचरितं । घ—युद्धाय चरितं कवचं ।
3. क-ख—पृथिवीं निर्दहेच्छरैः ।
4. ख-च—ग्रामं सेनां च दासीं च स्वल्पं धनमपि प्रभो ।

[अधिकः पाठः]

कस्त्वया सदृशो लोके [1]यदि तत् कर्तुमर्हति ॥ १९॥

[2]इयं च मामिका प्रज्ञा श्रूयतां यदि रोचते ॥ २०

राजा बलचतुर्भागं क्षिप्रमादाय गच्छतु ।
ततोऽपरश्चतुर्भागो गास्समादाय गच्छतु ॥ २१

वयमर्धेन [3]सैन्यस्य प्रतियोत्स्यामहेऽर्जुनम् ।
[4]एवं राजा सुगुप्तस्स्यान्न क्लैब्यं गन्तुमर्हति ॥ २२

मात्स्यं वा पुनरायातम् अथवाऽपि शतक्रतुम् ।
योत्स्यामस्सह संहत्य पाकशासनिमागतम् ॥ २३

वैशम्पायनः—

[5]तद्वाक्यं रुरुचे तेषां द्रोणेनोक्तं महात्मना ।
तथा हि कृतवान राजा कौरवाणामनन्तरम् ॥ २४

भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् ।
सेनामुख्यान् व्यवस्थाप्य व्यूहितुं सम्प्रचक्रमे ॥ २५

द्रोणस्योपरते वाक्ये भीष्मः प्रोवाच बुद्धिमान् ॥ २५॥

---

1. क-ख-घ-म—भूयस्त्वं वक्तुमर्हसि । ङ—भूयस्तद्वक्तुमर्हसि ।
2. ख-ङ—सर्वथा हि मया श्रेयो वक्तव्यं कुरुनन्दन । [अधिकः पाठः]
3. क-ख-घ-म—सैन्येन ।
4. ङ—अहं द्रोणश्च कर्णश्च अश्वत्थामा कृपस्तथा ।
प्रतियोत्स्याम बीभत्सुमागतं कृतनिश्चयम् ॥ [अधिकः पाठः]
5. अ-क-ख-म—श्लोकद्वयं नास्ति ।

भीष्मः—

आचार्यो मध्यतस्तिष्ठेद् अश्वत्थामा तु सव्यतः ।

कृपश्शारद्वतो धीमान् पार्श्वं रक्षतु दक्षिणम् ॥ २६॥

विकर्णश्च महावीर्यो दुर्मुखश्च परन्तपः ।

शकुनिस्सौबलश्चैव दुस्सहश्च महाबलः ॥ २७॥

द्रोणस्य पार्श्वमजिताः पालयन्तु महाबलाः ॥ २८

अग्रतस्सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः ।

अहं सर्वस्य सैन्यस्य पश्चात् स्थास्यामि पालयन् ॥ २९

सर्वे महारथाश्शूरा महेष्वासा महाबलाः ।

युद्ध्यन्तु पाण्डवश्रेष्ठम् आगतं यत्नतो युधि ॥ ३०

वैशम्पायनः—

अभेद्यं [1]सर्वसैन्यानां व्यूह्य व्यूहं कुरूत्तमः ।

वज्रगर्भं व्रीहिमुखं [2]अर्धचक्रान्तमण्डलम् ॥ ३१

तस्य व्यूहस्य पश्चार्धे भीष्मश्चाथोद्यतायुधः ।

सौवर्णं तालमुच्छ्रित्य रथे तिष्ठन्नशोभत ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ४७ ॥ गोग्रहणपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[अस्मिन्नध्याये ३२ श्लोकाः]

---

1. क-ख-ग-घ-म—पर । ङ—कुरु ।
2. क—पद्म । ख-ग—पद्मचन्द्रार्धं । घ—पद्मं चक्रार्धं ।
म—पद्मं चन्द्रार्धं ।

## ॥ षट्चत्वारिंशोऽध्यायः ॥

इन्द्रेण सुदर्शननामनि कामगामिनि प्रासादे देवगणसमारोपणपूर्वकमर्जुनकुरुरणावलोकनाय गगनाङ्गणावतरणम् ॥ १ ॥

वैशम्पायनः—

ततस्सुदर्शनं नाम प्रासादं हरिवाहनः ।
सर्वान् देवान् समारोप्य प्रययौ यत्र पाण्डवः ॥ १
स्थूणा[1]राजिसहस्रं तु यस्य मध्ये प्रतिष्ठितम् ।
तत्र सूर्यपथेऽतिष्ठद् विमला [2]महती सभा ॥ २
आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।
तत्र श्वेतानि छत्राणि काञ्चनस्फाटिकानि च ॥ ३
तथा चित्राणि छत्राणि दिव्यरूपाणि भारत ।
मणिरत्नविचित्राणि नानारूपाणि भागशः ॥ ४
आकाशे समदृश्यन्त भानुमन्ति शुभानि च ॥ ४॥
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ।
तथा धातुर्विधातुश्च मित्रस्य धनदस्य च ॥ ५॥
रुद्रस्य विष्णोस्सवितुस् त्रिदशानां तथैव च ॥ ६

1. म—स्थूणराजिसहस्रं तु यस्तु। क-ख—राशि।
घ—स्थूणराजसहस्रं तु यत्र।
2. क-म—वासवी।

काञ्चनानि च दामानि विविधाश्चोत्तमस्रजः ।
दिव्यपुष्पाभिसंवीतास् तत्र छत्राणि भेजिरे ॥ ७

तस्मिंश्च राजन् प्रासादे दिव्यरत्नविभूषिते ।
दिव्यगन्धसमाविष्टास् स्रजो दिव्याश्चकाशिरे ॥ ८

दिव्यश्च वायुः प्रववौ गन्धमादाय सर्वशः ।
ऋतवः पुष्पमादाय समतिष्ठन्त भारत ॥ ९

प्रजानां पतय[1]श्चैव सप्त चैव महर्षयः ।
तत्र देवर्षयश्चैव ते च राजन् दिवौकसः ॥ १०
इन्द्रेण सहितास्सर्वे त्रिदशाश्च व्यवस्थिताः ॥ १०॥

न पङ्को न रजस्तत्र प्रविवेश कथञ्चन ।
आदित्यश्चापि रूक्षोऽत्र नातिवेलमिवातपत् ॥ ११॥

दिव्यगन्धं समादाय वायुस्तत्राभिगच्छति ।
आकाशं च दिशस्सर्वा दर्शनीयमदृश्यत ॥ १२॥

तत्र देवास्समारुह्य तं दिव्यं सर्वतःप्रभम् ।
अम्बरे विमलेऽगच्छन् प्रासादं [2]कामगामिनम् ॥ १३॥

तत्र राजर्षयश्चैव समारूढा दिवौकसः ।
श्वेतो राजा वसुमनास् तथा भद्रः [3]प्रतर्दनः ॥ १४॥

---

1. क-ब—स्सर्वे ।च-म—स्सप्त ।
2. ख—व्योम (घ) सर्वगामिकम् । 3. अ-ख-ब-ङ—प्रदर्शनः ।

नृगो ययातिर्नहुषो मान्धाता भरतः कुरुः ।
अष्टकश्च शिबि[1]श्चैव स च राजा पुरूरवाः ॥ १५॥
डम्भोद्भवः कार्तवीर्यो ह्यर्जुनस्सगरस्तथा ।
दिलीपः [2]केरलः पूरुश् शर्यातिस्सोमकस्तथा ॥ १६॥
हरिश्चन्द्रश्च तेजस्वी रघुर्दशरथस्तथा ।
भगीरथश्च राजर्षिस् सर्वे च जनमेजय ॥ १७॥
पाण्डुश्चैव महाबाहुश् चामरव्यजनायुतः ।
छत्रेण ध्रियमाणेन राजसूयश्रिया वृतः ॥ १८॥
एते चान्ये च बहवः पुण्यशीलाश्शुचिव्रताः ।
कीर्तिमन्तो महावीर्यास् तत्रैवासन् दिवि स्थिताः ॥ १९॥
गणाश्चाप्सरसां सर्वे गन्धर्वाश्चापि सर्वशः ।
दैत्यराक्षसयक्षाश्च सुपर्णाः पन्नगास्तथा ॥ २०॥
वासवप्रमुखास्सर्वे देवाश्च सगणेश्वराः ।
आसंस्तत्र समारूढास् सङ्ग्रामं तं दिदृक्षवः ॥ २१॥
इत्यम्बरे व्यवस्थाय प्रासादस्था दिवौकसः ।
एकस्य च बहूनां च द्रष्टुं युद्धं व्यवस्थिताः ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ ४७ ॥ गोग्रहणपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[अस्मिन्नध्याये २२॥ श्लोकाः]

---

1. क-म—:पूरुः। ख—श्चोभौ।
2. क—श्चाम्बतीर्षश्च। ख-म—भरतः पूरुः।

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

सेनामध्ये दुर्योधनमनवलोकयताऽर्जुनेनोत्तरं प्रति तत्पदवीमनु रथयापनचोदना ॥ १ ॥ तथा बाणाभ्यां द्रोणाद्यभिवादनपूर्वकम् अन्याभ्यां बाणाभ्यां कर्णमूले कुशलप्रश्नः ॥ २ ॥ द्रोणेन तत्कौशलश्लाघनम् ॥ ३ ॥

---

वैशम्पायनः—

तथा व्यूढेष्वनीकेषु कौरवेयैर्महारथैः ।
उपायादर्जुनस्तूर्णं रथघोषेण नादयन् ॥ १

ददृशुस्तद्ध्वजाग्रं ते शुश्रुवुश्च रथस्वनम् ।
दोधूयमानस्य भृशं गाण्डीवस्य च निस्वनम् ॥ २

त्रिक्रोशमात्रं गत्वा तु पाण्डवः श्वेतवाहनः ।
सेनामुखमभिप्रेक्ष्य पार्थो वैराटिमब्रवीत् ॥ ३

अर्जुनः—

राजानं नात्र पश्यामि रथानीके व्यवस्थितम् ।
दक्षिणं पक्षमास्थाय कुरवो यान्त्युदङ्मुखाः ॥ ४

उत्सृज्यैतद्रथानीकं महेष्वासाभिरक्षितम् ।
गवाग्रमभितो याहि यावत् पश्यामि मे रिपुम् ॥ ५
गवाग्रमभितो गत्वा गाश्चाप्याशु निवर्तय ॥ ५॥
यावदेते निवर्तन्ते कुरवो जवमास्थिताः ।

तावदेव पशून् सर्वान् निवर्तिष्ये [1]तथा विभो ॥ ६॥

वैशम्पायनः—

इत्युक्त्वा समरे पार्थो वैराटिमपराजितः ।
सव्यं पक्षमनुप्राप्य जवेनाश्वानचोदयत् ॥ ७॥
ततोऽभ्यवादयत् पार्थो भीष्मं शान्तनवं कृपम् ।
द्वाभ्यां द्वाभ्यां तथाऽऽचार्यं द्रोणं च निशितैश्शरैः ॥ ८॥
[2]ततस्तत् सर्वमालोक्य द्रोणो वचनमब्रवीत् ।
महारथमनुप्राप्तं दृष्ट्वा [3]गाण्डीविनं प्रियम् ॥ ९॥

द्रोणः—

[4]एतद्ध्वजाग्रं पार्थस्य दूरतः प्रतिदृश्यते ॥ १०
मेघस्सविद्युत्स्तनितो रोरवीति च वानरः ।
आस्थाय च रथं याति गाण्डीवं विक्षिपन् धनुः ॥ ११
अश्वानां स्तनतां शब्दो वहतां पाकशासनिम् ।
रथस्याम्बुधरस्येव श्रूयते भृशदारुणः ॥ १२
दारयन्निव तेजस्वी वसुधां वासवात्मजः ।

1. क—तथा हि भो । ख-घ-म—तवाभि भो ।
2. ख—द्रोणं कृपं च भीष्मं च पृषत्कैरभ्यवादयत् । [अधिकः पाठः]
3. क-ख—गाण्डीवधन्विनम् ।
4. ङ-च—न कश्चिद्योद्धुमिच्छेत न च गुप्तं स्वजीवितम् ।
अयं वीरश्च शूरश्च दुर्धर्षश्चैव संयुगे ॥ [अधिकः पाठः]

एष तिष्ठन् [1]रथिश्रेष्ठो रथे रथवरप्रणुत् ॥ १३

एष दृष्ट्वा रथानीकम् अस्माकमरिमर्दनः ।
श्रीमान् वदान्यो धृतिमान् सत्करोतीव पाण्डवः ॥ १४

इमौ बाणावनुप्राप्तौ पादयोः प्रत्युपस्थितौ ।
बन्धुराग्रौ निखातौ मे चित्रपुङ्खावजिह्मगौ ॥ १५

इमौ चाप्यपरौ बाणावभितः कर्णमूलयोः ।
संस्पृशन्तावतिक्रान्तौ सुपृष्ट्वाऽनामयं भृशम् ॥ १६

चिरदृष्टोऽयमस्माभिर् धर्मज्ञो बान्धवप्रियः ।
अतीव ज्वलते लक्ष्म्या पाण्डुपुत्रः प्रतापवान् ॥ १७

निरुष्य च वने वासं कृत्वा कर्म सुदुष्करम् ।
अभिवादयते पार्थः पूजयन् मामरिन्दमः ॥ १८

अमर्षेण हि सम्पूर्णो दुःखेन प्रतिबोधितः ।
अद्यैनां भारतीं सेनाम् एको नाशयते ध्रुवम् ॥ १९

त्र्यधिकं दशमुष्य वत्सराणां
स्वजनेनाविदितस्त्रयोदशं च ।
ज्वलते रथमास्थितः किरीटी
तम इव रात्रिजमभ्युदस्य सूर्यः ॥ २०

---

1. ङ—रथश्रेष्ठे रथे रथवरप्रदुन् । क—रथश्रेष्ठे युद्धे रथशतप्रणुत् ।
ग—रथिश्रेष्ठो रथे रथिवरप्रभुः ।

रथी शरी चारुमाली निषङ्गी
शङ्खी पताकी कवची किरीटी ।
खड्गी च धन्वी च विराजते[1]ऽयं
शिखीव यज्ञेषु घृतेन सिक्तः ॥ २१

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ४७ ॥ गोग्रहणपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

---

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

---

अर्जुनेन सेनामध्ये सुयोधनानवलोकनेन तस्य गवामादानेन गमनसम्भावनया रथेन गवाग्रं प्रत्यभियानम् ॥ १ ॥ भीष्मेण पार्थभावविज्ञानात् सेनया सह तदनुधावनम् ॥ २ ॥ गवान्तिकमुपगतवताऽर्जुनेन तद्रक्षिणां बाणगणैरभिहननेन गवां विनिवर्तनम् ॥ ३ ॥

---

वैशम्पायनः—

तमदूरमुपायान्तं दृष्ट्वा पाण्डवमर्जुनम् ।
नारयः प्रेक्षितुं शेकुस् तपन्तं हि यथा रविम् ॥ १
स तं दृष्ट्वा रथानीकं पार्थस्सारथिमब्रवीत् ॥ १॥

---

1. क-ख—यथा। अ—यश्। म—ऽसौ।

अर्जुनः—

इषुपातमात्रे सेनायास्स्थापयाश्वानरिन्दम ।

यावत् समीक्षे व्यूहेऽस्मिन् मम शत्रुं सुयोधनम् ॥ २॥

रत्नवैडूर्यविकृतं मणिप्रवरभूषितम् ॥

परिजानाम्यहं तस्य ध्वजं दूरात् समुच्छ्रितम् ॥ ३॥

यद्येनमिह पश्यामि दुर्बुद्धिमतिमानिनम् ।
यमाय प्रेषयिष्यामि सहायस्स्याद्यदीश्वरः ॥ ४॥

सर्वानन्याननादृत्य दृष्ट्वा तमतिमानिनम् ।
सिंहः क्षुद्रमृगस्येव पतिष्ये तस्य मूर्धनि ॥ ५॥

हनिष्यामि तमेवाशु शरैर्गाण्डीवनिस्सृतैः ।
तस्मिन् हते भविष्यन्ति सर्व एव पराजिताः ॥ ६॥

शरैस्समर्पयिष्यामि धार्तराष्ट्रं ससौबलम् ।
असभ्यानां च वक्तारं कुरूणां किल किल्बिषम् ॥ ७॥

राजानं नेह पश्यामि निरामिषमिदं बलम् ।
अभिद्रवेऽहं राजानं व्यक्तमित्यत्र निर्भयः ॥ ८॥

आस्थितो मध्यमाचार्यो ह्यश्वत्थामा ह्यनन्तरम् ।
कृपकर्णौ पुरस्तात् तु महेष्वासौ व्यवस्थितौ ॥ ९॥

भूरिश्रवास्सोमदत्तो बाह्लीकश्च जयद्रथः ।

दक्षिणं पक्ष[1]माश्रित्य स्थिता [2]युद्धाय दंसिताः ॥ १०॥

सात्वराजो द्युमत्सेनो वृषसेनश्च सौबलः ।
दशार्णश्चैव कालिङ्गो वामं पक्षं समाश्रिताः ॥ ११॥

पृष्ठतः कुरुमुख्यस्तु भीष्मस्तिष्ठति दंशितः ।
सोऽर्धसैन्येन बलवान् सर्वेषां नः पितामहः ॥ १२॥

दुर्योधनं न पश्यामि क नु राजा स गच्छति ।
उत्सृज्यैतद्रथानीकं याहि यत्र सुयोधनः ॥ १३॥

तं हत्वा विनिवर्तिष्ये गास्स आदाय गच्छति ।
गवाग्रमभितो याहि यत्न राजा भविष्यति ॥ १४॥

वैशम्पायनः—

[3]इत्युक्त्वा समरे पार्थो वैराटिमपराजितः ।
संस्पृशानो धनुर्दिव्यं त्वरमाणोऽगमत् तदा ॥ १५॥

ततो भीष्मोऽब्रवीद्वाक्यं कुरुमध्ये परन्तपः ॥ १६

भीष्मः—

चिरदृष्टोऽयमस्माभिर् धर्मज्ञो बान्धवप्रियः ।
अतीव ज्वलते लक्ष्म्या पाकशासनिरच्युतः ॥ १७

एष दुर्योधनं पार्थो मार्गते निकृतिं स्मरन् ।

---

1. क-ङ—मास्थाय ।
2. क-ख-ङ—युद्धविशारदाः । म—युद्धविवासिताः ।
3. म—अर्धपञ्चकं नास्ति ।

सेनामत्यर्थमालोक्य त्वरते ग्रहणे[1]ऽस्य च ॥ १८

मृगं सिंह इवादातुम् ईक्षते पाकशासनिः ॥ १८॥

नैषोऽन्तरेण राजानं बीभत्सुस्थातुमर्हति ।
तस्य पार्ष्णिं ग्रहीष्यामो जवेनाभिप्रधावतः ॥ १९॥

न ह्येनमभिसङ्क्रुद्धम् एको युद्ध्येत संयुगे ।
अन्यो देवान्महादेवात् कृष्णाद्वा देवकीसुतात् ॥ २०॥

किं नो गावः करिष्यन्ति द्रव्यं वा विपुलं तथा ।
दुर्योधनः पार्थगतः पुरा प्राणान् विमुञ्चति ॥ २१॥

वैशम्पायनः—

इत्युक्त्वा समरे भीष्मस् सेनया सह कौरवः ।
अन्वधावत् तदा पार्थं धार्तराष्ट्रस्य रक्षणे ॥ २२॥

त्रिक्रोशमात्रं गत्वा तु पार्थो वैराटिमब्रवीत् ॥ २३

अर्जुनः—

इषुपातमात्रे सेनायास् स्थापयाश्वानरिन्दम ।

एतदग्रं गवां दृष्टं मन्दं वाहय सारथे ॥ २४

याह्युत्तरेण सेनाया गवाग्रं प्रविभज्य च ।

परिक्षिप्य गवां यूथम् अत्र योत्स्ये सुयोधनम् ॥ २५

1. ग-क-ख—तु तम्

गच्छन्ति सत्वरं गावस् सगोपाः परिमोचय ॥ २५॥

[1]तत्र गत्वा पशून् वीर सगोपान् परिमोचय ।
अन्तरेण च सेनायाः प्राङ्मुखो गच्छ चोत्तर ॥ २६॥

इमे त्वतिरथास्सर्वे मम वीर्यपराक्रमम् ।
पश्यन्तु कुरवो युद्धे महेन्द्रस्येव दानवाः ॥ २७॥

वैशम्पायनः—

ततस्स रथिनां श्रेष्ठो नाम विश्राव्य चात्मनः ।
निशिताग्रान्शरांस्तीक्ष्णान् मुमोचान्तकसन्निभान् ॥ २८॥

शलभैरिव चाकाशं धाराभिरिव पर्वतम् ।
निरावकाशमभवच् छरैः क्षिप्तैः किरीटिना ॥ २९॥

विदीर्यमाणास्तु शरैस् ते योधा धार्तराष्ट्रकाः ।
शाश्चैव हि न पश्यन्ति पार्थमुक्तैरजिह्मगैः ॥ ३०॥

[2]सा चापि बहुला सेना पार्थबाणाभिपीडिता ।
नापश्यद्विघृतां भूमिं नान्तरिक्षं दिशोऽपि वा ॥ ३१॥

अर्जुनस्तु तदा हृष्टो दर्शयन् वीर्यमात्मनः ।
पीडयामास सैन्यानि गाण्डीवप्रसृतैश्शरैः ॥ ३२॥

तेषां [3]चैवाभियाने च न प्रहारे च वै मतिः ।

---

1. म—इदमर्धं नास्ति । 2. श—इदमर्धं नास्ति ।
3. ह—नैवोपयाने च नापयानेऽभवन्मतिः ।
क-ख-च-म—नैवापयाने च नाभियानेऽभवन्मतिः ।
घ—नैवाभिधाने च नाभिधानेऽभवन्मतिः ।

शीघ्रतामेव पार्थस्य पूजयन्ति स्म विस्मिताः ॥ ३३॥

चन्द्रावदातं सामुद्रं कुरुसैन्यभयङ्करम् ।

ततश्शङ्खमुपाध्मासीद् द्विषतां रोम[1]हर्षणम् ॥ ३४॥

ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयत् ॥ ३५

तस्य शङ्खस्य [2]घोषेण धनुषो निस्वनेन च ।

शब्देनामानुषाणां च भूतानां ध्वजवासिनाम् ॥ ३६

वियद्गतानां देवानां [3]राक्षसानां रवेण च ।

ऊर्ध्वं पुच्छं विधून्वाना [4]हेषमाणास्समन्ततः ॥ ३७

गावस्सवत्सास्सन्त्रस्ता निवृत्ता दक्षिणां दिशम् ॥ ३७॥

ततस्स समरे शूरो बीभत्सुश्शत्रुपूगहा ।

गोपालांश्चोदयामास गावश्चोदयतेति ह ॥ ३८॥

उत्तरं चाह बीभत्सुर् हर्षयन् पाण्डुनन्दनः ॥ ३९

अर्जुनः—

गवामग्रं समीक्षस्व गाश्चैवाशु निवर्तय ।

यावदेते निवर्तन्ते कुरवो जवमास्थिताः । ४०

याह्युत्तरेण गाश्चैतास् सैन्यानां च नृपात्मज ।

पश्यन्तु कुरवस्सर्वे मम वीर्यपराक्रमम् ॥ ४१

---

1 अ-क-ङ-म—हर्षणः । 2. क-ख-घ-म—शब्देन ।

3. क-ख-घ—मानुषाणां । म—अमानुषरवेण च ।

4. घ—हर्षमाणाः ।

वैशम्पायनः—

ते लाभमिव मन्वानाः कुरवोऽर्जुनमाहवे ।
दृष्ट्वा यान्तमदूरस्थं क्षिप्रमभ्यपतन् रथैः ॥ ४२

हस्त्यश्वपरिवारेण महता [1]हि विराजता ।
योधैः प्रासासिहस्तैश्च चापबाणोद्यतायुधैः ॥ ४३

तान्यनीकान्यशोभन्त कुरूणामाततायिनाम् ।
[2]संसर्पन्त इवाकाशे विद्युत्वन्तो वलाहकाः ॥ ४४

तानि दृष्ट्वाऽप्यनीकानि निवर्तितरथानि च ।
पार्थोऽपि वायुवद्घोरं सैन्याग्रं व्यधुनोच्छरैः ॥ ४५

तां शत्रुसेनां तरसा प्रणुद्य
गाश्चापि जित्वा धनुषा परेण ।
दुर्योधनायाभिमुखं प्रयान्तं
कुरुप्रवीरास्सहसाऽभ्यगच्छन् ॥ ४६

गोषु प्रयातासु जवेन मात्स्याः
किरीटिनं प्रीतियुतं च दृष्ट्वा ।
पशून् समादाय ततो निवृत्ता
गोपालकास्सम्प्रययुश्च राष्ट्रम् ॥ ४७

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि अष्टचत्वारिंशोऽध्यायः ॥४८॥
॥ ४७ ॥ गोग्रहणपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[अस्मिन्नध्याये ४७ श्लोकाः]

---

1. क—ऽभिविराजता । ख—ऽभिव्यराजत । घ-म—ऽभिविराजता ।
2. अ-ङ-च—संस्पृशन्त ।

## ॥ एकोनपञ्चाशोऽध्यायः ॥

अर्जुनेनोत्तरं प्रति द्रोणकर्णादिरथानामसाधारणध्वजचिह्नप्रदर्शनपूर्वकं तत्तन्नामनिर्देशेन तत्तत्पराक्रमवर्णनम्॥ १ ॥

वैशम्पायनः—

ततस्त्रीणि सहस्राणि रथानां च धनुष्मताम् ।
घोराणि कुरुवीराणां पर्यकीर्यन्त भारत ॥ १

कर्णो रथसहस्रेण प्रत्यतिष्ठद्धनञ्जयम् ।
भीष्मश्शान्तनवो धीमान् सहस्रेण पुरस्कृतः ॥ २

तथा रथसहस्रेण भ्रातृभिः परिवारितः ।
पश्चाद्दुर्योधनोऽतिष्ठद्धस्तावाप्तश्रिया ज्वलन् ॥ ३

अतिष्ठन्नवकाशेषु पादातास्सह वाजिभिः ।
भीमरूपाश्च मातङ्गास् तोमराङ्कुशचोदिताः ॥ ४

तानि दृष्ट्वा ह्यनीकानि विततानि महात्मनाम् ।
वैराटिमुत्तरं तं तु प्रत्यभाषत पाण्डवः ॥ ५

अर्जुनः—

जाम्बूनदमयी वेदिर् ध्वजाग्रे यस्य दृश्यते ।
शोणाश्वाश्वा रथे युक्ता द्रोण एष प्रकाशते ॥ ६

आचार्यो निपुणो धीमान् [1]ब्रह्मविच्छूर[2]सम्मतः ।
[3]आहवे चाप्रतिद्वन्द्वो दूरपाती महारथः ॥ ७

सुप्रसन्नो महावीरः कुरुष्वैनं प्रदक्षिणम् ।
अत्रैव चाविरोधेन एष धर्मस्सनातनः ॥ ८

यदि मे प्रहरेद्द्रोणश् शरीरे प्रहरिष्यतः ।
ततोऽस्मिन् प्रहरिष्याामि नान्यथा युद्धमस्ति मे ॥ ९

भारताचार्यमुख्येन ब्राह्मणेन महात्मना ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १०

ध्वजाग्रे सिंहलाङ्गूलो दिक्षु सर्वासु शोभते ।
भारताचार्यपुत्रस्तु सोऽश्वत्थामा विराजते ॥ ११

ध्वजाग्रं दृश्यते यत्र बालसूर्यसमप्रभम् ।
दुर्जयस्सर्वसैन्यानां देवैरपि सवासवैः ॥ १२
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १२॥
ध्वजाग्रे गोवृषो यस्य काञ्चनो हि विराजते ।
आचार्यवरमुख्यस्तु कृप एष महारथः ॥ १३॥

द्रोणेन च समो वीर्ये पितुर्मे परमस्सखा ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १४॥

---

1. म—अस्त्रवि । ङ—शस्त्रविच्छूर । घ—ब्राह्मो वै ब्रह्मवित्तमः ।
2. ख-ङ-म—सत्तमः । 3. क-ख-घ-म—क्षात्रवे ।

यस्य काञ्चन[1]दण्डेन हस्तिकक्ष्यापरिष्कृतः ।
ध्वजः प्रकाशते दूराद् रथे विद्युद्गणोपमः ॥ १५॥
एष वैकर्तनः कर्णः प्रतिमानं धनुष्मताम् ।
[2]एष वै स्पर्धते नित्यं मया सह सुदुर्जयः ॥ १६॥
जामदग्न्यस्य रामस्य शिष्यो ह्येष महारथः ॥ १७
सर्वास्त्रकुशलः कर्णस् सर्वशस्त्रभृतां वरः ।
युद्धेऽप्रतिमवीर्यश्च दृढवेधी पराक्रमी ॥ १८
अद्याहं युद्धमेतेन करिष्ये सूतबन्धुना ।
युद्धमेतत्तु द्रष्टासि वलिवासवयोरिव ॥ १९
महारथेन शूरेण सूतपुत्रेण [3]धीमता ।
तेन मे युध्यमानस्य शीघ्रं वाहय सारथे ॥ २०
यस्य चैव रथोपस्थे नागो मणिमयो ध्वजः ।
एष दुर्योधनस्तत्र कौरवो यशसा वृतः ॥ २१
लब्धलक्षो दृढं वेधी लघुहस्तः प्रतापवान् ।
तेन मे युध्यमानस्य शीघ्रं वाहय सारथे ॥ २२

---

1. क-ख-च-म—कम्बूभिः। ख—जम्बूभिः।
2. ख—दृढवैरी सदाऽस्माकं नित्यं कटुकभाषणः॥
यस्याश्रयबलादेव धार्तराष्ट्रस्ससौबलः।
अस्मान् निरस्य राज्याच्च पुनरद्यापि योत्स्यति॥ [अधिकः पाठः]
3. क—मानिना। ख-घ-च-म—धन्विना।

यस्तु श्वेतावदातेन पञ्चतालेन केतुना ।
वैडूर्यदण्डेन तदा तालवृक्षेण राजते ॥ २३

हस्तावापी बृहद्धन्वा सेनां तिष्ठति हर्षयन् ।
रामेण जामदग्न्येन द्वैरथे न जितः पुरा ॥ २४

शीघ्रश्च लघुवेधी च लघुहस्तः प्रतापवान् ।
एष शान्तनवो भीष्मस् सर्वेषां नः पितामहः ॥ २५

ककुदस्सर्व[1]सैन्यानां सर्वशस्त्रभृतां वरः ।
राजश्रियाऽपविद्धस्तु सुयोधनवशानुगः ॥ २६

पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ॥ २६॥

[2]एतेन युध्यमानस्य यत्नात् संयच्छ मे हयान् ॥ २७

वैशम्पायनः—

[3]इत्येवं त्वरितः पार्थः कथयित्वा तदोत्तरम् ।
विमृश्य गाण्डिवं तत्र युद्धायैव व्यवस्थितः ॥ २८

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ ४७ ॥ गोग्रहणपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

1. क-ख-च-म—योधानां ।  2. म—इदमर्धं नास्ति ।
3. क-ख-ङ-च-म—रूपतश्चिह्नतश्चैव युद्धाय त्वरते पुनः ।
[पाठान्तरम्]

## ॥ पञ्चाशोऽध्यायः ॥

अर्जुनस्य भीष्मद्रोणादिभिः सह युद्धम् ॥ १ ॥ अर्जुनेन कर्णस्य पराभवः ॥ २ ॥

वैशम्पायनः—

अश्वत्थामा ततस्तत्र कर्णं सम्प्रेक्ष्य वीर्यवान् ।
उवाच स्मयमानो वै सूतपुत्रमरिन्दमम् ॥ १

अश्वत्थामा—

कर्ण [1]यत् त्वं सभामध्ये बह्वबद्धं विकत्थसे ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ॥ २

एषोऽन्तक इव क्रुद्धस् सर्वभूतावमर्दनः ।
सङ्ग्रामशिरसो मध्ये जृम्भते केसरी यथा ॥ ३
शूरोऽसि यदि सङ्ग्रामे दर्शयस्व भयं विना ॥ ३॥
यद्यशक्तोऽसि वीरेण पार्थेनाद्भुतकर्मणा ।
पुनरेव सभां गत्वा धार्तराष्ट्रेण धीमता ॥ ४॥
मातुलं परिगृह्याशु मन्त्रयस्व यथासुखम् ॥ ५

वैशम्पायनः—

एवमुक्तस्तदा कर्णः क्रोधादुद्वृत्तलोचनः ।

1. क-ख-ग-च-म—यत्तत् ।

द्रोणपुत्रमिदं वाक्यम् उवाच कुरुसन्निधौ ॥ ६

कर्णः—

नाहं बिभेमि बीभत्सोर् न कृष्णाद्देवकीसुतात् ।
पाण्डवेभ्योऽपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः॥ ७

सत्वाधिकानां पुंसां हि धनुर्वेदोपजीविनाम् ॥
[1]महतां जायते दर्पस् स्वरश्च न विषीदति ॥ ८

पश्यत्वाचार्यपुत्रो माम् अर्जुनं[2] नातिरंहसा ।
युध्यमानं सुसंयुक्तं जयो वै मय्यवस्थितः ॥ ९

वैशम्पायनः—

ततः प्रहस्य बीभत्सुः कौन्तेयश्श्वेतवाहनः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथसत्तमम् ॥ १०

महामना मन्दबुद्धिर् निश्वसन् धृतराष्ट्रजः ।
उवाच [3]स महाबाहुं कर्णं दुर्योधनस्तदा ॥ ११

दुर्योधनः—

न विद्मो ह्यर्जुनं तत्र वसन्तं मत्स्यवेश्मनि ।
तेनेदं कर्ण मत्स्यानाम् अग्रहीष्म धनं बहु ॥ १२

---

1. क—गर्जनाज् । ख-म—गर्जतां ।
घ—गर्जतां जायते गर्वः । ङ—दर्शनाज् ।

2. क-घ—न परं सह । ङ—न चिरं सह ।

3. क-ख-ङ-च-म—स महाराज राजा । घ—सहसा राजन् राजा ।

[1]इतः परं चेद्गच्छामो विसृजन्तो धनं बहु ।
अयशो नातिवर्तेत लोकयोरुभयोरपि ॥ १३

न च युद्धात् परं नास्ति क्षत्रियाणां सुखावहम् ।
तस्मात् पार्थेन सङ्ग्रामं कुर्महे न पलायनम् ॥ १४

वैशम्पायनः—

एतावदुक्त्वा राजा वै [2]अभियातिमियेष सः ॥ १४॥

तानि पञ्चसहस्राणि वीराणां हि धनुष्मताम् ।
अभ्यद्रवंस्तदा पार्थं शलभा इव पावकम् ॥ १५॥

वर्मिता वाजिनस्तत्र संवृताश्च पदातिभिः ।
भीमरूपाश्च मातङ्गास् तोमराङ्कुशपाणिभिः ॥ १६॥

अधिष्ठितास्सुसंयत्तैर् हस्तिशिक्षाविशारदैः ।
अभ्यद्रवन्त सङ्क्रुद्धाश् चापहस्तोद्यतायुधैः ॥ १७॥

पञ्च चैनं रथोदग्रास् [3]सहिताः पर्यवारयन् ।
द्रोणो भीष्मश्च कर्णश्च कुरुराजश्च वीर्यवान् ॥ १८॥

अश्वत्थामा महाबाहुर् धनुर्वेदपरायणः ॥ १९

---

1. ग—एतच्चैव हि । क-ख—एतच्चेत्तर्हि ।
 घ—एतच्चैतं हि । अ-ङ—एतस्यैव हि गच्छामो
2. क-ङ—अभियान । म—अभियान ।
3. क-ग-घ-म—त्वरिताः । ख—त्वरितं ।

[1]कृपप्रभृतयश्चान्ये शकुनिर्धृतराष्ट्रजाः ।
इषूंश्च सम्यगस्यन्तो जीमूता इव वार्षिकाः ॥ २०

ते लाभमिव मन्वानाः प्रत्यगृह्णन् धनञ्जयम् ।
शरौघानभिवर्षन्तो नादयन्तो दिशो दश ॥ २१

ततः प्रहस्य बीभत्सुः कौन्तेयश्श्वेतवाहनः ।
दिव्यमस्त्रं [2]विकुर्वाणः प्रत्ययाद्रथसत्तमान् ॥ २२

यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
तथा गाण्डीवनिर्मुक्ताश् छादयन्ति शरा दिशः ॥ २३

न रथानां न चाश्वानां न ध्वजानां न वर्मणाम् ।
[3]अनिर्विद्धं शितैर्बाणैर् आसीद् द्व्यङ्गुलिरन्तरम् ॥ २४

दैवयोगाद्धि पार्थस्य हयानामुत्तरस्य च ।
शिक्षाबलोपपन्नत्वाद् अस्त्राणां वै पराक्रमात् ॥ २५

ध्वजगाण्डीवयोश्चापि दैवी मायाकृतेति च ।
इतस्ततश्च संयाने दूरे वाऽप्यथवाऽन्तिके ॥ २६

दुर्गे विषमजाते वा स्थले निम्ने तथा क्षितौ ।

---

1. म—इदमर्धं नास्ति ।
2. क-ख-घ—प्रकुर्वाणः ।
3. क—अतिविद्धैः शितैर्बाणैर्नासीदन्तरमङ्गुलम् । ख—अनाविद्धं ।
घ-म—अभिविद्धैः शितैर्बाणैरासीद्विवरमन्तरम् ।

[1]नैव रुद्धा गतिस्तस्य रथस्य मनसो यथा ॥ २७

समरेषु तु विद्वांसस् तस्य तांस्तान् पराक्रमान् ।
वीर्यमत्यद्भुतं दृष्ट्वा तथा पार्थस्य तद्बलम् ॥ २८
[2]त्रेसुरेवं परे भीताः पराङ्मुखरथा अपि ॥ २८॥

कालाग्निमिव बीभत्सुं निर्दहन्तमिव प्रजाः ।
नारयः प्रेक्षितुं शेकुर् ज्वलन्तमिव पावकम् ॥ २९॥

तान्यनीकानि भिन्नानि रेजुरर्जुनमार्गणैः ।
तिग्मांशोश्च वनाग्राणि व्याप्तानीव गभस्तिभिः ॥ ३०॥

अशोकानां वनानीव सञ्चितैः कुसुमैश्शुभैः ।
पार्थस्संरञ्जयामास रुधिरेणाकुलं बलम् ॥ ३१॥

सहस्रशोऽर्जुनशरैश् छिन्नान्युच्चावचानि च ।
छत्राणि च पताकाश्च खेऽभ्युवाह सदागतिः ॥ ३२॥

ये ह्यर्जुनबलत्रस्ताः परिपेतुर्दिशो दश ।
रथाङ्गदेशमुत्सृज्य पार्थच्छिन्नयुगा हयाः ॥ ३३॥

निकृत्तपूर्वचरणास् ते निपेतुश्शितैश्शरैः ।
शिरोभिः प्रथमं जग्मुर् मेदिनीं जघनैर्हयाः ॥ ३४॥

---

1. क-म—न च रुन्ध्येद्  ख-ङ—न च रुद्धा । घ—न च रुन्ध्याद् ।
2. क—वितत्रसुः । घ—वित्रेसुरपरे । ङ—तत्रसुश्च परे ।
म—त्रेसुरेव ।

चक्षु[1]र्मुखविषाणेषु पादेषूरस्सु च द्विपान् ।
[2]मर्मस्वग्रेषु चाहत्य पातयामास भूतले ॥ ३५॥

कौरवाणां गजानां च शरीरैर्गतचेतसाम् ।
क्षणेन संवृता भूमिर् मेघैरिव नभस्स्थलम् ॥ ३६॥

[3]अस्त्रैर्दिव्यैर्महाबाहुर् अर्जुनः प्रदहन्निव ।
बडवामुखसम्भूतः कालाग्निरिव सर्वतः ॥ ३७॥

यथा युगान्तसमये सर्वं स्थावरजङ्गमम् ।
कालपक्वमशेषेण [4]धक्ष्यत्युग्रशिखश्शिखी ॥ ३८॥

तद्वत् पार्थोऽस्त्रतेजोभिर् धनुषो निस्वनेन च ।
दैवाद्वीर्याच्च बीभत्सुस् तस्मिन् दौर्योधने बले ॥ ३९॥

रणे शक्तिममित्राणां प्रायेणोपनिनाय सः ।
चेष्टां प्रायेण भूतानां रात्रिः प्राणभृतामिव ॥ ४०॥

---

1. क-ख-घ-म—नखविषाणेषु दन्तवेष्टेषु च द्विपान् ।
2. क-ख-ङ—मर्मस्वन्येषु चाहत्य तथा निघ्नन् गजोत्तमान् ।
घ—मर्मस्वन्येषु चागाम्य तथा न्यघ्नन्मदोत्कटान् ।
म—मर्मस्वन्येषु चाहत्य तथा जघ्ने गजोत्तमान् ।
3. ख—सञ्छिन्नपरपार्श्वांश्च गजानेवं व्यनाशयत् ।
क्षुरप्रैर्निशितैरन्यान् मेघपर्वतसन्निभान् ॥
एकदन्ताक्षिचरणान् गजान् पार्थो व्यदारयत् ।
ऊर्ध्वमुद्धृतशुण्डाग्रान् विवृतास्यान् सभूरुहान् ॥
वक्षमारभ्य जघनम् उपर्यर्धं व्यदारयत् । [अधिकः पाठः]
4. क-ख-ङ-च—धक्ष्येद्दु । घ—दहेद्दु । म—भक्षत्युग्र ।

सोऽ[1]त्ययात् सहसा शत्रून् साहसाच्च प्रपेदिवान् ॥ ४१

शीघ्रं दूरं दृढामोघम् अस्त्रमस्यातिमानुषम् ।
[2]दृष्ट्वा ते कौरवा भीता अतिमानुषविक्रमम् ॥ ४२

खगयानाभिसंवीतैस् संविष्टैः खगमैरिव ।
अर्जुनेन खमावव्रे लोहितप्राणपैः खगैः ॥ ४३

[3]अर्जुनस्य विनिर्मुक्ताश् शरा गाण्डीवधन्वनः ।
तार्क्ष्यवेगा इवाकाशे न ससञ्जुः परात्मसु ॥ ४४

वर्माणि सारथिश्चैव हेमजालानि वाजिनाम् ।
किरीटं सूर्यसङ्काशं वैयाघ्रमथ चर्म च ॥ ४५

[4]तथा सर्वाणि गात्राणि रथस्य द्विषतां शरैः ।
नीहारेणेव भूतानि [5]छन्नान्यथ चकाशिरे ॥ ४६

---

1. क-ख-ङ—ऽतीयात् सहसा शत्रून् सहसाऽभिप्रपेदिवान् ।
घ—ऽभ्ययात् सहसा शत्रून् जयं च प्रतिपेदिवान् ।
म—सोऽतियात् सहसा शत्रून् सहसाऽभिप्रपेदिरे ।

2. म—इदमर्धं नास्ति ।

3. क—अर्जुनास्त्रविनिर्मुक्तश्शरो गाण्डीवसंयुतः ।
ख—अर्जुनास्त्रविनिर्मुक्तश्शरो गाण्डीवनिस्सृतः ।
घ—अर्जुनेन समाविद्धाः शरा गाण्डीवधन्वना ।
म—अर्जुनास्त्रविनिर्मुक्ताः शरा गाण्डीवधन्वना ।

4. क-ख-घ-ङ-म—तस्य ।

5. क-म—छन्नानीव । ख—छन्नानि प्र । घ—छिन्नानीव ।

सकृदेव [1]न तं शेकू रथमभ्यसितुं परे ।
अनभ्यस्तः पुनस्तैर्हि [2]रथस्थोऽतिपपात तान् ॥ ४७

तच्छरा द्विट्शरीरेषु यथैव न ससज्जिरे ।
द्विडनीकेषु बीभत्सोर् न ससज्ज रथस्तथा ॥ ४८

स [3]तद्वत् क्षोभयामास विगाह्यारिबलं रथी ।
अनन्तवेगो भुजगः क्रीडन्निव महार्णवे ॥ ४९

अस्यतो नित्यमत्यर्थं सर्वघोषातिगस्तथा ।
[4]सन्नादश्श्रूयते भूतैर् धनुषश्च किरीटिनः ॥ ५०

सञ्छिन्नास्तत्र मातङ्गा बाणैरल्पान्तरान्तरे ।
संस्यूतास्तत्र दृश्यन्ते मेघा इव गभस्तिभिः ॥ ५१

दिशोऽनुभ्रमतस्सर्वास् सव्यं दक्षिणमस्यतः ।
सततं दृश्यते युद्धे सायकासनमण्डलम् ॥ ५२

पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ।
नालक्ष्येषु शराः पेतुस् तथा गाण्डीवधन्वनः ॥ ५३

[5]मार्गो गजसहस्रस्य युगपन्मर्दतो वनम् ।

---

1. घ—च तं शेकू रथमध्यासितुं । म—तु तं शेकुः ।
2. क-ख-च-म—रथः सोऽति । घ—रथोपरि च पातनात् ।
3. क-ख-घ-ङ-च-म—तद्विक्षोभ ।
4. क-म—सततं श्रूयते शब्दो । ख-ङ—सततं ।
घ—सम्सतं श्रूयते भूतैर्धनुर्घोषः ।
5. अ-च—महागज ।

कौन्तेयरथमार्गस्तु रणे घोरतरोऽभवत् ॥ ५४

नूनं पार्थजयैषित्वाच्छक्र[1]स्सर्वामरेश्वरः ।
हन्त्यस्मानिति मन्यन्ते पार्थेनैवार्दिताः परे ॥ ५५

घ्नन्त[2]मत्यर्थभीतास्ते मेनिरे सव्यसाचिनम् ।
कालमर्जुनरूपेण ग्रसन्तमिव च प्रजाः ॥ ५६

कुरुसेनाशरीराणि पार्थेनानाहतान्यपि ।
पेतुः पार्थहतानीव पार्थकर्मानुदर्शनात् ॥ ५७

ओषधीनां शिरांसीव काल[3]पक्तिसमन्वयात् ।
अवनेमुः कुरूणां हि [4]वीराश्चार्जुनजाद्भयात् ॥ ५८

वाह्वो रथान् पीडयति प्रध्माते शङ्खमर्जुने ।
[5]चकार चार्जुनः क्रोधाद् विमुखान् रुषितानपि ॥ ५९

अर्जुनेनास्त्रभिन्नानि बलाग्राणि पुनः क्वचित् ।
चक्रुर्लोहितधाराभिर् धरणीं लोहितोत्तराम् ॥ ६०

लोहितेनापि सम्पृक्तैः पांसुभिः पवनोद्धतैः ।
तेनैव च समुद्धूतैस् सूक्ष्मैर्लोहितबिन्दुभिः ॥ ६१

---

1. क-ख-ङ-म—सर्वामरैस्सह ।
2. क-ख-ङ-च-म—मत्यन्तमहितान् सव्यसाचिं तु मेनिरे ।
3. ङ—पङ्क्ति ।
4. क-ङ-म—वीर्याण्यर्जुन । ङ—वीर्यां इव । च—शिरांस्य ।
5. म—इदमर्धं नास्ति ।

लोहितार्द्रैः प्रहरणैर् निमग्ना लोहितोक्षिताः ।
लोहितेषु निमग्नास्ते निहताश्च किरीटिना ॥ ६२

बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः ।
सार्कं नभः क्षणेनासीत् सन्ध्याभ्रमिव लोहितम् ॥ ६३

अप्यस्तं प्राप्य चादित्यो निवर्तेत न पाण्डवः ।
[1]निवर्तेत न जित्वाऽरीन् इत्यजल्पन् विचक्षणाः ॥ ६४

तान् सर्वान् समरे [2]भीतान् पौरुषे पर्यवस्थितान् ।
दिव्यैरस्त्रैरमेयात्मा सर्वानाच्छेद्धनुर्धरान् ॥ ६५

स तु [3]द्रोणस्त्रिसप्तत्या नाराचानां समर्पयत् ।
अर्जुनो निशितैर्बाणैर् द्रोणमर्चन्महाबलः ॥ ६६

अशीत्या शकुनिं चैव द्रौणिमप्याशु सप्तभिः ।
दुस्सहं दशभिर्बाणैर् अर्जुनस्समविध्यत ॥ ६७

दुश्शासनं द्वादशभिः कृपं शारद्वतं त्रिभिः ।
भीष्मं शान्तनवं षष्ट्या प्रत्यविध्यत् स्तनान्तरे ॥ ६८

स कर्णं कर्णिनाऽविध्यत् पीतेन निशितेन च ।

---

1. अ—निवर्तन्ते न जित्वाऽरीनित्यजल्पन् विमोक्षिताः ।
ख—निवर्तेताविजित्यारिं नित्यकल्पविचक्षणः ।
घ—निवर्तेताविजित्यारीन् नित्यं जल्पन्त शात्रवः ।
2. म—शूरः पौरुषे । क-ख—शूरान् । घ—एतांश्च समरे शूरान् ।
3. क-ख-म—द्रोणं त्रिसप्तत्या क्षुरकाणां ।
घ—द्रोणं त्रिसप्तत्या क्षीणमाणं ।

[1]वासविर्द्विषतां मध्ये विव्याध परमेषुणा ॥ ६९

स कर्णं सतनुत्राणं निर्भिद्य निशितैश्शरैः ।
अगच्छद्दारयन् भूमिं चोदितो दृढधन्वना ॥ ७०

[2]ततोऽस्य वाहान् व्यहनत् चतुर्भिश्च क्षुरेण तु ।
सारथेश्च शिरः कायाद् अपाहरदरिन्दमः ॥ ७१

अर्धचन्द्रेण चिच्छेद चापं तस्य करे स्थितम् ॥ ७१॥

[3]तस्मिन् युद्धे महाभागे कर्णे सर्वास्त्रपारगे ।
हताश्वसूते विरथे ततोऽनीकमभज्यत ॥ ७२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

॥ ४० ॥ गोग्रहणपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

[अस्मिन्नध्याये ७२॥ श्लोकाः]

---

1. म—इदमर्धं नास्ति ।
2. च-म—इतः सार्धश्लोको नास्ति ।
3. क-ख-ब-च—तस्मिन् विद्धे ।

## ॥ एकपञ्चाशोऽध्यायः ॥

अर्जुनेन रणे विकर्णादिपराभवनपूर्वकं कर्णानुजहननम् ॥ १ ॥ अर्जुनपराजितेन कर्णेन रणाङ्गणादपयानम् ॥ २ ॥

वैशम्पायनः—

तत् प्रभग्नं बलं सर्वं विपुलौघ[1]स्वनं महत् ।
भीष्ममासाद्य सन्तस्थौ वेलामिव महोदधिः ॥ १

तानि सर्वाणि गाङ्गेयस् समाश्वास्य परन्तपः ।
ततो व्यूह्य महाबाहुस् समरेष्वपराजितः ॥ २

रथनागाश्वकलिलं [2]युयुधे युद्धकोविदः ।
अभेद्यं परसैन्यानां शूरैरभिसमीक्षितम् ॥ ३

आचार्यदुर्योधनसूतपुत्रैः
कृपेण भीष्मेण च पालितानि ।
अवध्यकल्पानि दुरासदानि
[3]नराश्वमातङ्गरथाकुलानि ॥ ४

तेषामनीकानि किरीटमाली
व्यूढानि दृष्ट्वा विपुलध्वजानि ।

---

1. क-म—बलं तथा। ख—बलं महत्। घ—रवं तथा। ङ—तथा।
2. ख-घ-ङ-म—युयुजे।
3. क-ख-म—रथाश्वमातङ्गसमाकुलानि।
घ-च—नराश्वमातङ्गसमाकुलानि।

गाण्डीवधन्वा द्विषतां निहन्ता
वैराटिमामन्त्र्य ततोऽभ्युवाच ॥ ५

अर्जुनः—

सुसङ्गृहीतैरथ रश्मिभिस्त्वं
हयान् नियम्य प्रसमीक्ष्य यत्तः ।
सम्प्रेषयाशु प्रतिवीरमेनं
वैकर्तनं योधयितुं वृणोमि ॥ ६

यां हस्तिकक्ष्यां बहुधा विचित्रां
स्तम्भे रथे पश्यसि दर्शनीयाम् ।
[1]विवर्तमानं जलदप्रकाशं
वैकर्तनस्यैतदनीकमग्र्यम् ॥ ७

एतेन शीघ्रं प्रतिपादयेमान्
श्वेतान् हयान् काञ्चनजालकक्ष्यान् ।
सर्वं जवं तत्र विदर्शय त्वम्
आसादयैतद्रथवीरवृन्दम् ॥ ८

गजो गजेनेव हि योद्धुकामो
मया सदा काङ्क्षति सूतपुत्रः ।

1. क–ख–म—विवर्धमानं ज्वलनप्रकाशं ।

[1]तमेव मां प्रापय राजपुत्र
दुर्योधनापाश्रयजातदर्पम् ॥　९
तं पातयिष्यामि रथस्य मध्ये
सहस्रनेत्रोऽशनिनेव वृत्रम् ॥　९॥

वैशम्पायनः—

स तैर्हयैर्जातजवैर्[2]महद्भिः
पुत्रो विराटस्य हिरण्यकक्ष्यैः ।
विध्वंसयंस्तद्रथिनामनीकं
ततोऽवहत् पाण्डवमाजिमध्ये ॥　१०॥

तमापतन्तं परमेण तेजसा
समीक्ष्य वैकर्तनमभ्यरक्षन् ।
अभ्यद्रवंस्ते रथवीरवृन्दा
व्याघ्रेण चाक्रान्तमिवर्षभं रणे ॥　११॥

चित्राङ्गदश्चित्ररथश्च वीरस्
सङ्ग्रामजिद् [3]दुस्सहचित्रसेनौ ।

1. क—तवय युद्धं कुरुवीरमध्ये करोमि तं याहि तथा प्रवृत्तः ।
दुर्योधनापाश्रयजातदर्पं तं पातयिष्यामि रथस्य मध्ये ॥
गाण्डीवमुक्तैरिषुभिश्शिताग्रैस्सहस्रनेत्रोऽशनिनेव वृत्रम् ॥
2. क-ख-म—बृहद्भिः ।　[पाठान्तरम्]
3. ङ-च—दुष्प्रति

विविंशतिर्दुर्मुखदुर्जयौ च
विकर्णदुश्शासनसौबलाश्च ॥ १२॥
शोणो निषेधस्तु तमन्वयुस्ते
वैकर्तनं [1]पार्थगतं समीक्ष्य ॥ १३

[2]पुत्रा ययुस्ते सह सोदराश्च
वैकर्तनं पार्थगतं समीक्ष्य ।
प्रगृह्य चापानि महाबला रणे
धनञ्जयं पर्यकिरञ्शरार्चिभिः ॥ १४

तेषां धनुर्ज्याकृतनैकतन्त्रीं
प्रासोपवीणां शरसङ्घकोणाम् ।
[3]कराग्रयन्तां स्थिरचापदण्डां
वीणामुपावादयदाशु पार्थः ॥ १५

तस्मिंस्तु युद्धे तुमुले प्रवृत्ते
पार्थं विकर्णोऽतिरथं रथेन ।
विपाठवर्षेण कुरुप्रवीरो
भीमेन भीमानुजमाससाद ॥ १६

1. क-ख-घ-ङ-म—शीघ्रतरं युवानः ।
2. अ-च—इदमर्धं नास्ति ।
3. क-ङ—कराग्रयन्तास्थितः ।
घ—शराग्रतन्त्रीं शरचापदण्डां वीणामुपादाय गतो मनस्वी ।

ततो विकर्णस्य धनुर्निकृत्य
जाम्बूनदेनोपहितं दृढज्यम् ।
न्यपातयत् तद्ध्वजमस्य [1]विद्वान्
भिन्नध्वजस्सोऽप्यपयाज्जवेन ॥ १७

तं शात्रवाणां गणबाधितारं
कर्माणि कुर्वाणममानुषाणि ।
शत्रुन्तपो वैरममृष्यमाणस्
समर्पयत् कूर्मनखेन पार्थम् ॥ १८

स तेन राज्ञाऽतिरथेन विद्धो
विगाहमानो ध्वजिनीं परेषाम् ।
शत्रुन्तपं पञ्चभिराशु विद्ध्वा
ततोऽस्य सूतं दशभिर्जघान ॥ १९

ततस्स विद्धो भरतर्षभेण
बाणेन कायावरणातिगेन ।
गतासुराजौ निपपात राजन्
नगो नगाग्रादिव वातरुग्णः ॥ २०

[2]रथर्षभास्ते भरतर्षभेण
वीरा रणे वीरतरेण भग्नाः ।

1. क-ख-घ—विद्ध्वा । म—सिंहं ।
2. क—भरतर्षभास्ते तु रथर्षभेण । ख-म—रथर्षभास्तेन रथर्षभेण ।
घ—कुरुर्षभास्ते तु कुरूर्षभेण ।

चकम्पिरे वातवशेन काले
प्रकम्पितानीव महावनानि ॥ २१

हताश्च पार्थेन नरप्रवीरा
भूमौ युवानस्सुषुपुस्सुवेषाः ।
वसुप्रदा वासवतुल्यवीर्याः
पराजिता वासवजेन सङ्ख्ये ॥ २२

सुवर्णकार्ष्णायसवर्मनद्धा
नागा यथा हैमव[1]ताश्च वृद्धाः ॥ २२॥

[2]तथा सपत्नान् समरे विनिघ्नन्
गाण्डीवधन्वा पुरुषप्रवीरः ।
चचार सङ्ख्ये विदिशो दिशश्च
दहन्निवाग्निर्वनमातपान्ते ॥ २३॥

सुजीर्णपर्णानि यथा वसन्ते
विशातयित्वा तु रजो नुदन् खे ।
तथा सपत्नान् विकिरन् किरीटी
चचार सङ्ख्येऽतिरथो रथेन ॥ २४॥

1. क-ङ-म—ताः प्रवृद्धाः । ख—ते प्रवृद्धाः । घ—तेन वृद्धाः ।
2. अ-क-ख-ग-ङ-च—तथा सपत्नास्समरे विकीर्णाः
कुरुप्रवीरेण रणेऽर्जुनेन । [अधिकः पाठः]

शोणाश्ववाहस्य हयान् निहत्य
वैकर्तनभ्रातुरदीनसत्वः ।
एकेन सङ्ग्रामजितश्शरेण
शिरो जहाराथ किरीटमाली ॥ २५॥

तस्मिन् हते भ्रातरि सूतपुत्रो
वैकर्तनो वीर्यमदप्रतापी ।
प्रगृह्य दन्ताविव नागराजो
महाबलं सिंहमिवाजगाम ॥ २६॥

स पाण्डवं द्वादशभिः पृषत्कैर्
वैकर्तनश्शीघ्रमुपाजघान ।
विव्याध गात्रेषु हयांश्च सर्वान्
विराटपुत्रं च शरैर्विजघ्ने ॥ २७॥

तमापतन्तं समरे किरीटी
वैकर्तनं सर्वसमृद्धतेजाः ।
प्रच्छादयामास महाधनुष्मान्
न्यषेधयच्छत्रुगणांश्च वीरः ॥ २८॥

निहत्य कर्णस्य तथा किरीटी
पुरस्सरांश्चापि च पृष्ठगोपान् ।

[1]प्रतीपमभ्यागमदप्रमेयो
वितत्य पक्षौ [2]गरुडो यथोरगम् ॥ २९॥

तावुत्तमौ सर्वधनुर्धराणां
महाबलौ सर्वसपत्नसाहौ ।
कर्णं च पार्थं च निशम्य रथ्यौ,
दिदृक्षमाणाः कुरवः प्रतस्थुः ॥ ३०॥

तं पाण्डवस्स्पष्टमुदीर्णकोपः
कृतागसं कर्ण[3]मवेक्ष्य कोपात् ।
क्षणेन साश्वं सरथं ससूतम्
अन्तर्दधे मेघ इवाम्बुवृष्ट्या ॥ ३१॥

ततस्सयुग्यास्सरथास्सनागा
योधा विनेदुर्भरतर्षभाणाम् ।
अन्तर्हितं भीष्ममुखास्समीक्ष्य
किरीटिना कर्णरथं पृषत्कैः ॥ ३२॥

स चापि तानर्जुन[4]चापमुक्तान्
शरान् शरौघैः प्रतिहत्य तूर्णम् ।

---

1. म—प्रतीपमभ्यागम। क—प्रतीव। अ-च—प्रतीत
2. च-म—गरुडेव नागान्।
3. क-ख—मुदीक्ष्य हर्षात्। च-ङ-म—मुदीक्ष्य कोपात्।
4. क-ख-च-ङ-म—चाहु।

बभौ महात्मा सधनुस्सबाणस्
सविष्फुलिङ्गोऽग्निरिवाथ कर्णः ॥ ३३॥

ततस्तु जज्ञे तलतालघोषस्
सशङ्खभेरीपणवाकुलश्च ।
प्रक्ष्वेलितास्फोटितसिंहनादैर्
वैकर्तनं पूजयतां कुरूणाम् ॥ ३४॥

आधूतलाङ्गूलमहापताकं
रथोत्तमं श्रेष्ठतमं कुरूणाम् ।
गाण्डीवनिर्ह्रादकृतप्रणादं
किरीटिनं प्रेक्ष्य ननाद कर्णः ॥ ३५॥

पार्थोऽपि वैकर्तनमर्दयित्वा
साश्वं ससूतं सरथं सकेतुम् ।
ननाद हर्षात् सहसा किरीटी
पितामहं द्रोणकृपौ च दृष्ट्वा ॥ ३६॥

सिषेच पार्थं बहुभिश्शरौघैर्
वैकर्तनस्संयति तीक्ष्णवेगैः ।
वैकर्तनं चापि किरीटमाली
प्रच्छादयामास शितैश्शरौघैः ॥ ३७॥

तयोरमोघान् सृजतोश्शरौघान्
अजस्रयोरास महान् विमर्दः ।
राहुप्रमुक्ताविव चन्द्रसूर्यौ
क्षणान्तरेणानुददर्श लोकः ॥ ३८॥

हतास्तु पार्थेन नरप्रवीरा
भूमौ शयानास्सुमुखा[1]स्सुकेशाः ।
सुवर्णलोहायसवर्मगात्रा
वृक्षा यथा हैमवता निकृत्ताः ॥ ३९॥

तथा स शत्रून् समरे विनिघ्नन्
गाण्डीवधन्वा व्यधमत् सपत्नान् ।
चचार सङ्ख्ये विदिशो दिशश्च
दहन्निवाग्निर्वनमातपान्ते ॥ ४०॥

प्रकीर्णपर्णानि यथा वसन्ते
विधूनयन् वायुरिवाल्पसारान् ।
तथा सपत्नान् [2]व्यधमत् किरीटी
चचार सङ्ख्येऽतिरथो रथेन ॥ ४१॥

शत्रूनिवेन्द्रस्समरे किरीटी
विद्रावयंस्तद्रथसिंहवृन्दम् ।

1. घ—स्सुकेताः । अ-क-ख—स्सुघोषाः ।
2. क-ख—विधमन् ।

प्राच्छादय[1]त् सर्वमाधिज्यधन्वा
[2]वरेषुभिश्शत्रुगणाननेकान् ॥ ४२॥

उवाच कर्णं स किरीटमाली
शूरः कुरूणां प्रवरोऽभिगर्जन् ॥ ४३

अर्जुनः—

कर्ण यत् त्वं सभामध्ये बह्वबद्धं प्रभाषसे ।
न मे युधि समो[3]स्तीति तदिदं प्रत्युपस्थितम् ॥ ४४

सभायां पौरुषं प्रोच्य धर्ममुत्सृज्य केवलम् ।
कर्तुमिच्छसि यत् कर्म तन्मन्ये दुष्करं त्वया ॥ ४५

यत् त्वया कथितं पूर्वं नास्ति मत्सम इत्यपि ।
तत् सत्यं कुरु राधेय कुरुमध्ये मया सह ॥ ४६

यत् सभायां स्म पाञ्चालीं क्लिश्यमानां तथा त्वया ।
दृष्टवानास्मि तस्याद्य फल[4]माप्नुहि केवलम् ॥ ४७

धर्मपाशनिबद्धेन यन्मया मर्षितं तव ।
तस्य पापस्य राधेय फलं प्राप्नुहि दुर्मते ॥ ४८

एहि कर्ण मया सार्धम् इहाद्य कुरु वैशसम् ।
प्रेक्षकाः कुरवस्सन्तु सर्वे ते सहसैनिकाः ॥ ४९

1. क-ख-म—चारुरिष्टधन्वा। चोग्रमरीचिधन्वा।
2. अ-ब-ड-च-म—रथेषुभि।
3. ख—नास्ति। अ-क-च—ह्यस्ति। 4. क-ब-ड-म—मद्नुहि।

इदानीमेव [1]कर्ण त्वम् अपयातो रणान्मम ।
कस्माज्जीवसि राधेय निहतस्त्वनुजस्तव ॥ ५०

यो भ्रातरं पातयित्वा कस्त्यक्त्वा च रणाजिरम् ।
त्वदन्यः पुरुषस्सत्सु ब्रूयादेवं व्यवस्थितः ॥ ५१

कर्णः—

ब्रवीषि वाचा यत् पार्थ कर्मणा तत् समाचर ।
[2]विशेषितो हि त्वं वाचा न कर्माप्रतिमं भुवि ॥ ५२

यत् त्वया मर्षितं पूर्वं तदशक्तेन मर्षितम् ।
इति गृह्णीम ते पार्थ तमदृष्ट्वा पराक्रमम् ॥ ५३

धर्मपाशनिबद्धेन यत् त्वया मर्षितं पुरा ।
तथैव बद्धमात्मानम् अबद्ध इति मन्यसे ॥ ५४

न हि तावद्वने वासो यथोक्तं चरितस्त्वया ।
क्लिष्टस्त्वमर्थलोभाद्धि समयं छेत्तुमिच्छसि ॥ ५५

यदि चेन्द्रस्स्वयं पार्थ तव युद्ध्येत कारणात् ।
तथाऽपि न व्यथा काचिन्मम स्याद्विक्रमिष्यतः ॥ ५६

[3]अयं कौन्तेय कामस्ते नचिरात् समुपस्थितः ।
योत्स्यसे हि मया सार्धम्[4]अनुपश्यसि मे बलम् ॥ ५७

---

1. क-ख-घ-ङ-म—तावत् त्वं ।
2. क—अविषह्यो (च) अपि शोभसि । 3. अ—इदमर्धं नास्ति ।
4. क-ख-घ-ङ-च-म—अद्य पश्यामि ते बलम् ।

वैशम्पायनः—

इति कर्णो ब्रुवन्नेव बीभत्सुमपराजितम् ।
अभ्ययाद्विसृजन् बाणान् कायावरणभेदिनः ॥ ५८
प्रतिजग्राह तान् पार्थः प्रीयमाणो महारथः ॥ ५८॥

शरवर्षेण महता पर्जन्य इव वृष्टिमान् ।
अभीयाय हि बीभत्सुर् गाण्डीवं विक्षिपन् धनुः ॥ ५९॥

जिघांसुस्समरे कर्णं विससर्ज शरान बहून् ।
तान् कर्णः प्रतिजग्राह वायुवेगमिवाचलः ॥ ६०॥

[1]तयोर्देवासुरसमस् सन्निपातोऽभवन्महान् ।
किरतोश्शरजालानि निरन्तरमनन्तरम् ॥ ६१॥

उत्पेतुर्मेघजालानि घोररूपाणि सर्वशः ।
ववर्ष च रजो भौमं कर्णपार्थसमागमे ॥ ६२॥

न स्म सूर्यः प्रतपति न च वाति समीरणः ।
शरप्रच्छादितं व्योम छायाभूतमिवाभवत् ॥ ६३॥

गाण्डीवस्य च निर्घोषः कर्णस्य धनुषस्तथा ।
दह्यतामिव वेणूनाम् आसीत् परमदारुणः ॥ ६४॥

अर्जुनस्तु हयान् नागान् रथांश्चापि निपातयन् ।
क्षोभयामास तत् सैन्यं कर्णं विव्याध चासकृत् ॥ ६५॥

---

1. क—शरजालेन महता वर्षमाणमिवाम्बुदम् । [अधिकः पाठः]

ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत् ।
छिन्नधन्वा ततः कर्णश् शक्तिं चिक्षेप [1]वीर्यवान् ॥ ६६॥

तां शक्तिं समरे पार्थश् चिच्छेद निशितैश्शरैः ॥ ६७

ततोऽभिपेतुर्बहवो राधेयस्य पदानुगाः ।
तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम् ॥ ६८

अशेरताघृत्य महीं समग्रां
पार्थेषुमार्गेषु महाद्विपेन्द्राः ।
हिरण्यकक्ष्याश्शरजालचित्रा
यथा नगाः पावकजालनद्धाः ॥ ६९

तं शत्रुसेनाङ्गनिवर्हणानि
कर्माणि कुर्वन्तममानुषानि ।
वैकर्तनः पूर्वममृष्यमाणस्
समर्पयल्लक्ष्यमिवाशु दूरात् ॥ ७०

ततश्चतुर्भिस्तुरगान् विकृष्य
विव्याध कर्णोऽथ धनञ्जयस्य ।
षड्भिश्च सूतं दशभिर्हयांश्च
षष्ट्या च पार्थं त्रिभिरस्य केतुम् ॥ ७१

1. क-ख-ङ-म—वेगवान् ।

सविष्फुलिङ्गोज्ज्वलभीमघोषः
कोपेन्धनः केतुशिखश्शरार्चिः ।
कर्णाग्निरस्त्रानिलभीम[1]वेगो
बभौ दिधक्षन्निव पार्थकक्षम् ॥ ७२

स्वनेमिशङ्खस्वनभीमघोषश्
चलत्पताकोज्ज्वलभीमविद्युत् ।
पार्थाम्बुदश्शस्त्रशराम्बुधारः
कर्णानलं संशमयाञ्चकार ॥ ७३

तेनातिविद्धस्समरे किरीटी
प्रबोधितस्सिंह इव प्रसुप्तः ।
गाण्डीवधन्वा प्रवरः कुरूणां
प्रतत्वरे कर्णवधाय जिष्णुः ॥ ७४

स ब्राह्ममस्त्रं [2]युधि सव्यसाची
प्रादुश्चकाराद्भुतवीर्यकर्मा ।
सन्तापयन् कर्णरथं शरौघैर्
लोकानिमान् सूर्य इवांशुमाली ॥ ७५

स हस्तिनेवाभिहतो गजेन्द्रः
प्रगृह्य भल्लान् निशितान् निषङ्गात् ।

1. ख-ग-ङ-म—घातो ।
2. अ-ङ-च—यदि ।

आकर्णपूर्णं तु धनुर्विकृष्य
विव्याध बाणैरथ सूतपुत्रम् ॥ ७६

अथास्य बाहू सशिरो ललाटं
ग्रीवामुरस्स्कन्धभुजान्तरं च ।
कर्णस्य पार्थो युधि निर्बिभेद
वज्रैरिवाद्रिं भगवान महेन्द्रः ॥ ७७

स पार्थमुक्तानविपह्य बाणान्
गजो गजेनेव जितस्तरस्वी ।
विहाय सङ्ग्रामशिरोऽपयातो
वैकर्तनः पार्थशराभितप्तः ॥ ७८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ४७ ॥ गोग्रहणपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[अस्मिन्नध्याये ७८ श्लोकाः]

## ॥ द्विपञ्चाशोऽध्यायः ॥

द्रोणार्जुनयोर्युद्धवर्णनम् ॥ १ ॥ अर्जुनबाणाहतिविषण्णे द्रोणे अश्वत्थाम्ना तद्रक्षणायार्जुनप्रत्यभियानम् ॥ २ ॥ अत्रान्तरेऽर्जुनदत्तावकाशेन द्रोणेन रणादपयानम् ॥ ३ ॥

वैशम्पायनः—

जितं वैकर्तनं [1]मत्वा पार्थो वैराटिमब्रवीत् ॥ ॥

अर्जुनः—

स्थिरो भव त्वं सङ्ग्रामे जयोऽस्माकं नृपात्मज ।
यावच्छङ्खमुपाध्मास्ये द्विषतां रोमहर्षणम् ॥ १॥

अविक्लबमसम्भ्रान्तम् अव्यग्रहृदयेक्षणम् ।
याहि शीघ्रं यतो द्रोणो ममाचार्यो महारथः ॥ २॥

वैशम्पायनः—

तथा सङ्क्रीडमानस्य अर्जुनस्य रणाजिरे ।
बलं सत्वं च तेजश्च लाघवं चाभ्यवर्धत ॥ ३॥

तच्चाद्भुतमभिप्रेक्ष्य भयमुत्तरमाविशत् ॥ ४

उत्तरः—

अस्त्राणां तव दिव्यानां शरौघान् क्षिपतश्च ते ।
मनो मे मुह्यतेऽत्यर्थं तव दृष्ट्वा पराक्रमम् ॥ ५

1. क-ख-घ-म—दृष्ट्वा।

द्वैधीभूतं मनो मह्यं भयाद्भरतसत्तम ।
अदृष्टपूर्वं पश्यामि तव गाण्डीवनिस्वनम् ॥ ६

तव बाहुबलं चैव धनुः प्राकर्षतो बहु ।
तव तेजो दुराधर्षं यथा विष्णोस्त्रिविक्रमे ॥ ७

वैशम्पायनः—

तमुत्तरश्चित्तमवेक्ष्य गाण्डिवं
शरांश्च मुक्तान् सहसा किरीटिना ।
भीतोऽब्रवीदर्जुनमाजिमध्ये
नाहं तवाश्वान् विषहे नियन्तुम् ॥ ८

तमब्रवीदीषदिव प्रहस्य
गाण्डीवधन्वा द्विषतां निहन्ता ॥ ८॥

अर्जुनः—

मया सहायेन कुतोऽस्ति ते भयं
प्रेह्युत्तराश्वाननुमन्त्र्य वाहय ॥ ९

वैशम्पायनः—

आश्वासितस्तेन धनञ्जयेन
वैराटिरश्वान् प्रतुतोद शीघ्रम् ।
धनञ्जयश्चापि विकृष्य चापं
विष्फारयामास महेन्द्रकल्पः ॥ १०

उत्तरं चैव बीभत्सुर् अब्रवीत् [1]पुनरेव हि ॥ १०॥

अर्जुनः—

न भेतव्यं मया सार्धं तात सङ्ग्राममूर्धनि ॥ ११

राजपुत्रोऽसि भद्रं ते कुले महति मात्स्यके ।
जातस्त्वं क्षत्रियकुले न विषीदितुमर्हसि ॥ १२

धृतिं कृत्वा सुविपुलां राजपुत्र रथं मम ।
युध्यमानस्य समरे शत्रुभिस्सह वाहय ॥ १३

वैशम्पायनः—

उक्त्वा तमेवं बीभत्सुर् अर्जुनः पुनरब्रवीत् ।
पाण्डवो रथिनां श्रेष्ठो भारद्वाजं समीक्ष्य तु ॥ १४

अर्जुनः—

यत्रैषा काञ्चनी वेदिर् दृश्यतेऽग्निशिखोपमा ।
उच्छ्रिता काञ्चने दण्डे पताकाभिरलङ्कृता ॥ १५

तत्र मां वह भद्रं ते द्रोणं [2]योत्स्यामि सत्तमम् ।
भारद्वाजेन योत्स्येऽहम् आचार्येण महात्मना ॥ १६

अमी शोणाः प्रकाशन्ते तुरगास्साधुवाहिनः ।
युक्ता रथवरे यस्य सर्वशिक्षाविशारदाः ॥ १७

---

1. क-ख-घ-म—पुनरर्जुनः ।
2. क-ख-घ-म—यास्यामि ।

यत्तो रथवरे शूरस् सर्वशस्त्रभृतां वरः ।
स्निग्धवैडूर्यसङ्काशस् ताम्राक्षः प्रियदर्शनः ॥ १८
[1]पीनदीर्घभुजश्श्रीमान् बलवीर्यसमन्वितः ।
सर्वलोकधनुश्श्रेष्ठस् सर्वलोकेषु पूजितः ॥ १९
अङ्गिरोशनसोस्तुल्यो नये बुद्धिमतां वरः ॥ १९॥
चत्वारो निखिला वेदास् साङ्गोपाङ्गास्सलक्षणाः ।
धनुर्वेदश्च कात्स्न्र्येन ब्राह्मं चास्त्रं प्रतिष्ठितम् ॥ २०॥
पुराणमितिहासश्च अर्थविद्या च मानवी ।
भारद्वाजे समस्तानि सर्वाण्येतानि साम्प्रतम् ॥ २१॥
क्षमा दमश्च सत्यं च तेजो मार्दवमार्जवम् ।
प्रतिष्ठिता गुणा यस्मिन् बहवो द्विजसत्तमे ॥ २२॥
यस्याहमिष्टस्सततं मम चेष्टस्सदा च यः ।
क्षत्रधर्मं पुरस्कृत्य तेन योत्स्यामि संयुगे ॥ २३॥
आचार्यं प्रापयेदानीं ममोत्तर महारथम् ।
अपरं पश्य सङ्ग्रामम् अद्भुतं मम तस्य च ॥ २४॥

वैशम्पायनः—

उत्तरस्त्वेवमुक्तोऽश्वांश् चोदयामास तं प्रति ।
आजगामार्जुनरथो भारद्वाजरथं प्रति ॥ २५॥

---

1. ख—आदित्य इव तेजस्वी ।

तमापतन्तं [1]सम्प्रेक्ष्य पाण्डवं सरथं रणे ।
द्रोणोऽप्यभ्यद्रवत् पार्थं मत्तो मत्तमिव द्विपम् ॥ २६॥

स तु रुक्मरथं दृष्ट्वा कौन्तेयस्समभिद्रुतम् ।
आचार्यं तं महाबाहुः प्राञ्जलिर्वाक्यमब्रवीत् ॥ २७॥

अर्जुनः—

उषितास्स्मो वने वासं प्रतिकर्म चिकीर्षवः ।
कोपं नार्हसि नः कर्तुं सदा समर[2]दुर्जय ॥ २८॥

अहं तु ताडितः पूर्वं प्रहरेयं त्वयाऽनघ ।
इति मे वर्तते बुद्धिस् तद्भवान् क्षन्तुमर्हति ॥ २९॥

वैशम्पायनः—

ततः प्राध्मापयच्छङ्खं भेरीपणवनादितम् ।
व्यक्षोभत बलं सर्वम् उद्धूत [3]इव सागरः ॥ ३०॥

[4]ततस्तु प्राहिणोद्द्रोणश् शराणामेकविंशतिम् ।
अप्राप्तानेव तान् पार्थश् चिच्छेद लघुहस्तवान् ॥ ३१॥

ततश्शरसहस्रेण रथं पार्थस्य वीर्यवान् ।
अवाकिरत् ततो द्रोणश् शीघ्रहस्तं प्रदर्शयन् ॥ ३२॥

एवं प्रववृधे युद्धं भारद्वाजकिरीटिनोः ॥ ३३

1. ख-घ-ङ-च-म—वेगेन । 2. घ-ङ-च-म—दुर्मद ।
3. क-ख-घ-म—मिव सागरम् ।
4. ङ-च-म—इतः सार्धं श्लोकद्वयं नास्ति ।

अश्वाञ्शोणान् महावेगान् हंसवर्णैस्तु वाजिभिः ।
मिश्रितान् समरे दृष्ट्वा व्यस्मयन्त पृथग्जनाः ॥ ३४

[1]रथेन रथमाहत्य पार्थस्य स परन्तपः ।
हर्षयुक्तस्तदाऽऽचार्यः प्रत्यगृह्णात् स पाण्डवम् ॥ ३५

समाश्लिष्टाविवान्योन्यं द्रोणपाण्डवयोर्ध्वजौ ।
दृष्ट्वा प्राकम्पत मुहुर् भारतानां महाचमूः ॥ ३६

तत्तु युद्धं प्रववृते ह्याचार्यस्यार्जुनस्य च ।
विमुञ्चतोश्शरानुग्रान विशिखान् दीप्ततेजसः ॥ ३७

तौ वीरौ वीर्यसम्पन्नौ दृष्ट्वा सङ्ग्राममूर्धनि ।
आचार्यशिष्यौ रथिनौ कृतवीर्यौ तरस्विनौ ॥ ३८

उभौ विश्रुतकर्माणावुभौ श्रमगतौ जये ।
उभावतिरथौ लोके ह्युभौ परपुरञ्जयौ ॥ ३९

क्षिपन्तौ शरजालानि क्षत्रियान् मोह आविशत् ॥ ३९॥
व्यस्मयन्त जनास्सर्वे द्रोणार्जुनसमागमे ।
नराणां [2]ब्रुवतां वाक्यं श्रूयते सुमहास्वनः ॥ ४०॥

द्रोणं हि समरे कोऽन्यो योद्धुमर्ह[3]ति फल्गुनात् ।
रौद्रः क्षत्रियधर्मोऽयं गुरुं वै यदयोधयत् ॥ ४१॥

---

1. क-ख-घ-ङ-च-म—रथं रथेन पार्थस्य समापत्य।
2. क-ख-ङ-च-म—सृजतां।
3. क-ख-घ-च-म—स्यथार्जुनात्।

इत्यब्रुवञ्जनास्तत्र सङ्ग्रामशिरसि स्थिताः ।
तौ समीक्ष्य तु संरब्धौ सन्निकृष्टौ महारथौ ॥ ४२॥

छादयेतां शरौघैस् तावन्योन्यमपराजितौ ।
संयुगे सम्प्रकाशेतां कालसूर्याविवोदितौ ॥ ४३॥

विष्फार्य च महाचापं हेमपृष्ठं दुरानमम् ।
संरब्धस्तु तदा द्रोणः प्रत्ययुध्यत फल्गुनम् ॥ ४४॥

स सायकमयैर्जालैर् अर्जुनस्य रथं प्रति ।
भानुमद्भिश्शिलाधौतैर् बाणैः प्राच्छादयद्द्विजः ॥ ४५॥

अर्जुनस्तु तदा द्रोणं महावेगैर्महारथः ।
विव्याध शतशो बाणैर् धाराभिरिव पर्वतम् ॥ ४६॥

कालमेघ इवोष्णान्ते फल्गुनस्समवाकिरत् ॥ ४७

तस्य जाम्बूनदमयैश् [1]चित्रैश्चापच्युतैश्शरैः ।
प्राच्छादयद्रथश्रेष्ठं भारद्वाजोऽर्जुनस्य वै ॥ ४८

तथैव दिव्यं गाण्डीवं [2]धनुरायम्य चार्जुनः ।
शत्रुघ्नं वेगवत् सृष्टं भारसाधनमुत्तमम् ॥ ४९

शोभते स्म महाबाहुर् गाण्डीवं विक्षिपन् धनुः ॥ ४९॥

---

1. क-ख-घ-ङ-च-म—शितै ।
2. ङ—धनुरानम्य चार्जुनः । क—धनुरुद्यम्य । ख—धनुरादाय सोऽ ।
अ—दिव्यमायम्य ।

शरांश्च [1]विसृजंश्चित्रान् सुवर्णविकृतान् बहून् ।
प्राच्छादयदमेयात्मा भारद्वाजरथं प्रति । ५०॥
द्रोणचापविनिर्मुक्तान् बाणैर्बाणा[2]नहारयत् ॥ ५१
सरथोऽप्यचरत् पार्थः प्रेक्षणीयो महारथः ।
युगपद्दिक्षु सर्वासु सर्वतोऽस्त्राण्यवासृजत् ॥ ५२
आददानं शरान् घोरान् सन्दधानं च पाण्डवम् ।
विसृजन्तं च कौन्तेयं न स्म पश्यन्ति लाघवात् ॥ ५३
एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः ।
नादृश्यत ततो द्रोणो नीहारेणेव पर्वतः ॥ ५४
मरीचिविकचस्येव राजन् भानुमतो वपुः ।
आसीत् पार्थस्य सुमहद् वपुश्शर[3]शतार्पितम् ॥ ५५
क्षिपतश्शरजालानि कौन्तेयस्य महात्मनः ।
तान् विधूय शरान् घोरान् द्रोणोऽपि समितिञ्जयः ॥ ५६
बभासे तिमिरं व्योम्नि विधूय सविता यथा ॥ ५६॥
अग्निचक्रोपमं घोरं मण्डलीकृत[4]माहवे ।

---

1. अ-ङ-च—व्यसृजच्च ।
2. क-ख-घ-च—नघारयत् । म—बाणान् बाणैरवारयत् ।
ङ—नदारयत् ।
3. क-घ-ङ-थ-म—शतार्चिषः । ख—शताचितम् ।
4. क-घ—कार्मुकम् । ख—ममणम् ।

विकृष्य सुमहच्चापं मेघस्तनितनिस्वनम् ॥ ५७॥

असकृन्मुञ्चतो बाणान् ददृशुः कुरवो युधि ॥ ५८

दिक्षु सर्वासु विपुलश् शब्दश्च श्रूयते जनैः ॥ ५८॥

द्रोणस्यापि धनुर्घोषो विद्युत्स्तनितनिस्वनः ।
अभवद्विस्मयकरस् सैन्यानां भरतर्षभ ॥ ५९॥

तस्य जाम्बूनदमयैर् दीप्तैरग्निसमैश्शरैः ।
प्राच्छादयदमेयात्मा दिशस्सूर्यस्य च प्रभाम् ॥ ६०॥

ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।
वियद्गतानां चरतां दृश्यन्ते [1]बहुलाः प्रभाः ॥ ६१॥

शरासनात् तु द्रोणस्य प्रभवन्ति स्म सायकाः ।
[2]एकदीर्घा इवापाङ्गाः प्रदृश्यन्ते महाशराः ॥ ६२॥

आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ ६३

एवं सुवर्णविकृतान् मुञ्चन्तौ च बहून् शरान् ।
आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ॥ ६४

तयोश्शराश्च विबभुः कङ्कबर्हिणवाससः ।
पङ्क्त्यश्शरदि मत्तानां सारसानामिवाम्बरे ॥ ६५

---

1. क-ख—बहुशः ।　　घ-च-म—बहवो व्रजाः ।
2. क-ङ—एको दीर्घ इवापाङ्गात् ।　　ख—एकदीर्घा इवाभान्तः ।
घ—एको दीर्घ इवापाङ्गः ।

तत्तु युद्धं महद्घोरं तयोस्संरब्धयोरभूत् ।
अत्यद्भुतमचिन्त्यं च वृत्रवासवयोरिव ॥ ६६

महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैर् अन्योन्यमभिजघ्नतुः ॥ ६७

अथ त्वाचार्यमुख्येन शरान् सृष्टान् शिलाशितान् ।
अवारयच्छितैर्बाणैर् अर्जुनो जयतां वरः ॥ ६८

दर्शयन्नैन्द्रमात्मानम् उग्रमुग्रपराक्रमः ।
इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ॥ ६९

जिघांसन्तं नरव्याघ्रम् अर्जुनं भीमतेजसम् ।
विव्याध निशितैर्द्रोणश् शरैस्सन्नतपर्वभिः ॥ ७०

हृष्टस्समभवद्द्रोणो रणे शौण्डः प्रतापवान् ।
अर्जुनेन समं क्रीडन् शरैस्सन्नतपर्वभिः ॥ ७१

तौ व्यदारयतां शूरौ सन्नद्धौ रणशोभिनौ ।
उदीरयन्तौ दिव्यानि ब्राह्माण्यस्त्राणि भागशः ॥ ७२

पार्थस्स समरे शूरो दर्शयन् वीर्यमात्मनः ।
सुमहास्त्रैर्महात्मानं द्रोणं प्राच्छादयच्छरैः ॥ ७३

अस्त्रैरस्त्राणि संवार्य पार्थो द्रोणमवारयत् ॥ ७३॥

तयोरासीत् सम्प्रहारः क्रुद्धयोर्नरसिंहयोः ।

अमृष्यमाणयोस्सङ्ख्ये बलिवासवयोरिव ॥ ७४॥
दर्शयेतां महास्त्राणि भारद्वाजार्जुनावुभौ[1] ॥ ७५

ऐन्द्रं वायव्यमाग्नेयम् अस्त्रमस्त्रेण पाण्डवः ।
मुक्तं मुक्तं द्रोणचापाद् ग्रसते स्म पुनः पुनः ॥ ७६

एवं शूरौ महेष्वासौ विसृजन्तौ [2]शराञ्शितान् ।
एकच्छायमकुर्वातां गगनं शरवृष्टिभिः ॥ ७७

ततोऽर्जुनेन मुक्तानां पततां च शरीरिषु ।
पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ॥ ७८

ततो नागा रथाश्चाश्च सादिनश्च विशाम्पते ।
शोणिताक्ताश्च दृश्यन्ते पुष्पिता इव किंशुकाः ॥ ७९

बाहुभिश्च सकेयूरैर् निकृत्तैश्च महारथैः ।
सुवर्णचित्रैः कवचैर् ध्वजैश्च विनिपातितैः ॥ ८०

योधैश्च निहतैस्तत्र पार्थबाणाभिपीडितैः ।
बलमासीत् समुद्भ्रान्तं द्रोणार्जुनसमागमे ॥ ८१

विधून्वानौ तु तौ वीरौ धनुषी भारसाधने ।
प्राच्छादयेतामन्योन्यं दिधक्षन्तौ वरेषुभिः ॥ ८२

[3]अन्तरिक्षे तु शब्दोऽभूद् द्रोणं तत्र प्रशंसताम् ॥ ८२॥

---

1. क-ख-घ-च-म—नौ रणे। 2. ख-घ-ङ—शिलाशितान्।
3. ख-घ-च-म—अथान्तरिक्षे नादोऽ।

दुष्करं कृतवान् द्रोणो यदर्जुनमयोधयत् ।
प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम् ॥ ८३॥

जेतारं सर्व[1]सैन्यानां सर्वेषां च महारथम् ॥ ८४

अविभ्रमं च शिक्षां च लाघवं दूरपातनम् ।
पार्थस्य समरे दृष्ट्वा द्रोणस्यासीच्च विस्मयः ॥ ८५

तत् प्रवृत्तं चिरं घोरं तयोर्युद्धं महात्मनोः ।
अवर्तत महारौद्रं लोकसंक्षोभकारकम् ॥ ८६

अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणम् ।
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभ ॥ ८७

तस्य बाणमयं वर्षं शलभानामिवाभवत् ।
न च बाणान्तरे तस्य वायुश्शक्नोति सर्पितुम् ॥ ८८

अभीक्ष्णं सन्दधानस्य बाणानुत्सृजतस्तदा ।
ददृशे नान्तरं किञ्चित् पार्थस्यापततोऽपि च ॥ ८९

युद्धे तु कृतशीघ्रास्त्रे वर्तमाने[2]ऽतिदारुणे ।
शीघ्राच्छीघ्रतरं पार्थश् शरानन्यानुदैरयत् ॥ ९०

ततश्शतसहस्राणि शराणां नतपर्वणाम् ।
युगपत् प्रापतंस्तत्र द्रोणस्य रथमान्तिकात् ॥ ९१

---

1. क-ख-म—देवानां । घ—भूतानां ।
2. ख-क-घ-म—सुदारुणे ।

विकीर्यमाणे द्रोणे तु शरैर्गाण्डीवधन्वना ।
हाहाकारो महानासीत् सैन्यानां भरतर्षभ ॥ ९२

पाण्डवस्य च शीघ्रास्त्रं [1]देवाश्च समपूजयन् ।
गन्धर्वाप्सरसश्चैव ये च तत्र समागताः ॥ ९३

द्रोणं युद्धार्णवे मग्नं दृष्ट्वा पुत्रः प्रतापवान् ।
ततो वृन्देन महता रथिनां रथयूथपः ॥ ९४
आचार्यपुत्रस्तु शरैः पाण्डवं प्रत्यवारयत् ॥ ९४॥

अश्वत्थामा तु तत् कर्म हृदयेन महात्मनः ।
पूजयामास पार्थस्य कोपं चास्य तदाऽकरोत् ॥ ९५॥

स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे ।
किरन् छरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ९६॥

[2]आवृत्य स महाबाहुर् यतो [3]द्रौणिस्ततो ययौ ।
अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ॥ ९७॥

स तु लब्धान्तरस्तूर्णम् अपायाज्जवनैर्हयैः ।
[4]भिन्नवर्मध्वजरथो निकृत्तः परमेषुभिः ॥ ९८॥

---

1. क-ख-घ-च-म—मघवान् समपूजयत् ।
2. ख-घ-च-म—आवर्त्य स ।
3. म—द्रोणस्ततो हयान् ।　　क—द्रौणिं तमभ्ययात् ।
　　ख-ङ—द्रौणिस्ततो हयान् ।
4. ङ-च-म—छिन्न ।

पराजिते [1]परं द्रोणे द्रोणपुत्रस्समागतः ।
सदण्ड इव रक्ताक्षः कृतान्तस्समरे स्थितः ॥ ९९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ ४७ ॥ गोग्रहणपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[अस्मिन्नध्याये ९९॥ श्लोकाः]

---

## ॥ त्रिपञ्चाशोऽध्यायः ॥

अर्जुनेन द्रौणिपराभवनम् ॥ १ ॥

---

वैशम्पायनः—

तं पार्थः प्रतिजग्राह वायुवेग [2]इवोद्धतः ।
शरजालेन महता वर्षमाण इवाम्बुदः ॥ १

तयोर्देवासुरसमस्संनिपातो महानभूत् ।
किरतोश्शरजालानि वृत्रवासवयोरिव ॥ २

न स्म सूर्यस्तदा भाति न च वाति समीरणः ।
शरगाढे कृते व्योम्नि छायाभूतमिवाभवत् ॥ ३

---

1. क-ख-ग-ङ-च-म—रणे ।
2. ग—इवोत्थितः । ख—मिवाचलः ।

महांश्चटचटाशब्दो योधयोर्युध्यमानयोः ।
दह्यतामिव वेणूनाम् आसीत् परमदारुणः ॥ ४

हयांस्तस्यार्जुनस्सङ्ख्ये कृतवानल्पतेजसः ।
[1]ते राजन्न प्रजानन्ति दिशं काञ्चन मोहिताः ॥ ५

ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः ।
विवरं सूक्ष्ममालोक्य ज्यां चुनोद क्षुरेण च ॥ ६

तदस्यापूजयन् देवाः कर्म दृष्ट्वाऽतिमानुषम् ।
न शक्तोऽन्यः पुमान् स्थातुम् ऋते द्रौणेर्धनञ्जयम् ॥ ७

ततो द्रौणिर्धनूंष्यष्टौ [2]व्यतिक्रम्य नरर्षभः ।
पुनरभ्यहनत् पार्थं हृदये कङ्कपत्रिभिः ॥ ८

ततः पार्थो महाबाहुः प्रहसन् स्वनवत् तदा ।
योजयामास च तदा मौर्व्या गाण्डीवमोजसा ॥ ९

तं दृष्ट्वा क्रुद्धमायान्तं प्रभिन्नमिव कुञ्जरम् ।
क्रुद्धस्समाह्वयामास द्रौणिर्युद्धाय भारत ॥ १०

ततोऽर्धचन्द्रमाहत्य तेन पार्थस्समाहतः ।

---

1. अ-ङ—इदमर्धं नास्ति ।
2. म—व्यपक्रम्य नरर्षभः । क—व्यपक्रम्य परन्तपः ।
ख—व्यपाक्रम्य । च—उपाक्रम्य ।

[1]वारणेनेव मत्तेन मत्तो वारणयूथपः ॥ ११
ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः ।
रणमध्ये द्वयोरेव सुमहद्रोमहर्षणम् ॥ १२
तौ वीरौ कुरवस्सर्वे ददृशुर्विस्मयान्विताः ।
युध्यमानौ महात्मानौ द्विरदाविव सङ्गतौ ॥ १३
तौ समाजघ्नतुर्वीरौ परस्परममर्षिणौ ।
शरैराशीविषाकारैर् ज्वलद्भिरिव पावकैः ॥ १४
अक्षयाविषुधी दिव्यौ पाण्डवस्य महात्मनः ।
तेन पार्थो रणे शूरस् तस्थौ गिरिरिवाचलः ॥ १५
अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे ।
जग्मुः परिक्षयं शीघ्रम् अभूत् तेनाधिकोऽर्जुनः ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

॥ ४७ ॥ गोग्रहणपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

[अस्मिन्नध्याये १६ श्लोकाः]

---

## ॥ चतुःपञ्चाशोऽध्यायः ॥

अर्जुनेन युगपद् द्रोणादिभिः सह युद्धम् ॥ १ ॥

वैशम्पायनः—

एतस्मिन्नन्तरे तत्र [1]महासत्त्वपराक्रमः ।
[2]आजगाम महावीर्यः कृपश्शस्त्रभृतां वरः ॥ १
अर्जुनं प्रतियोद्धुं वै युद्धकामी महारथः ॥ १॥
अथ द्रौणे रथं त्यक्त्वा कृपस्य रथमुत्तमम् ।
आजगामार्जुनस्तूर्णं सूर्यवैश्वानरप्रभम् ॥ २॥
तौ वीरौ सूर्यसङ्काशौ योत्स्यमानौ महारथौ ।
वार्षिकाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ ३॥
प्रगृह्य गाण्डिवं लोके विश्रुतं पुनरर्जुनः ।
अभ्ययाद्भरतश्रेष्ठो विनिघ्नञ्शरमालया ॥ ४॥
कृपश्च धनुरादाय तथैवार्जुनमभ्ययात् ॥ ५
प्रगृह्य बलवच्चापं नाराचान् रक्तभोजनान् ।
कृपश्चिक्षेप पार्थाय शतशोऽथ सहस्रशः ॥ ६
जीमूत इव घर्मान्ते [3]शरवर्षममुञ्चत ।

1. क—कृपश्शस्त्रभृतां वरः ।    ख-घ-ङ—महावीर्य ।
2. क—आजगामेत्यर्धं नास्ति    3. क-ख-म—शरवर्षं विमुञ्चति ।

नन्दयन् सुहृदस्सर्वान् प्रत्ययुध्यत फल्गुनम् ॥ ७
विकृष्य बलवच्चापं पाण्डवोऽमितविक्रमः ।
चचार समरे पार्थश् चित्रान् मार्गान् प्रदर्शयन् ॥ ८
सर्वांश्चैव दिशो बाणैः प्रदिशश्च महारथः ।
एकच्छायमिवाकाशं सर्वतः कृतवान् प्रभुः ॥ ९
प्राच्छादयदमेयात्मा पार्थश्शरशतैः कृपम् ।
उद्गत[1]स्समरे पार्थो धाराभिरिव पर्वतम् ॥ १०
स शरैरर्पितः क्रुद्धश् शितैरग्निशिखोपमैः ।
कृपो बभूव समरे विधूमोऽग्निरिव ज्वलन् ॥ ११
ततश्शरसहस्रेण पार्थमप्रतिमौजसम् ।
[2]अर्दयित्वा महा[3]नादम् अकरोत् समरे कृपः ॥ १२
ततः कनकपुङ्खेन शरेण नतपर्वणा ।
बिभेद समरे पार्थः कृपस्य ध्वजमुत्तमम् ॥ १३
ततः पश्चान्महातेजा नाराचान् सूर्यसन्निभान् ।
जग्राह समरे पार्थो भूयो बहुशिलीमुखान् ॥ १४
तैस्तदानीं महाबाहुः कृपस्य रथरक्षिणः ।
जघान क्षत्रियश्रेष्ठान् युध्यमानान् महा[4]रथः ॥ १५

---

1. क—समयेऽमोघो। ख-म—समरे मेघो। घ—समये।
2. ख-घ-ङ-म—अर्पयित्वा।
3. क-ख-घ-म—नादं ननाद। 4. क-ख-घ-म—रथान्।

चन्द्रकेतुस्सुकेतुश्च चित्राश्वो मणिमांस्तदा ।
मुञ्जमौलिश्च विक्रान्तो हेमवर्मा भयावहः ॥ १६

सुरथोऽतिरथश्चैव सुषेणोऽरिष्ट एव च ।
[1]धृष्टकेतुश्च सानीकास् ते निपेतुर्गतासवः ॥ १७

तान् निहत्य ततः पार्थो निमेषादिव भारत ।
पुनरन्यान् [2]समादाय त्रयोदश शिलीमुखान् ॥ १८

अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ।
षष्ठेन स शिरस्सङ्ख्ये [3]शरेण कृपसारथेः ॥ १९

त्रिभिस्त्रिवेणुं बलवान् द्वाभ्यामक्षं महाबलः ।
द्वादशेन तु भल्लेन कृपस्य सशरं धनुः ॥ २०

छित्त्वा वज्रनिकाशेन फल्गुनः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमः प्रत्यविध्यत् स्तनान्तरे ॥ २१

स छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ २१॥

अथ शक्तिं परामृश्य सूर्यवैश्वानरप्रभाम् ।
चिक्षेप सहसा क्रुद्धः पार्थायाद्भुतकर्मणे ॥ २२॥

तामर्जुनस्तथारूपां शक्तिं हेमपरिष्कृताम् ।

---

1. क—सकेतवस्सहानीका। ख-म—नृकेतुश्च सहानीका ।
घ-च—धृष्टकेतुस्सहानीका ।
2. क-ख-म—समादत्त । 3. क-ख-घ—कृपस्य रथसारथेः ।

[1]आपतन्तीं महोल्काभां चिच्छेद दशभिश्शरैः । २३॥
साऽपतद्दशधा भूमौ पार्थेन निहता शरैः ॥ २४

शक्त्यां तु विनिकृत्तायां विरथश्शरपीडितः ।
गदापाणिरवप्लुत्य रथात् तूर्णममित्रहा ॥ २५
गदां चिक्षेप सहसा [2]पार्थायामिततेजसे ॥ २५॥

सा तु मुक्ता गदा गुर्वी कृपेण सुपरिष्कृता ।
अर्जुनस्य शरैर्नुन्ना प्रतिमार्गं जगाम सा ॥ २६॥

अथ खड्गं समुद्धृत्य शतचन्द्रं च भानुमत् ।
इयेष पाण्डवं हन्तुं कृपो लघुपराक्रमः ॥ २७॥

स शरद्वत्सुतस्तूर्णं महाचार्यस्सुशिक्षितः ।
[3]चचाल खेचर इव क्रमाच्चर्मासिधृग्भुवि ॥ २८॥
ततः क्षुराग्रैः कौन्तेयो दशभिः खड्गचर्मणी ॥

निमेषादिव चिच्छेद तदद्भुतमिवाभवत् ॥ २९॥
विषण्णवदनस्तत्र युद्धादपगतोद्यमः ।
[4]अश्वत्थाम्नस्तु स रथं कृपस्समभिपुप्लुवे ॥ ३०॥

---

1. च—रुरोध सायकैस्तीक्ष्णैरर्धचन्द्रमुखैश्च ताम् । [अधिकः पाठः]
2. क-ख-म—पाण्डवायामितौजसे ।
3. क—खेचरीव चचारैकः । ख-ङ—खेचरो विचचारैकः ।
घ-म—खेचरेव चचारैकः ।
4. ख-ङ—दन्तैर्दन्तच्छदं दष्ट्वा चुकोप हृदि दीर्घवत् ।
अवृत्विति पुनश्चोक्त्वा युद्धापगमनोद्यतः ॥ [अधिकः पाठः]

स्वस्रीयस्य महातेजा जग्राह च धनुः पुनः ॥ ३१
[1]एतस्मिन्नन्तरे क्रुद्धो भीष्मो द्रोणमथाब्रवीत् ।
दृष्ट्वा कृपं फल्गुनेन पीडितं चोर्जितं च तम् ॥ ३२

भीष्मः—

एकैकमस्मान् सङ्ग्रामे पराजयति फल्गुनः ॥ ३२॥

अहं द्रोणश्च कर्णश्च द्रौणिर्गौतम एव च ।
अन्ये च बहवश्शूरा वयं जेष्याम वासविम् ॥ ३३॥

वैशम्पायनः—

समागम्य तु ते सर्वे भीष्मद्रोणमुखा रथाः ।
अर्जुनं सहिता यत्ताः प्रत्ययुध्यन्त भारत ॥ ३४॥

स सायकमयैर्जालैस् सर्वतस्तान् महारथान् ।
प्राच्छादय[2]च्छरौघैस्तु नीहार इव पर्वतान् ॥ ३५॥

नदद्भिश्च महानागैर् हेषमाणैश्च वाजिभिः ।
भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् ॥ ३६॥

नराश्वकायान् निर्भिद्य लौहानि कवचानि च ।
पार्थस्य शरवर्षाणि न्यपतञ्शतशः क्षितौ ॥ ३७॥

त्वरमाणश्शरानस्यन् पाण्डवस्तु प्रकाशते ।
मध्यन्दिनगतोऽर्चिष्मान् छरदीव दिवाकरः ॥ ३८॥

अविषह्य शरान् सर्वे पार्थचापच्युतान् रणे ।
उदक्प्रयान्ति वित्रस्ता रथेभ्यो रथिनस्तदा ॥ ३९॥

---

1. अ-क-घ-च-म—अर्धपञ्चकं न दृश्यते ।
2. क—दमेयात्मा । ख-घ—च्छरौघैस्तान् ।
म—प्राच्छादयद्यथश्रेष्ठो नीहार ।

सादिनश्चाश्वपृष्ठेभ्यो [1]भूमेश्चापि पदातयः ॥ ४०

शरैस्तु ताड्यमानानां कवचानां महात्मनाम् ।
ताम्रराजतलोहानां [2]समपद्यन्त राशयः ॥ ४१

छन्नमायोधनं जज्ञे शरीरैर्गतचेतसाम् ।
श्रान्त्या गलितशस्त्राणां पततामश्वसादिनाम् ॥ ४२

शून्यान् कुर्वन् रथोपस्थान् मानवैरास्तृणोन्महीम् ॥ ४२॥

प्रनृत्यन्निव सङ्ग्रामे चापहस्तो धनञ्जयः ।
शिरांस्यपातयत् सङ्ख्ये क्षत्रियाणां नरर्षभ ॥ ४३॥

श्रुत्वा गाण्डीवनिर्घोषं विष्फूर्जितमिवाशनेः ।
त्रस्तानि सर्वसैन्यानि [3]व्यलीयन्ति स्म भागशः ॥ ४४॥

कुण्डलोष्णीषधारीणि जातरूपस्रजानि च ।
पतितानि स्म दृश्यन्ते शिरांसि रणमूर्धनि ॥ ४५॥

विशिखोन्माथितैर्गात्रैर् बाहुभिश्च सकार्मुकैः ।
सहस्ताभरणै [4]श्छिन्नैः प्रच्छन्ना भाति मेदिनी ॥ ४६॥

शिरसां पात्यमानानां समरे निशितैश्शरैः ।
अश्मवृष्टिरिवाकाशाद् अभवद्भरतर्षभ ॥ ४७॥

---

1. क-ख-च-म—भूमौ चापि ।
2. क-ख-च-ङ-म—प्रादुरासीन्महास्वनः ।
3. क-ख-च-म—व्यवलीयन्त ।
4. क-च-म—श्चान्यैः । ख—श्चैव ।

दर्शयित्वा तथाऽऽमानं रौद्रं रुद्रपराक्रमः ।
जघान समरे योधान् छतशोऽथ सहस्रशः ॥ ४८॥

तथाऽवरुद्धश्चारण्ये दश वर्षाणि त्रीणि च ।
क्रोधाग्निमुत्ससर्जाजौ धार्तराष्ट्रेषु पाण्डवः ॥ ४९॥

[1]तस्य तद्हतस्सैन्यं दृष्ट्वा चास्य पराक्रमम् ।
सर्वे शान्तिपरा योधा धार्तराष्ट्रस्य भारत ॥ ५०॥

यथा नलवनं नागः प्रभिन्नष्षाष्टिहायनः ।
एवं सर्वानपामृद्गाद् अर्जुनश्शस्त्रतेजसा ॥ ५१॥

विद्राव्य [2]पतितं सैन्यं त्रासयित्वा महारथान् ।
अर्जुनो जयतां श्रेष्ठः पर्यावर्तत भारत ॥ ५२॥

[3]तस्य मार्गान् विचरतो निघ्नतश्च रणाजिरे ।
[4]प्रावर्तत नदी घोरा शोणितान्त्रतरङ्गिणी ॥ ५३॥

अस्थिशैवालसम्बाधा सङ्ग्रामे पार्थनिर्मिता ।
शरचापप्लवा घोरा मांसशोणितकर्दमा ॥ ५४॥
[5]करवालविपाठीना चामरोष्णीषफेनिला ॥ ५५

1. घ—तस्य तद्हतस्सैन्यं समरे निशितैश्शरैः ।　　[अधिकः पाठः]
2. क—पततस्सैन्यान् । (घ) ख—भारतं ।
ङ—पततां ।　म—च ततः ।
3. म—इदमर्धं नास्ति ।
4. क-ख-घ-म—प्रावर्तयन्नदीं घोरां शोणितान्त्रतरङ्गिणीम् ।
5. क-ख-घ-ङ-म—करवालासि ।

अश्वग्रीवामहावर्ता कबन्धजलमानुषा ।
काककङ्करुता तीव्रा सारसक्रौञ्चनादिता ॥ ५६
सिंहनादमहानादा शङ्ख[1]कम्बुकसङ्कुला ।
वीरोत्तमाङ्गपद्माढ्या शरचापमहानला ॥ ५७
पदातिमत्स्यकलुषा गजशीर्षककच्छपा ।
गोमायुघूकसङ्घुष्टा मांसमज्जास्थिवालुका ॥ ५८
प्रावर्तत नदी घोरा पिशाचगणसेविता ॥ ५८॥
[2]अपाराम[3]निवारां च रक्तोदां सर्वतो वृताम् ।
अभीक्ष्णमकरोत् पार्थो नदीमुत्तमशोणिताम् ॥ ५९॥
तस्याददानस्य शरान् सन्धाय च विमुञ्चतः ।
विकर्षतश्च गाण्डीवं न किञ्चिद् ददृशेऽन्तरम् ॥ ६०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ ४७ ॥ गोग्रहणपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[अस्मिन्नध्याये ६०॥ श्लोकाः]

---

1. क-म—शङ्कुसमाकुलाम् । ख—स्वनमहास्वनाम् ।
   घ—सङ्कुसमाकुलाम् ।
2. ख—गजवर्ष्मंमहाद्वीपाम् अश्वदेहमहाशिलाम् ।
   पदातिदेहसङ्घाटां रथावर्त्तमहातरुम् ॥
   केशशाद्वलसञ्छन्नां सुतरां भीतिदां नृणाम् ।
   अगाधरक्तोदवहां यमसागरगामिनीम् ॥
   दुस्तरां भीरुमर्त्यानां शूराणां सुतरां नृप ।
   प्रावर्तयन्नदीमेवं भीषणां पाकशासनिः ॥ [अधिकः पाठः]
3. क-म—मनपारां च ।

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

रणाय भीष्मार्जुनयोः समागमे देवैस्तयोः प्रशंसनम् ॥ १ ॥

वैशम्पायनः—

एवं विद्राव्य तत् सैन्यं पार्थो भीष्ममुपाद्रवत् ।
त्रस्तेषु सर्वसैन्येषु कौरव्यस्य महात्मनः ॥ १

[1]नरसिंहमुपायान्तं जिगीषन्तं परान् रणे ।
वृषसेनोऽभ्ययात् तूर्णं योद्धुकामो धनञ्जयम् ॥ २

[2]तस्य पार्थस्तदा क्षिप्रं क्षुरधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपत्रेण जाम्बूनदपरिष्कृतम् ॥ ३

अथैनं पञ्चभिर्भूयः प्रत्यविध्यत् स्तनान्तरे ।
स पार्थबाणाभिहतो रथात् प्रस्कन्द्य चाद्रवत् ॥ ४

1. ख-ङ—बाणान् धनुषि सन्धाय चतुरः पाकशासनिः ।
भीष्मं च प्राहिणोद्धीतस् तं द्वाभ्यामभ्यवादयत् ।
तस्य कर्णान्तिकं गत्वा द्वावभूतां च कौशलम् ।
सोऽप्याशीरवदद्भीष्मः कौन्तेयो जयतामिति ।[अधिकः पाठः]

2. ख—वैकर्तनात्मजो वीरः सङ्ग्रामे लोकविश्रुतः ।
शौर्यवीर्यादिभिः कर्णाद् विख्यातिमेष इवोद्धृतः ॥
आत्मना युध्यतस्तस्य वृषसेनस्य पाण्डवः ।
मुहूर्तं तत्र तद्दृष्ट्वा हस्तलाघवपौरुषे ।
तुतोष च ततः पार्थो वृषसेनपराक्रमम् ॥ [अधिकः पाठः]

दुश्शासनो विकर्णश्च शकुनिश्च विविंशतिः ।
आयान्तं भीमधन्वानं पर्यकीर्यन्त पाण्डवम् ॥ ५

तेषां पार्थो रणे क्रुद्धश् शरैस्सन्नतपर्वभिः ।
[1]युगान् रथान् ध्वजांश्चाक्षांश् चिच्छेद तरसा रणे ॥ ६

ते निकृत्तध्वजास्सर्वे छिन्नकार्मुकवेष्टनाः ।
रणमध्यादपययुः पार्थबाणाभिपीडिताः ॥ ७

ततः प्रहस्य बीभत्सुर् वैराटिमिदमब्रवीत् ॥ ७॥

अर्जुनः—

एतं मे प्रापयेदानीं तालं सौवर्णमुच्छ्रितम् ।
मेघमध्ये यथा विद्यु [2]ज्ज्वलतीव पुनः पुनः ॥ ८॥

असौ शान्तनवो भीष्मस् तत्र याहि परन्तप ॥ ९

अस्त्राणि तस्य दिव्यानि दर्शयिष्यामि संयुगे ।
[3]घोररूपाणि चित्राणि लघूनि च गुरूणि च ॥ १०

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा वैराटिः पार्थसारथिः ।

---

1. म—युगं ध्वजमथेष्वासं । क—युगध्वजमथैर्वा च ।
ख—युगान् ध्वजमथाक्षांश्च । घ—युगं चापमथाक्षं च ।

2. क-ख-घ-म—चरन्तीव ।

3. ख-ङ—अस्माकं पोषको नित्यमाबाल्यान्मात्स्यभूमिप ।
श्रेयस्कारी सदाऽस्माकं योगक्षेमकरस्सदा ॥
तस्याङ्के वर्धितो बाल्ये तथोत्स्येऽनेन सम्प्रति ।
अस्माकं धार्तराष्ट्राणां शमकामो दिवानिशम् ॥[अधिकः पाठः]

वाहयच्चोदितस्तेन रथं भीष्मरथं प्रति ॥ ११
[1]तं तथा चोदितं दृष्ट्वा फल्गुनस्य रथोत्तमम् ।
वायुनेव महामेघं सहसाऽभिसमीरितम् ॥ १२
तं प्रत्ययाच्च गाङ्गेयो रथेनादित्यवर्चसा ॥ १२॥

आयान्तमर्जुनं दृष्ट्वा भीष्मः परपुरञ्जयः ।
प्रत्युज्जगाम युद्धार्थी महर्षभमिवर्षभः ॥ १३॥

तथाभि[2]गुप्तये तेषां दुराधर्षः पितामहः ।
हन्यमानेषु योधेषु धनञ्जयमुपाद्रवत् ॥ १४॥

प्रगृह्य कार्मुकश्रेष्ठं [3]जाम्बूनदपरिष्कृतम् ।
शरानादाय तीक्ष्णाग्रान् मर्म[4]देशप्रमाथिनः ॥ १५॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे स नरव्याघ्रो गिरिस्सूर्योत्तरो यथा ॥ १६॥

प्राध्माप्य शङ्खं गाङ्गेयो धार्तराष्ट्रान् प्रहर्षयन् ।
प्रदक्षिणमुपावृत्य बीभत्सुं [5]समयोधयत् ॥ १७॥

समवेक्ष्य तमायान्तं कौन्तेयः परवीरहा ।

---

1. क—तमायान्तं रथं ।　ख—अथ तच्चोदितं ।　घ-ङ-म—तं रथं ।
2. ङ-म—गुप्तये स्वेषां ।　अ-च—गुप्तयैस्तेषां ।
3. क-ख-च-म—जातरूप ।
4. क-ख-ङ—देह ।　घ—भेद ।
5. क-घ-म—समवारयत् ।　ख—प्रत्यवारयत् ।

देवदत्तं महाशङ्खं प्रदध्मौ युधि वीर्यवान् ॥ १८॥
तौ शङ्खनादावत्यर्थं भीष्मपाण्डवयोस्तदा ।
नादयामासतु[1]स्तत्र खं च भूमिं च सर्वतः ॥ १९॥
प्रत्यगृह्णादमेयात्मा प्रियातिथिमिवागतम् ।
अन्तरिक्षे प्रजल्पन्ति सर्वे देवास्सवासवाः ॥ २०॥

देवाः—

यदर्जुनः कुरून् सर्वान् प्राक्रान्तच्छस्त्रतेजसा ।
कुरुश्रेष्ठाविमौ वीरौ रणे भीष्मधनञ्जयौ ॥ २१॥
सर्वास्त्रकुशलौ लोके एतावतिरथावुभौ ।
उभौ देवमनुष्येषु विश्रुतौ स्वपराक्रमैः ॥ २२॥
उभौ परमसंरब्धावुभौ दीप्तधनुर्धरौ ॥ २३
समागतौ नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।
उभौ सदृशकर्माणौ सूर्यस्याग्नेश्च भारत ॥ २४
वासुदेवस्य सदृशौ कार्तवीर्यसमावुभौ ।
उभौ विश्रुतकर्माणावुभौ शूरौ महाबलौ ॥ २५
सर्वास्त्रविदुषां श्रेष्ठौ सर्वशस्त्रभृतां वरौ ॥ २५॥
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ।

1. क-ख-ङ—द्यां च खं च भूमिं च सर्वशः ।
म—व्योम खं च भूमिं च सर्वशः ।

अनयोस्सदृशं वीर्यं मित्रस्य वरुणस्य च ॥ २६॥
को वा कुन्तीसुतं युद्धे द्वैरथेनोपयास्यति ।
ऋते शान्तनवादन्यः क्षत्रियो भुवि विद्यते ॥ २७॥

वैशम्पायनः—

इति सम्पूजयामासुर् भीष्मं दृष्ट्वाऽर्जुनं गतम् ।
रणे सम्प्रहरिष्यन्तं दृष्ट्वा देवास्सवासवाः ॥ २८॥

अथ बहुविधशङ्खतूर्यघोषैर्
विविधरवैस्सह सिंहनादमिश्रैः ।
कुरुवृषभमपूजयत् कुरूणां
बलममराधिपसैन्यसप्रभं तत्* ॥ २९॥

ततो भीष्म [1]श्शान्तनवो वीर्यवान् सायकान् बहून् ।
समर्पयन्महावेगाञ् श्वसतः पन्नगानिव ॥ ३०॥
ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्रिणः ।
ज्वलन्तं कपिमाजघ्नुर् ध्वजाग्रनिलयांश्च तान् ॥ ३१॥
सारथिं च हयांश्चास्य विव्याध [2]निशितैश्शरैः ।
उरस्यताडयत् पार्थं त्रिभिरेवायसैश्शरैः ॥ ३२॥
तदाऽर्जुनश्शरैस्तीक्ष्णैर् विद्ध्वा कुरुपितामहम् ।
[3]ध्वजं च सारथिं चापि विव्याध दशभिश्शरैः ॥ ३३॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1. क-ख-घ-च-म—श्शरानष्टौ ध्वजे पार्थस्य वीर्यवान् ।
2. क-घ-च—दशभि । 3. अ—इदमर्धं नास्ति ।

तद्युद्धमभवद्घोरं रोमहर्षणमद्भुतम् ।
भीष्मस्य सह पार्थेन बलिवासवयोरिव ॥ ३४॥

सन्ततं शरमालाभिर् आकाशं समपद्यत ।
अम्बुदैरिव धाराभिस् तयोः कार्मुकनिस्सृतैः ॥ ३५॥

भल्लैर्भल्ला [1]स्समाहत्य भीष्मपाण्डवयो रणे ।
अन्तरिक्षे[2]ऽप्यशोभन्त खद्योताः प्रावृषीव हि ॥ ३६॥

अग्निचक्रोपमं घोरं मण्डलीकृतमाहवे ।
गाण्डीवमभवज्जिष्णोस् सव्यं दक्षिणमस्यतः ॥ ३७॥

पर्वतं वारिधाराभिश् छादयन्निव तोयदः ।
अर्जुनश्छादयद्भीष्मं शरवर्षैरनेकशः ॥ ३८॥

तां समुद्रमिवोद्धूतां शरवृष्टिं [3]दुरासदाम् ।
व्यधमत् सायकैर्भीष्मो ह्यर्जुनं [4]समवारयत् ॥ ३९॥

ततस्तानि विसृष्टानि शरजालानि सङ्घशः ।
आहतानि व्यशीर्यन्त अर्जुनस्य रथं प्रति ॥ ४०॥

ततः कनकपुङ्खाग्रैश् शरैस्सन्नतपर्वभिः ।
पतद्भिः खगवाजैश्च द्यौरासीत् संवृता शरैः ॥ ४१॥

---

1. क-ख-घ-म—स्समागम्य कुरु ।
2. क-घ-म—व्यराजन्त । ख—व्यशीर्यन्त ।
3. क-ख—समुत्थिताम् । क-म—समुद्यताम् ।
4. क-ख-घ—सन्न्यवारयत् । म—सन्निवारयत् ।

ततः प्रासृजदुग्राणि शरजालानि पाण्डवः ।
तावन्ति शरजालानि भीष्मः पार्थाय प्राहिणोत् ॥ ४२॥

साश्वं ससूतं सरथं च पार्थं
समाचिनोद्भारत वत्सदन्तैः ।
प्रच्छादयामास दिशश्च सर्वा
नभश्च बाणैस्तपनीयपुङ्खैः ॥ ४३॥

ततो देवर्षिगन्धर्वास् साधुसाध्वित्यपूजयन् ।
दुष्करं कुरुते भीष्मो यदर्जुनम[1]योधयत् ॥ ४४॥

बलवानर्जुनो दक्षः क्षिप्रकारी च पाण्डवः ॥ ४५
कोऽन्यस्समर्थः पार्थस्य वेगं धारयितुं रणे ॥ ४५॥

ऋते शान्तनवाद्भीष्मात् कृष्णाद्वा देवकीसुतात् ।
आचार्यवरमुख्याद्वा भारद्वाजान्महाबलात् ॥ ४६॥

अस्त्रैरस्त्राणि संवार्य क्रीडन्तौ पुरुषोत्तमौ ।
चक्षूंषि सर्वभूतानां मोहयन्तौ महाबलौ ॥ ४७॥

प्राजापत्यं [2]च दैवेन्द्रम् आग्नेयं च सुदारुणम् ।
कौबेरं वारुणं चैव याम्यं वायव्यमेव च ॥ ४८॥
प्रयुञ्जानौ महात्मानौ समरे तौ विरेजतुः ॥ ४९
विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तथा ।

---

1. घ-म—वारयत् ।　　2. क-ख-घ-ङ-म—तथैवैन्द्रम् ।

साधु पार्थ महाबाहो साधु भीष्मेति चाब्रुवन् ॥ ५०

नैतदन्यो मनुष्येषु प्रदर्शयितुमाहवे ।
महास्त्राणां सम्प्रयोगं समरे भीष्मपार्थयोः ॥ ५१

एवं सर्वास्त्रविदुषोर् अस्त्रयुद्धमवर्तत ॥ ५१॥

अथ जिष्णुरुदावृत्य शितधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपत्रेण जातरूपपरिष्कृतम् ॥ ५२॥

निमेषान्तरमात्रेण भीष्मोऽन्यत् कार्मुकं रणे ।
समादाय नरव्याघ्रस् सज्यं चक्रे महाबलः ॥ ५३॥

शरांश्च सुबहून् क्रुद्धो मुमोचाशु धनञ्जये ॥ ५४

अर्जुनोऽपि शरान् [1]घोरान् भीष्माय निशितान् बहून् ।
चिक्षेप च महातेजास् तथा भीष्मश्च पाण्डवे ॥ ५५

तयोर्दिव्यास्त्रविदुषोर् अस्यतोरनिशं शरान् ।
न विशेषस्तदा राजँल्लक्ष्यते सुमहात्मनोः ॥ ५६

अथावृणोद्दश दिशश् शरैरतिरथस्तथा ।
किरीटमाली कौन्तेयश् [2]शूरश्शान्तनवं तदा ॥ ५७

अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवम्।
बभूव तत्र सङ्ख्येऽस्मिँल्लोके राजंस्तदद्भुतम् ॥ ५८

---

1. क-ख-घ-म—तीक्ष्णान् ।
2. क-ख-च-म—शूरं । घ—भीष्मं ।

पाण्डवेन हताश्शूरा भीष्मस्य रथरक्षिणः ।
शेरते स्म तदा राजन् [1]कौन्तेयस्याहताश्शरैः ॥ ५९

[2]ततो गाण्डीवनिर्मुक्ता निरमित्रं चिकीर्षवः ।
अगच्छन् पुङ्खसंसक्ताश् श्वेतवाहनपत्रिणः ॥ ६०

निष्पतन्तो रथात् तस्य धौता हैरण्यवाससः ।
आकाशे प्रत्यदृश्यन्त हंसानामिव पङ्क्तयः ॥ ६१

तस्य तद्दिव्यमस्त्रं हि प्रगाढं चित्रमस्यतः ।
प्रेक्षन्ते स्मान्तरिक्षस्थास् सर्वे देवास्सवासवाः ॥ ६२

तं दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम् ।
शशंस देवराजाय चित्रसेनः प्रतापवान् ॥ ६३

चित्रसेनः—

पश्येमानारिनिर्दारान् संसक्तानिव गच्छतः ।
चित्ररूपमिदं जिष्णोर् दिव्यमस्त्रमुदीर्यतः ॥ ६४

नेदं मनुष्याश्श्रद्दध्युर् न ह्येदं तेषु विद्यते ।
[3]सौराणां च महास्त्राणां विचित्रोऽयं समागमः ॥ ६५

---

1. क-ख-घ-म—कौन्तेयस्यामितो रथम् ।
ङ—गाङ्गेयस्यामितो रथम् ।

2. घ—महास्त्राणां सम्प्रयोगं समरे भीष्मपार्थयोः ।
वैशम्पायनः—
एवं सर्वास्त्रविदुषोर् अस्त्रयुद्धमवर्तत ॥
अथ जिष्णुस्तदावृत्य शितधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपक्षेण भीष्मस्यामिततेजसः ॥ [अधिकः पाठः]

3. क-म—पौराणानां । ख-च—कौरवाणां ।
घ—पौराण्यानां । ङ—कौरेयाणां ।

मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
न शक्नुवन्ति सैन्यानि पाण्डवं प्रतिवीक्षितुम् ॥ ६६
उभौ विश्रुतकर्माणावुभौ वीरौ महीक्षिताम् ।
उभौ सदृशकर्माणावुभौ युधि दुरासदौ ॥ ६७

वैशम्पायनः—

[1]इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम् ।
पूजयामास दिव्येन पुष्पवर्षेण भारत ॥ ६८
[2]ततो भीष्मश्शान्तनवो वामपार्श्वे समर्पयत् ।

---

1. अ-घ-ङ-च—इत्युक्त्वा ।
2. ख-ङ—अश्वत्थामा ततोऽभ्येत्य द्रुतः कर्णमभाषत ।

अश्वत्थामा—

अहमेको हनिष्यामि समेतान् सर्वपाण्डवान् ।
इति कर्ण समक्षं नस् सभामध्ये त्वयोदितम् ॥
न तु तत्कृतमेकस्माद् भीतो धावसि सूतज ॥
वैचित्र्यवीर्यजास्सर्वे त्वामाश्रित्य पृथासुतान् ।
जेतुमिच्छन्ति सङ्ग्रामे भवान् युध्यस्व फल्गुनम् ॥

वैशम्पायनः—

अश्वत्थामोदितं वाक्यं श्रुत्वा दुर्योधनस्तदा ।
प्रत्युवाच रुषा द्रौणिं कर्णप्रियचिकीर्षया ॥
मा मानभङ्गं विप्रेन्द्र कुरु विश्रुतकर्मणः ।
मानभङ्गेन राज्ञां तु बलहानिर्भविष्यति ॥
शूरा वदन्ति सङ्ग्रामे वाचा कर्माणि कुर्वते ।
पराक्रमन्ति सङ्ग्रामे स्वसत्त्ववीर्यानुसारतः ॥
तस्मात् तं नार्हति भवान् गर्हितुं शूरसम्मतम् ।
राज्ञैवमुक्तस्स द्रौणिर् गतरोषोऽभवत् तदा ॥ [अधिकः पाठः]

अस्यतः प्रतिसन्धाय विवरं सव्यसाचिनः ॥ ६९

ततः प्रसह्य बीभत्सुः पृथुधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपत्रेण भीष्मस्यामिततेजसः ॥ ७०

अथैनं दशभिः पश्चात् प्रत्यविध्यत् स्तनान्तरे ।
यतमानं पराक्रान्तं कुन्तीपुत्रो धनञ्जयः ॥ ७१

स पीडितो महाबाहुर् गृहीत्वा रथकूबरम् ।
गाङ्गेयो युधि दुर्धर्षस् तस्थौ दीर्घमिवातुरः ॥ ७२

तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम् ।
[1]उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥ ७३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ ७० ॥ गोग्रहणपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[अस्मिन्नध्याये ७३ श्लोकाः]

---

1. ख-ङ—पराक्रमे च शौर्ये च वीर्ये सत्त्वे बले रणे ।
शस्त्रास्त्रेषु च सर्वेषु लाघवे दूरपातने ॥
यस्य नास्ति समो लोके पितृदत्तवरश्च यः ।
जितश्रमो जितारातिर् निस्तन्द्रः खेदवर्जितः ॥
यस्स्वेच्छामरणो जातः पितृशुश्रूषणे रतः ।
दुर्योधनहितार्थाय युद्ध्वा पार्थेन संयुगे ॥
पृथासुतहितार्थाय पराजित इवाभवत् । [अधिकः पाठः]

## ॥ षट्पञ्चाशोऽध्यायः ॥

अश्वत्थामानं प्रति युद्धाय गच्छन्तमर्जुनमुद्दिश्य अर्जुनो भयादपयातीति कर्णस्य शङ्का ॥ १ ॥ द्रोणेन तच्छङ्कावारणम् ॥ २ ॥

---

**वैशम्पायनः—**

*गास्ता विजित्य सङ्ग्रामे कुरूणां मिषतां वने ।
ततो युद्धमनाः पार्थः प्रायात् पञ्च रथान् प्रति ॥ १

आददानश्च नाराचान् विमृशन्निषुधी अपि ।
संस्पृशानश्च गाण्डीवं भूयः कर्णं समभ्ययात् ॥ २

**अश्वत्थामा—**

*कर्ण [1]यत् त्वं सभामध्ये बहुबद्धं विकत्थसे ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ॥ ३

एषोऽन्तक इव क्रुद्धस् सर्वभूतावमर्दनः ।
अदूरात् प्रत्युपस्थाय [2]दृश्यते केसरी यथा ॥ ४

---

* अस्मिन्नध्याये १९॥ श्लोकपर्यन्तग्रन्थः पुनरुक्तः । अतएवासङ्गतोऽनावश्यकश्चेति प्रतिभाति । तथाऽपि सर्वासु मातृकासु पाठ उपलभ्यत इत्यस्माभिर्यथामातृकं मुद्रितः ।

* तृतीयचतुर्थश्लोकौ पञ्चाशाध्याये द्वितीयतृतीयश्लोकरूपेण स्तः अत्र पुनरुक्तावेव वर्तेते-

1. क-ख-च-म—यत् सभामध्ये बहुबद्धं प्रभाषसे ।
2. क-ख-च-ड-म—जृम्भते ।

1कर्णः—

*नाहं बिभेमि बीभत्सोः कृष्णाद्वा देवकीसुतात् ।
पाण्डवेभ्योऽपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ॥ ५

सत्वाधिकानां पुंसां तु धनुर्वेदोपजीविनाम् ।
दर्शनाज्जायते सत्त्वं स्वरश्च न विषीदति ॥ ६

पश्यत्वाचार्यपुत्रो माम् अर्जुनेन रणे सह ।
युध्यमानं सुसंयत्तं दैवं तु दुरतिक्रमम् ॥ ७

2वैशम्पायनः—

तं समन्ताद्रथाः पञ्च परिवार्य धनञ्जयम् ।
त इषून् सम्यगस्यन्तो [3]मुमूर्षन्तोऽपि जीवितम् ॥ ८

*ते लाभमिव मन्वानाः क्षिप्रमार्छन् धनञ्जयम् ।
शरौघान् सम्यगस्यन्तो जीमूता इव [4]वार्षिकाः ॥ ९

---

1. ख—न पलायस्व शूरश्चेत् स्थित्वा युध्यस्व फल्गुनम् । [अधिकः पाठः]

* पञ्चमषष्ठसप्तमश्लोकाः पञ्चाशाध्याये सप्तमाष्टमनवमश्लोकरूपेण वर्तन्ते·

2. ख—अश्वत्थामा—

को दोषः कर्ण शूराणां वाचा साकं हि पौरुषम् ।
विद्यते यदि तल्लोके गुणोत्तरमिहोच्यते ॥
युध्यस्व त्वममीः पार्थं प्रपलायस्व मा रणात् ।
उक्तं वचस्स्मरन् कर्ण नाहमित्यादि संयुगे ॥　[अधिकः पाठः]

3. क-ख-घ-भ—मुमुक्षन्तोऽपि जीवितान् ।

* ९-१०-११-१२ १३· श्लोकाः पञ्चाशाध्याये २०-२१-२२ २३·२४ श्लोकरूपेण वर्तन्ते·

4. क-घ-ङ-म—शारदाः

बहुभिर्निशितैर्बाणैर् विविधैर्लोमवापिभिः ।
[1]अथ ते प्रत्यवस्थाय प्रत्यविध्यन् धनञ्जयम् ॥ १०

ततः प्रहस्य बीभत्सुस् सर्वशस्त्रभृतां वरः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथसत्तमान् ॥ ११

यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
एवं गाण्डीवनिर्मुक्तैश् शरैः प्राच्छादयद्दिशः ॥ १२

न रथानां न चाश्वानां न ध्वजानां न दन्तिनाम् ।
अविद्धं निशितैर्बाणैर् आसीद्द्व्यङ्गुलमन्तरम् ॥ १३

सर्वे शान्तिपरा योधास् स्वचित्तं नाभिजज्ञिरे ।
हस्त्यश्वाश्चापि वित्रस्ता व्यवलीयन्त [2]सर्वशः ॥ १४

*यथा नळवनं नागः प्रभिन्नष्षाष्टिहायनः ।
एवं सर्वानपामृद्नाद् अर्जुनश्शस्त्रतेजसा ॥ १५

गाण्डीवस्य च घोषेण पृथिवी समकम्पत ।
मनांसि धार्तराष्ट्राणाम् अप्यक्रन्तद्धनञ्जयः ॥ १६

ततो विगाह्य सैन्यानां मध्यं शस्त्रभृतां वरः ।

---

1. ङ—प्राद्रवन् । क—अदूरात् । ख-घ—भाद्रवन् ।
म—अदूरात् प्रत्युपस्थाय । 2. क-घ—भागशः ।
* १५ श्लोकः चतुःपञ्चाशाध्याये ५१॥ श्लोकरूपेण वर्तते-

सारथिं समरे शूरम् अभ्यभाषत वीर्यवान् ॥ १७

अर्जुनः—

सन्नियम्य हयानेतान् मन्दं वाहय सारथे ।

आचार्यपुत्रं समरे योधयिष्यामि मानिनम् ॥ १८

[1]पुरा ह्येष मया युक्तस् सार्थीभवति पृष्ठतः ॥ १८॥

वैशम्पायनः—

[2]एवमुक्तोऽर्जुनेनासावश्वत्थामरथं प्रति ।

विराटपुत्रो जवनान् भृशमश्वानचोदयत् ॥ १९॥

कर्णः—

एषोऽपयाति बीभत्सुर् व्यथितो गाढवेदनः ।

तं तु तत्रैव [3]योत्स्यामि नायं मुच्येत जीवितात् ॥ २०॥

द्रोणः—

[4]भयान्नैवैष निर्याति महात्मा पाकशासनिः ।

नैवं भीतो निवर्तेत न पुनर्गाढवेदनः ॥ २१॥

यद्येनमभिसङ्क्रुद्धं पुनरेवाभियास्यसि ।

बहून्यस्त्राणि जानीते न पुनर्मोक्ष्यते भवान् ॥ २२॥

---

1. म—पुरा ह्येष न मे शब्दः सार्थीभवति पृष्ठतः ।
   क—पुरा सार्थीभवत्येषामयं शब्दोऽत्र तिष्ठताम् ।
   घ—पुरा एष न मे शक्तः साम्ना भवति पृष्ठतः । [इति पाठान्तरम् ]
2. क—अर्जुनेनैवमुक्तस्तु वैराटिरपराजितः ।
   चोदयामास तानश्वान् अश्वत्थामरथं प्रति ॥ [इति पाठान्तरम् ॥ ]
3. क—यास्यामो । ख-घ-म—यास्यामि ।
4. क-घ-म—नैषो भयेन निर्यातो । ख—भयेन नैष निर्याति ।
   ङ—भयान्न चैव निर्याति ।

दिष्ट्या दुर्योधनो मुक्तो [1]गावस्सर्वाः पलायिताः ।
[2]मुक्तो दिष्ट्या च सङ्ग्रामे किं रणेन करिष्यसि ॥ २३॥

क्रोशमात्रमतिक्रम्य बलमन्वानयामहे ।
अन्वागतबलाः पार्थे पुनरेवाभियास्यथ ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ ४७ ॥ गोग्रहणपर्वणि चतुर्स्त्रिशोऽध्यायः ॥ ३४ ॥
[अस्मिन्नध्याये २४॥ श्लोकाः]

---

## ॥ सप्तपञ्चाशोऽध्यायः ॥

---

अर्जुनेनोत्तरं प्रति भीष्मादिसकाशे रथप्रापणप्रेरणापूर्वकं तदाप्यायनाय स्वपराक्रमप्रकथनम् ॥ १ ॥ तदा दुश्शासनादिपराभवनपूर्वकं भीष्मादिभिः सहायोधनम् ॥ २ ॥

---

वैशम्पायनः—

कर्णं पराजितं दृष्ट्वा पार्थो वैराटिमब्रवीत् ॥ ॥

अर्जुनः—

एतं मां प्रापयेदानीं रथवृन्दं प्रहारिणाम् ॥ १

यत्र शान्तनवो भीष्मस् सर्वेषां नः पितामहः ।
सुयुद्धं काङ्क्षमाणो वै रथे तिष्ठति दंशितः ॥ २

---

1. अ-ख-ब-ङ-म—दिष्ट्या गावः।
2. क—मुक्तास्त्वमाव। अ-ब-ङ-म—मुक्तमुष्टिषु।

तालो वै काञ्चनो यत्र वज्रवैडूर्यभूषितः ।
अतीव समरे भाति मातरिश्वप्रकम्पितः ॥ ३

दारुणं प्रहरिष्यामि रथबृन्दानि धन्विनाम् ।
आदास्याम्यहमेतेषां धनुर्ज्यावेष्टनानि च ॥ ४

अस्यन्तं दिव्यमस्त्राणि चित्रमुत्तर पश्यासि ॥ ४॥

शतह्रदां जृम्भमाणां मेघस्थां प्राघृषीव च ।
[1]सुवर्णपृष्ठं गाण्डीवं पश्यन्तु कुरवो [2]युधि ॥ ५॥

दक्षिणेनाथ वामेन [3]कतरेण स्विदस्यति ।
इति मां शत्रवस्सर्वे न विज्ञास्यन्ति सारथे ॥ ६॥

अस्त्रोदकां शरावर्तां नागनक्रां रथह्रदाम् ।
नदीं प्रस्कन्दयिष्यामि परलोकापहारिणीम् ॥ ७॥

पाणिपादशिरःपृष्ठबाहुशङ्ख[4]वराकुलम् ।
वनं कुरूणां छेत्स्यामि भल्लैस्सन्नतपर्वभिः ॥ ८॥

तूणीशयास्सुपुङ्खाग्रा निशिता दुन्दुभिस्वनाः ।
मया प्रमुक्तास्सङ्ग्रामे कुरून् [5]धक्ष्यन्ति सायकाः ॥ ९॥

ध्वजवृक्षं शरतृणं नागाश्वश्वापदाकुलम् ।
रथसिंहगणैर्युक्तं धनुर्वालिसमाकुलम् ॥ १०॥

---

1. ङ—इतः सार्धश्लोको नास्ति । 2. ख-घ-च-म—मम
3. च-म—कतमेन । क-ख-घ—कथमेष ।
4. क-ख-घ-ङ-च-म—चराचरम् । 5. क-ख-घ-ङ—द्रक्ष्यन्ति ।

वनमादीपयिष्यामि कुरूणामस्त्रतेजसा ॥ ११

जयतो भारतीं सेनाम् एकस्य मम संयुगे ।
शतं मार्गा भविष्यन्ति पावकस्येव कानने ॥ १२

मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलम् ॥ १२॥

तानहं रथनीडेभ्यः परलोकाय शात्रवान् ।
एकः प्रद्रावयिष्यामि चक्रपाणिरिवासुरान् ॥ १३॥

असम्भ्रान्तो रथे तिष्ठन् समेषु विषमेषु च ।
मार्गमावृत्य तिष्ठन्तम् अपि भेत्स्यामि पर्वतम् ॥ १४॥

अहमिन्द्रस्य सङ्ग्रामे द्विषतो बलदर्पितान् ।
मातलिं सारथिं कृत्वा निवातकवचान् रणे ॥ १५॥

हतवान् सर्वतस्सर्वान् धावतो युध्यतस्तदा ॥ १६

निवातकवचान् हत्वा गाण्डीवास्त्रैस्सहस्रशः ।
परं पारे समुद्रस्य हिरण्यपुरमारुजम् ॥ १७

हत्वा षष्टिसहस्राणि रथानामुग्रधन्विनाम् ।
पौलोमान् कालकेयांश्च [1]सङ्ग्रामे भृशदारुणान् ॥ १८

असुरानहनं रौद्रान् रौद्रेणास्त्रेण सारथे ॥ १८॥

अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः क्षिप्रहस्तताम् ।
प्रगाढनिपुणं चित्रम् अतिविद्धं प्रजापतेः ॥ १९॥

1. क-ख-ब-म—समरे ।

रौद्रं रुद्रादहं वेद्मि वारुणं वरुणादपि ।
[1]सौर्यं सूर्यादहं वेद्मि याम्यं दण्डधरादपि ॥ २०॥

अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः ।
अन्यैर्देवैरहं प्राप्तः को मां विषहते पुमान् ॥ २१॥

अद्य गाण्डीवनिर्मुक्तैश् शरौघै रोमहर्षणैः ।
कुरूणां पातयिष्यामि रथबृन्दानि धन्विनाम् ॥ २२॥

वैशम्पायनः—

एवमाश्वासितस्तेन वैराटिस्सव्यसाचिना ।
व्यगाहत रथानीकं भीमं भीष्मस्य वाजिभिः ॥ २३॥

रथिसिंहमनाधृष्यं जिगीषन्तं परान् रणे ।
अभ्यधावत् तदैवोग्रो ज्यां विकर्षन् धनञ्जयः ॥ २४॥

दुश्शासनोऽभ्ययात् तूर्णम् अर्जुनं भरतर्षभ ॥ २५

अन्येऽपि चित्राभरणा युवानो मृष्टकुण्डलाः ।
[2]अभ्ययुर्भीमधन्वानो मौर्वीं पर्यस्य बाहुभिः ॥ २६

दुश्शासनो विकर्णश्च वृषसेनो विविंशतिः ।
अभीता भीमधन्वानं [3]गाण्डीविनमवारयन् ॥ २७

तस्य दुश्शासनष्षाष्टिं वामपार्श्वे समर्पयत् ।

---

1. म—इदमर्धं नास्ति।
2. क-ख—अगच्छन्। म—अभ्यागच्छंन्।
3. क-ख-घ-ङ-च-म—पाण्डवं पर्यवारयन्।

अस्यतः प्रतिसन्धाय कुन्तीपुत्रस्य धीमतः ॥ २८
पुनश्चैव स भल्लेन विद्ध्वा वैराटिमुत्तरम् ।
द्वितीयेनार्जुनं वीरं प्रत्यविध्यत् स्तनान्तरे ॥ २९
[1]तस्य जिष्णुरुदावृत्य क्षुरधारेण कार्मुकम् ।
प्राकृन्तद्गृध्रपत्रेण जातरूपपरिष्कृतम् ॥ ३०
अथैनं पञ्चभिर्बाणैः प्रत्यविध्यत् स्तनान्तरे ।
सोऽपयातो रथोपस्थात् पार्थबाणाभिपीडितः ॥ ३१
[2]सर्वा दिशश्चाभ्यपतद् बीभत्सुरपराजितः ॥ ३१॥
तं विकर्णश्शरैस्तीक्ष्णैर् गृध्रपत्रै[3]श्शिलीमुखैः ।
विव्याध परवीरघ्नम् अर्जुनं धृतराष्ट्रजः ॥ ३२॥
ततस्तमपि कौन्तेयश् शरेण नतपर्वणा ।
ललाटेऽभ्यहनद्गाढं स विद्धः प्राद्रवद्भयात् ॥ ३३॥
ततः पार्थमुपावृत्य दुस्सहस्सविविंशतिः ।
अवाकिरच्छरैस्तीक्ष्णैः परीप्सन् भ्रातरं रणे ॥ ३४॥
तावुभौ गृध्रपत्राभ्यां निशिताभ्यां धनञ्जयः ।
विव्याध युगपद्व्यग्रस् तयोर्वाहानसूदयत् ॥ ३५॥
तौ हताश्वौ प्रविद्धाङ्गौ धृतराष्ट्रात्मजावुभौ ।

1. ब—इतः सार्धश्लोको नास्ति ।
2. अ-ब—इदमर्धं नास्ति । 3. क-ब-म—शिलाशितैः ।

अभिपत्य रथैरन्यैर् अपनीतौ पदानुगैः ॥ ३६॥

व्यद्रावयदशेषांश्च धृतराष्ट्रात्मजांस्तदा ।
विद्राव्य च रणे पार्थो रणभूमिं व्यराजयत् ॥ ३७॥

[1]किरीटमाली कौन्तेयो लब्धलक्षः प्रतापवान् ।
पातयन्नुत्तमाङ्गानि बाहूंश्च परिघोपमान् ॥ ३८॥

[2]अशेरत महावीराश् शतशो रुक्ममालिनः ॥ ३९

[3]कमलदिनकरेन्दुसन्निभैस्
सितदशनैस्सुमुखाक्षिनासिकैः ।
रुचिरमकुटकुण्डलैर्मही
पुरुषशिरोभिरुपास्तृता बभौ ॥ ४०

सुनसं चारुदीप्ताक्षं कुन्तश्मश्रु स्वलङ्कृतम् ।
अदृश्यत शिरश्छिन्नम् अनेकं हेमकुण्डलम् ॥ ४१

---

1. अ-च—द्वयमर्धं नास्ति ।
2. क—सर्वां दिशश्चानुदिशः कौन्तेयस्याभितोरथम् । [अधिकः पाठः]
3. क—यावन्त इव पार्थस्य निरमिलं चिकीर्षवः ।
यथुः पुङ्खाग्रसंसक्ताः फल्गुनस्य पतत्रिणः ॥
इतः परं "कमलदिनकरे"ति श्लोको वर्तते ।
अर्जुनस्य शरास्तीक्ष्णा गाण्डीवात् तस्य निस्सृताः ।
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ [अधिकः पाठः]

[1]एवं तत् प्रहृतं सैन्यं समन्तात् प्रद्रुतं भयात् ॥ ४१॥

अथ दुर्योधनः कर्णश् शकुनिस्सौबलस्तदा ।
द्रोणश्च द्रोणपुत्रश्च कृपश्चातिरथो रणे ॥ ४२॥

सहिता विजयं तत्र योधयन्तो महारथाः ।
विष्फारयन्तश्चापानि बलवन्ति महाबलाः ॥ ४३॥

[2]ततस्स्वर्णपताकेन रथेनादित्यवर्चसा ।
पुनरावृत्य मार्गस्थं ददृशुर्वानरध्वजम्[3] ॥ ४४॥

[4]ते महास्त्रैर्महोत्साहाः परिवार्य धनञ्जयम् ।
अभ्यवर्षन् सुसङ्क्रुद्धा [5]मेघा इव महाचलम् ॥ ४५॥

शरौघान् सम्यगस्यन्तो जीमूता इव शारदाः ।
युद्धे तस्थुर्महावीर्याः प्रतपन्तः किरीटिनम् ॥ ४६॥

---

1. क-म—क्षिपतो लघु चित्रं च सव्यं दक्षिणमस्यतः ।
पार्थस्य विशिखा जग्मुश् शतशोऽथ सहस्रशः ॥
प्रथमं तूत्तमाङ्गानि सोत्सेधानि धनुष्मताम् ।
प्राहिणोत् त्रिशतं योधान् कुरूणामाततायिनाम् ॥
पातयन् रथनीडेभ्यः क्षत्रियान् क्षत्रियर्षभः ।
प्रगाढधन्वा कौन्तेयो लब्धलक्षः प्रतापवान् ॥
2. क—तं प्रकीर्ण । ख-च-म—ततः कीर्ण । घ-ङ—ततः कर्ण ।
3. क—ततः कृपश्च कर्णश्च द्रोणो द्रौणिश्च संयुगे । [अधिकः पाठः]
4. क—महारथं महेष्वासाः । घ-म—ते महास्त्रैर्महेष्वासाः ।
5. क-ख-घ-ङ-म—महामेघा इवाचलम् ।

इषुभिर्बहुभिस्तूर्णं निशितैर्लोम[1]वापिभिः ।
अदूरात् प्रत्यवस्थाय पाण्डवं समयोधयन् ॥ ४७॥

[2]ततः प्रहस्य बीभत्सुस् तमैन्द्रं पञ्चवार्षिकम् ।
अस्त्रमादित्यसङ्काशं गाण्डीवे समयोजयत् ॥ ४८॥

नाक्षाणां न च चक्राणां न रथानां न वाजिनाम् ।
अङ्गुलाद्द्व्यङ्गुलाद्वापि विवृतं प्रत्यदृश्यत ॥ ४९॥

यथा रश्मिभिरादित्यो वृणुते सर्वतो दिशम् ।
एवं किरीटिना मुक्तं सर्वं प्राच्छादयज्जगत् ॥ ५०॥

यथा बलाहके विद्युत् पावको वा शिलोच्चये ।
तथा गाण्डीवमभवत् चक्रायुधमिवाततम् ॥ ५१॥

---

1. म—वाहिभिः। क-घ-ङ—वाजिभिः।

2. क-म—नोत्तरस्य च गात्राणां चक्रयोर्न च वाजिनाम्।
नाक्षाणां न च चक्राणां न रथानां न वाजिनाम् ॥
अङ्गुलं द्व्यङ्गुलं वापि विवृतं प्रत्यदृश्यत ॥,
मोहयित्वा च तान् सर्वान् स तत्र ह्यमिततेजसा ।
अर्दयामास तैर्बाणैर् अर्जुनस्त्वमितिञ्जयः ॥
दुर्योधनं त्रिसप्तत्या शकुनिं पञ्चभिश्शरैः ।
द्रोणमेकेन बाणेन कृपं द्वाभ्यां महारथम् ॥
अशीत्या सूतपुत्रं तु षष्ट्या द्रौणिं तथैव च ।
दुश्शासनमुखान् सर्वान् स तत्र ह्यमिततेजसा ॥
अर्दयामास तैर्बाणैः पाण्डवोऽस्त्रभृतां वरः ॥
यथा रश्मिभिरादित्यो— [अधिकः पाठः]

यथा वर्षति पर्जन्यो विद्युत् पतति पर्वते ।
[1]विष्फूरिता दिशस्सर्वा ज्वलद्गाण्डीवमाघृणोत् ॥ ५२॥

त्रस्ताश्च रथिनस्सर्वे चैन्द्रमस्त्रं विकुर्वति ।
सर्वे शान्तिपरा योधास् स्वचित्तं नाभिजज्ञिरे ॥ ५३॥
सहिता द्रोणभीष्माभ्यां प्रमोहगतचेतसः ॥ ५४

तानि सर्वाणि सैन्यानि भग्नानि भरतर्षभ ।
प्राद्रवन्त दिशस्सर्वा भयाद्वै सव्यसाचिनः ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

॥ ५७ ॥ गोग्रहणपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[अस्मिन्नध्याये ५५ श्लोकाः]

---

## ॥ अष्टपञ्चाशोऽध्यायः ॥

अर्जुनेन भीतमुत्तरं प्रति समाश्वासनपूर्वकं दुर्योधनं प्रति रथयापन-चोदना ॥ १॥ तथा स्वबाणाभिघातासहनेन पलायमानं तं प्रति सोपहास-माह्वानम् ॥ २॥

---

अर्जुनः—

दक्षिणामेव तु दिशं हयानुत्तर वाहय ।
पुरा सार्थीभवत्येषाम् अयं शब्दोऽत्र तिष्ठताम् ॥ १

---

1. क—विष्फूर्ज्य च दिशस्सर्वाः पृथिवीमनुनादयन् । [पाठान्तरम्]
ङ—विष्फूर्जितैः ।

अश्वत्थाम्नः प्रतिरथं प्राचीमुद्याहि सारथे ।
अचिराद्द्रष्टुमिच्छामि गुरुपुत्रं यशस्विनम् ॥ २

वैशम्पायनः—
मोहयित्वा तु तान् सर्वान् धनुर्घोषेण पाण्डवः ॥
प्रसव्यं चैवमावृत्य क्रोशार्धं प्राद्रवत् ततः ॥ ३

यथा सुसंस्कृतो बाणस् सुपर्णश्चापि शीघ्रगः ।
तथा पार्थरथश्शीघ्रम् आकाशे पर्यवर्तत ॥ ४

मुहूर्तोपरते शब्दे प्रतियाते धनञ्जये ।
हस्त्यश्वरथपादातं पुरस्कृत्य महारथाः ॥ ५
द्रोणभीष्ममुखास्सर्वे सैन्यानां जघने ययुः ।
यत्ताः पार्थमपश्यन्तस् संहिताश्शरविक्षताः ॥ ६

सैनिकाः—
दिष्ट्या दुर्योधनो मुक्तस् सैन्यं भूयिष्ठमागतम् ।
क्रोशमात्रमतिक्रम्य बलमन्वानयामहे ॥ ७
[1]याम यत्र वनं गुल्मं [2]नदीमन्वश्मकां प्रति ॥ ७॥

वैशम्पायनः—
अथ दुर्योधनो दृष्ट्वा भग्नं स्वं बलमाहवे ।
अमृष्यमाणः [3]कौन्तेयं परिमार्गन् धनञ्जयम् ॥ ८॥

---

1. अ-च—याति । घ-ङ-म—यात ।
2. अ-च—मन्वश्मनां प्रति । ख-घ-ङ—मन्वश्मकां प्रति ।
3. क—कोपेन प्रतिमार्गं । ख-घ—कोपेन परिमार्गन् । ङ—कोपेन मार्गमाणो म—क्रोधेन ।

न्यवर्तत कुरुश्रेष्ठस् स्वेनानीकेन संवृतः ।
वार्यमाणो दुराधर्षैर् भीष्मद्रोण[1]कृपादिभिः ॥ ९॥

ततोऽर्जुनश्चित्रमुदारवेगं
समीक्ष्य गाण्डीवमुवाच वाक्यम् । १०

अर्जुनः—

[2]इदं त्विदानीमनयं कुरूणां
शिवं धनुश्शत्रुनिबर्हणं च ।
अत्याशुगं वेगवदाशुकर्तृ
त्ववारणीयं महते रणाय ॥ ११

प्रदारणं शत्रुवरूथिनीनाम्
[3]अनीकजित् संयति वज्रकल्पम् ॥ ११॥
[4]प्रयाहि यत्रैष सुयोधनो हि
तं पातयिष्यामि शरैस्सुतीक्ष्णैः ॥ १२

आचार्यपुत्रं च पितामहं च
सुयोधनं सूतसुतं च सङ्ख्ये ।

---

1, ख-घ-ङ-म—कृपैर्भृशम् ।
2. ख—भोगीन्द्रकल्पं भुवनेषु रूढम्
अभेद्यमच्छेद्यमदाह्यमाशौ । [अधिकः पाठः]
3. अ-च—महारथं प्रापय
4. ख—वैधव्यदं शत्रुनितम्बिनीनां
सुखप्रदं कौरववंशजानाम् ॥ [अधिकः पाठः]

द्रोणं कृपं चैव निवार्य युद्धे
शिरो हरिष्यामि सुयोधनस्य ॥ १३

वैशम्पायनः—

तदुत्तरश्चिवमुदारवेगं
धनुश्च दृष्ट्वा निशिताश्च् शरांश्च ।
भीतोऽब्रवीदर्जुन[1]मुग्रवेगं
नाहं तवाश्वान् विषहे नियन्तुम् ॥ १४

तमब्रवीन्मात्स्यसुतं प्रहस्य
गाण्डीवधन्वा द्विषतां निहन्ता ॥ १४॥

अर्जुनः—

मया सहायेन कुतो भयं ते
प्रेह्युत्तराश्वानुपमन्त्रयस्व ॥ १५

वैशम्पायनः—

आश्वासितस्तेन धनञ्जयेन
वैराटिरश्वान् [2]प्रचुचोद शीघ्रम् ॥ १५॥

विष्फारयन् तद्धनुरुग्रघोषं
युयुत्समानः पुनरेव जिष्णुः ॥ १६

---

1. ख-घ-म—माजिमध्ये ।
2. क-घ-ङ-म—प्रतुतोद । ख—प्रतुदजवेन ।

गाण्डीवशब्देन तु यत्र योधा
भूमौ निपेतुर्बहवोऽतिवेलम् ।
शङ्खस्य शब्देन तु वानरस्य
शब्देन ते योधवरास्समन्तात् ॥ १७

अर्जुनः—

एषोऽतिमानी धृतराष्ट्रसूनुस्
सेनामुखे सर्वसमृद्धतेजाः ।
पराजयं नित्यममृष्यमाणो
निवर्तते युद्धमनाः पुरस्तात् ॥ १८

तमेव याहि प्रसमीक्ष्य यत्तस्
सुयोधनं तव सहानुजं च ॥ १८॥

वैशम्पायनः—

तमापतन्तं प्रसमीक्ष्य सर्वे
कुरुप्रवीरास्सहसाऽभ्यगच्छन् ।
प्रहस्य [1]जिष्णुस्स तु तानतीत्य
दुर्योधने द्वौ निचखान बाणौ ॥ १९॥

तेनार्दितो नाग इव प्रभिन्नः
पार्थेन विद्धो धृतराष्ट्रसूनुः ।

1. क-ख-च-म—वीर ।

युयुत्समानोऽतिरथेन सङ्ख्ये
[1]श्वसन् निगृह्यार्जुनमाससाद ॥ २०॥

स भीमधन्वानमुदग्रवेगं
धनञ्जयं शत्रुगणैरजय्यम् ।
आकर्णपूर्णायतचोदितेन
भल्लेन विव्याध ललाटमध्ये ॥ २१॥

स तेन बाणेन समर्पितेन
जाम्बूनदाभेन सुसंशितेन ।
रराज पार्थो रुधिरं क्षरन् वै
यथैकरश्मिर्भगवान् दिवाऽर्कः ॥ २२॥

अथास्य बाणेन विदारितस्य
प्रादुर्बभूवासृगजस्रमुष्णम् ।
सा तस्य जाम्बूनदपुष्पचित्रा
मालेव धाराऽभिविराजते स्म ॥ २३॥

स तेन बाणाभिहतस्तरस्वी
दुर्योधनेनोद्धतमन्युवेगः ।
शरानुपादाय विषाग्निकल्पान्
विव्याध राजानमदीनसत्वः ॥ २४॥

1. म—श्वसन् विगृ । क-ख—स्वयं विगृह्य । घ—स्वयं च गृह्य ।

दुर्योधनश्चापि तमुग्रतेजाः
पार्थश्च दुर्योधनमेकवीरः ।
अन्योन्यमाजौ पुरुषप्रवीरौ
समं समाजघ्नतुराजमीढौ ॥ २५॥

ततः प्रभिन्नेन महागजेन
महीधराभेन पुनर्विकर्णः ।
रथैश्चतुर्भिर्गजपादरक्षैः
कुन्तीसुतं पाण्डवमभ्यधावत् ॥ २६॥

तमापतन्तं त्वरितं गजेन्द्रं
धनञ्जयः कुम्भललाटमध्ये ।
आकर्णपूर्णेन दृढायसेन
बाणेन विव्याध भृशं तु वीरः ॥ २७॥

पार्थेन [1]विद्धस्स तु गृध्रपत्रो
ह्यापुङ्खदेशात् प्रविवेश नागम् ।
विदार्य शैलप्रवरप्रकाशं
यथाऽशनिः पर्वतमिन्द्रसृष्टः ॥ २८॥

शरप्रतप्तस्स तु नागराजः
प्रवेपिताङ्गो व्यथितान्तरात्मा ।

1. क—मुक्तः। ख-घ-ङ-म—सृष्टः।

संसीदमानो निपपात भूम्यां
वज्राहतं शृङ्गमिवाचलस्य ॥ २९॥
निपातिते दन्तिवरे पृथिव्यां
त्रासाद्विकर्णस्सहसाऽवतीर्य ।
तूर्णं पदान्यष्टशतानि गत्वा
विविंशतेस्स्यन्दनमारुरोह ॥ ३०॥
निहत्य नागं तु शरेण तेन
वज्रोपमेनाद्रिवरप्रकाशम् ।
तथाविधेनैव शरेण पार्थो
दुर्योधनं वक्षसि निर्बिभेद ॥ ३१॥
हते [1]द्विपे राजनि चैव भिन्ने
भग्ने विकर्णे च सपादरक्षे ।
गाण्डीवमुक्तै [2]रिषुभिः प्रणुन्नास्
ते योधमुख्यास्सहसा प्रजग्मुः ॥ ३२॥
दृष्ट्वैव बाणेन हतं च नागं
योधांश्च सर्वान् द्रवतो निरीक्ष्य ।
रथं समावृत्य कुरुप्रवीरो
रणात् प्रदुद्राव यतो न पार्थः ॥ ३३॥

1. छ-म—गजे ।
2. क-ख-घ-म—विशिखैः ।

तं भीमरूपं त्वरितं व्रजन्तं
दुर्योधनं शत्रुगणावमर्दी ।
अन्वा[1]गमद्योद्धुमनाः किरीटी
बाणाभिविद्धं रुधिरं वमन्तम् ॥ ३४॥

तस्मिन् महेष्वासवरेऽतिविद्धे
धनञ्जयेनाप्रतिमेन युद्धे ।
सर्वाणि सैन्यानि भयार्दितानि
त्रासं ययुः पार्थमुदीक्ष्य तानि ॥ ३५॥

ततस्तु ते शान्तिपराश्च योधा
दृष्ट्वाऽर्जुनं नागमिव प्रभिन्नम् ।
उच्चैर्नदन्तं बलवन्तमाजौ
मध्ये स्थितं सिंहमिवर्षभाणाम् ॥ ३६॥

गाण्डीवशब्देन तु पाण्डवस्य
योधा निपेतुस्सहसा रथेभ्यः ।
भयार्दिताः पार्थशराभितप्तास्
सिंहाभिपन्ना इव वारणेन्द्राः ॥ ३७॥

संरक्तनेत्र[2]स्स्वयमिन्द्रकल्पो
वैकर्तनं द्वादशभिः पृषत्कैः ।

1. स-ब—हृय । म—हन ।
2. क-स-ब—: पुनरिन्द्रकर्मा ।

[1]विव्याध तेषां द्रवतां समीक्ष्य
दुश्शासनं चैकरथेन पार्थः ॥ ३८॥

कर्णोऽब्रवीत् पार्थशराभितप्तो
दुर्योधनं दुष्प्रसहं च दृष्ट्वा ॥ ३९

कर्णः—

दृष्टोऽर्जुनोऽयं प्रतियाम शीघ्रं
श्रेयो विधास्याम इतो गतेन ।
मन्ये त्वया तात कृतं च कार्यं
यदर्जुनोऽस्माभिरिहाद्य दृष्टः ॥ ४०
भूयो वनं गच्छतु सव्यसाची
पश्यामि पूर्णं समयं न तेषाम् ॥ ४०॥

वैशम्पायनः—

शरार्दितास्ते युधि पाण्डवेन
प्रसस्रुरन्योन्यमथाह्वयन्तः ।
कर्णोऽब्रवी[2]दापतिते च जिष्णौ
दुर्योधनं सम्परिवार्य यामः ॥ ४१॥
सर्वास्त्रविद्वारणयूथपाभः
काले प्रहर्ता युधि शात्रवाणाम् ।

---

1. क-ख-च—विद्राव्य ।
2. क-ख-म—दापतत्येष जिष्णुः । दाह्वयत्येव जिष्णौ ।
च—दापतते विजिष्णुः ।

अयं च पार्थः पुनरागतो नो
मूलं च रक्ष्यं भरतर्षभाणाम् ॥ ४२॥

समीक्ष्य पार्थं सहसाऽऽपतन्तं
दुर्योधनः कालमिवात्तशस्त्रम् ।
भयार्तरूपश्शरणं प्रपेदे
द्रोणं च कर्णं च कृपं च भीष्मम् ॥ ४३॥

तं भीतरूपं शरणं व्रजन्तं
दुर्योधनं शत्रुसहो निषङ्गी ।
इत्यब्रवीत् प्रीतमनाः किरीटी
[1]बाणेन विद्धं रुधिरं वमन्तम् ॥ ४४॥

अर्जुनः—

विहाय कीर्तिं च यशश्च लोके
युद्धात् परावृत्य पलायसे किम् ।
न नन्दयिष्यन्ति तवाहतानि
तूर्याणि युद्धादवरोपितस्य ॥ ४५॥

न भोक्ष्यसे सोऽद्य महीं समग्रां
यानानि वस्त्राण्यथ भोजनानि ।
कल्याणगन्धीनि च चन्दनानि
[2]युद्धात् परावृत्य तु भोक्ष्यसे किम् ॥ ४६॥

1. ध—बाणातिविद्धं । 2. अ—इत आरभ्य सार्धश्लोको नास्ति ।

सुवर्णमाल्यानि च कुण्डलानि
　हारांश्च वैडूर्यकृतोपधानान् ॥ ४७

च्युतस्य युद्धाच्च तु शङ्खशब्दास्
　तथा भविष्यन्ति तवाद्य पाप ॥ ४७॥

न भोगहेतोर्वरचन्दनं च
　स्त्रियश्च मुख्या मधुरप्रलापाः ।
युद्धात् प्रयातस्य नरेन्द्रसूनोः
　परे च लोके फलिता न चेह ॥ ४८॥

युधिष्ठिरस्यास्मि निदेशकारी
　पार्थस्तृतीयो युधि च स्थिरोऽस्मि ।
तदर्थमावृत्य मुखं प्रयच्छ
　नरेन्द्रवृत्तं स्मर धार्तराष्ट्र ॥ ४९॥

मोघं तवैतद्भुवि नामधेयं
　दुर्योधनेतीह कृतं पुरस्तात् ।
दुर्योधनस्त्वं प्रथितोऽसि नाम्ना
　सुयोधनस्सन् निकृतिप्रधानः ॥ ५०॥
नहीह दुर्योधनता तवास्ति
　पलायमानस्य रणं विहाय ॥ ५१

न ते पुरस्तादथ पृष्ठतोऽपि
पश्यामि दुर्योधन रक्षितारम् ।
परीप्स युद्धेन कुरुप्रवीर
प्राणान् मया बाणबलाभितप्तान् ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ ४७ ॥ गोग्रहणपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[अस्मिन्नध्याये ५२ श्लोकाः]

## ॥ एकोनषष्टितमोऽध्यायः ॥

सोपहासमर्जुनसमाहूतेन दुर्योधनेन पुनः परावृत्याभियानम् ॥ १ ॥ भीष्मादिभिस्तद्रक्षणाय परितोऽवस्थानम् ॥ २ ॥ अर्जुनेन तैः सह चिरं प्रयुध्य पश्चात् संमोहनास्त्रप्रयोगः ॥ ३ ॥ उत्तरेणार्जुनचोदनयाऽस्त्रमोहितानां द्रोणादीनां वस्त्रापहरणम् ॥ ४ ॥ अर्जुनेन बाणैर्भीष्माद्यभिवादनम् ॥ ५ ॥

वैशम्पायनः—
आहूयमानस्तु स तेन सङ्ख्ये
महात्मना वै धृतराष्ट्रपुत्रः ।
[1]निवर्तितश्चैव गिराऽङ्कुशेन
गजो युवा मत्त इवाङ्कुशेन ॥ १

1. क-म—निवर्तितस्तस्य । ख—निवर्तितस्तेन ।
घ-च—निवर्तितस्तस्य वचोङ्कुशेन ।

सोऽमृष्यमाणो वचसाऽभिमृष्टो
महारथेनातिरथस्तरस्वी ।
ततस्स पर्यावनृते रथेन
भोगी यथा पादतलाभिमृष्टः ॥ २

ततो दुर्योधनः क्रुद्धो विक्षिपन् धनुरुत्तमम् ।
धृतिं कृत्वा सुविपुलां प्रत्युवाच धनञ्जयम् ॥ ३

दुर्योधनः—

नाहमिन्द्रादभिक्रुद्धाद् बिभेमि भरतर्षभ ॥ ३॥

भुक्त्वा सुविपुलं राज्यं वित्तानि च सुखानि च ।
किमर्थं युद्धसमये पलायिष्ये नरोत्तम ॥ ४॥

वैशम्पायनः—

एवमुक्त्वा महाबाहुः प्रत्ययुध्यत फल्गुनम् ।
[1]सन्निपत्य तु शीघ्राश्वस् तोत्रार्दित इव द्विपः ॥ ५॥

[2]आक्रम्य तरसा वीरो धनुर्वक्र इवोरगः ।
रथं रथेन सङ्गम्य योधयामास पाण्डवम् ॥' ६॥

तं प्रेक्ष्य कर्णः परि[3]वर्तमानो
विवृत्य संस्तभ्य च सर्वगात्रम् ।

---

1. क-ख-म—सन्निवर्त्य तु। घ—सन्निवृत्य च शीघ्राश्वः। च—सन्निवृत्य।
2. क-ख-ङ-च-म—आक्रान्तभोगस्तेजस्वी।
3. क—वर्तमानं, संस्तभ्य गात्राण्यतिविद्धगात्रः।
ख—वर्तमानं, विवृत्य संस्तम्भित। घ-ङ—वर्तमानं।

दुर्योधनं दक्षिणतो ररक्ष
[1]पार्थान्नृवीरो युधि हेममाली ॥ ७॥
भीष्मस्तदा शान्तनवो निवृत्य
हिरण्यकक्ष्यांस्त्वरयंस्तुरङ्गान् ।
दुर्योधनं पश्चिमतो ररक्ष
पार्थान्महाबाहुरधिज्यधन्वा ॥ ८॥
द्रोणः कृपश्चैव विविंशतिश्च
दुश्शासनश्चैव निवृत्य शीघ्रम् ।
सर्वे पुरस्तात् प्रणिधाय बाणान्
दुर्योधनार्थे [2]त्वरयाऽभ्युपेयुः ॥ ९॥
सर्वाण्यनीकानि निवर्तितानि
सम्प्रेक्ष्य पूर्णौघनिभानि पार्थः ।
हंसो यथा मेघमिवापतन्तं
धनञ्जयः प्रत्यपतत् तरस्वी ॥ १०॥
ते सर्वतस्सम्परिवार्य पार्थम्
अस्त्राणि दिव्यानि समाददानाः ।
ववर्षुरभ्येत्य शरैस्समन्ता-
न्मेघा यथा भूधरमम्बुवेगैः ॥ ११॥

---

1. म—पार्थान्महाबाहुरधिज्यधन्वा ।
द्रोणः कृपश्चेत्यादि वर्तते । भीष्मस्तदेत्यादिरेकः श्लोको नास्ति ।
2. अ-क-ख-ङ-च-म—त्वरिताऽ ।

ततोऽस्त्रमस्त्रेण निवार्य तेषां
[1]गाण्डीवधन्वा कुरुपुङ्गवानाम् ।
सम्मोहनं शत्रुसहोऽन्यदस्त्रं
प्रादुश्चकारैन्द्रमवारणीयम् ॥ १२॥

ततो दिशश्चानुदिशो निवार्य
शरैस्सुघोरैर्निशितैस्सुपुङ्खैः ।
गाण्डीवशब्देन मनांसि तेषां
महाबलः प्रव्यथयाञ्चकार ॥ १३॥

ततः पुनर्भीमरवं निगृह्य
दोर्भ्यां मुदा शङ्खमुदारघोषम् ।
व्यनादयत् सम्प्रदिशो दिशः खं
भुवं च पार्थो द्विषतां निहन्ता ॥ १४॥

ते शङ्ख[2]नादेन कुरुप्रवीरास्
सम्मोहिताः पार्थसमीरितेन ।
उत्सृज्य चापानि दुरा[3]नमानि
सर्वे [4]तदा मोहपरा बभूवुः ॥ १५॥

1. अ-ब—सार्धश्लोको नास्ति ।
2. क-ख-ब-ङ-म—शब्देन ।
3. ब—सदानि ।
4. क-म—तदा शान्तिपरा । अ—परा । ब—ततश्शान्तिपरा

तथा विसंज्ञेषु परेषु पार्थस्
संस्मृत्य सन्देशमथोत्तरायाः ।
निर्याहि वाहादिति मात्स्यपुत्रम्
उवाच यावत् कुरवो विसंज्ञाः ॥ १६॥

आचार्यशारद्वतयोस्सुशुक्ले
कर्णस्य पीतं रुचिरं सुवस्त्रम् ।
द्रौणेश्च राज्ञश्च तथैव नीले
वस्त्रे समादत्स्व नरप्रवीर ॥ १७॥

भीष्मस्य संज्ञां तु तथैव मन्ये
जानाति मेऽस्त्रप्रतिघातमेषः ।
एतस्य वाहान् कुरु सव्यतस्त्वम्
एवं प्रयातव्यममूढसंज्ञैः ॥ १८॥

रश्मीन् समुत्सृज्य ततो महात्मा
रथादवप्लुत्य विराटपुत्रः ।
वस्त्राण्युपादाय महारथानां
[1]नानाविधान्यद्भुतवर्णकानि ॥ १९॥

[2]महान्ति चीनांशुदुकूलकानि
पट्टांशुकानि विविधानि मनोज्ञकानि ।
हारांश्च राज्ञां मणिभूषणानि
सुवर्णनिष्काभरणानि मारिष ॥ २०॥

---

1. अ-क-ख-च-म—तूर्णं पुनस्त्वं रथमारुरोह ।
2. अ-क-ख-च-म—श्लोकत्रयं नोपलभ्यते

माणिक्यवाह्वङ्गदकङ्कणानि
अन्यानि राज्ञां मणिभूषणानि ।
वस्त्राण्युपादाय महारथानां
तूर्णं पुनस्त्वं रथमारुरोह ॥ २१॥

राज्ञश्च सर्वान् मृतसन्निकाशान्
सम्मोहनास्त्रेण विसंज्ञकल्पान् ।
नासाग्रविन्यस्तकराङ्गुलीकः
पार्थो जहास स्मयमानचेताः ॥ २२॥

ततोऽन्वशात् तांश्चतुरस्सदश्वान्
पुत्रो विराटस्य हिरण्यकक्ष्यान् ।
एते व्यतीयुर्द्विषतामनीकं
श्वेता वहन्तोऽर्जुनमाजिमध्यात् ॥ २३॥

तथा प्रयान्तं पुरुषप्रवीरं
भीष्मश्शरैरभ्यहनत् तरस्वी ।
स चापि भीष्मस्य हयान् निहत्य
विव्याध पार्थो [1]निशितैः पृषत्कैः ॥ २४॥

ततोऽर्जुनो भीष्ममपास्य युद्धे
विद्ध्वाऽस्य यन्तारम[2]धिज्यधन्वा ।
तस्थौ विमुक्तो रथबृन्दमध्याद्
राहुं विदार्येव सहस्ररश्मिः ॥ २५॥

लब्ध्वा तु संज्ञां पुरुषप्रवीरः
पार्थं समीक्ष्याथ महेन्द्रकल्पम् ।

---

1. क-ख-घ-म—दशभिः ।   2. क-ख-ब-म—रिष्ट ।

रणाद्विमुक्तं स्थितमेकमाजौ
स धार्तराष्ट्रस्त्वरितो बभाषे ॥ २६॥

दुर्योधनः—
अयं कथं स्विद्भवतो विमुक्तस्
तं वै प्रबध्नीत यथा न मुच्येत् ॥ २७

वैशम्पायनः—
तमब्रवीच्छान्तनवः प्रहस्य
क्व ते गता बुद्धिरभूत् क्व वीर्यम् ।
शान्तिं [1]समासाद्य यथा स्थितस्त्वम्
उत्सृज्य बाणांश्च धनुश्च चित्रम् ॥ २८

न त्वेव बीभत्सुरलं नृशंसं
कर्तुं न पापेऽस्य मनो निविष्टम् ।
जह्याच्च धर्मं त्रिदिवस्य हेतोस्
सर्वे तु तस्मान्न हता रणेऽस्मिन् ॥ २९

क्षिप्रं कुरून् याहि कुरुप्रवीर
विजित्य गाश्च प्रतियातु पार्थः ॥ २९॥

[2]सम्मोहनास्त्रप्रतिमोहितास्थ
यूयं न जानीत धनापहारम् ।
पश्यामि वस्त्राभरणानि राजन्
विराटपुत्रेण समाहृतानि ॥ ३०॥

1. क-ख-ङ-च-म—परामृश्य । ख-म—परां प्राप्य ।
2. ख-क-घ-च-म—कोशेषु इत आरभ्य श्लोकत्रयं नोपलभ्यते

नृपेषु सर्वेषु च मोहितेषु
　हन्तुं यदीच्छेत् स हनिष्यतीति ।
तदा तु धर्मात्मतया नृवीरो
　न चाहनद्वो बलभित्तनूजः ॥ ३१॥

भाग्येन युष्मानवधीन्न पार्थस्
　सन्धिं कुरूणामनुमन्यमानः ।
तद्यात यूयं सह सैनिकैस्तैर्
　हतावशिष्टैर्गजसाह्वयं पुरम् ॥ ३२॥

दुर्योधनस्तस्य तु तन्निशम्य
　पितामहस्यात्महितं वचोऽथ ।
अतीतकामो युधि सोऽत्यमर्षी
　राजा विनिश्श्वस्य बभूव तूष्णीम् ॥ ३३॥

तद्भीष्मवाक्यं हि समीक्ष्य सर्वे
　धनञ्जयाग्निं च विवर्धमानम् ।
निवर्तनायैव मतिं निदध्युर्
　दुर्योधनं तं परिरक्षमाणाः ॥ ३४॥

तान् प्रस्थितान् प्रीतमनास्स पार्थो
　धनञ्जयस्सर्वकुरुप्रवीरान् ।
आमन्त्र्य वीरोऽनुययौ मुहूर्तं
　गाण्डीवघोषेण विनद्य लोकम् ॥ ३५॥

ते चामनीकानि निरीक्ष्य पार्थो
　विकीर्णतूर्यध्वजकार्मुकाणि ।

गाण्डीवधन्वा प्रवरः कुरूणां
शङ्खं प्रदध्मौ बलवान् बलेन ॥ ३६॥

ते शङ्खशब्दं तुमुलं निशम्य
ध्वजस्य श्रुत्वा नदतोऽन्तरिक्षे ।
गाण्डीवशब्देन मुहुर्मुहुस्ते
भीता ययुस्सर्वधनं विहाय ॥ ३७॥

[1]ततोऽर्जुनो दूरतरं प्रभज्य
धनं च सर्वं निखिलं निवर्त्य ।
आपृच्छ्य तान् दूरतरं प्रयात्वा
धनञ्जयस्तत्र कुरून् महात्मा ॥ ३८॥

कुरूंश्च सर्वानभिवाद्य बाणैर्
न्यवर्ततोदग्रमनाः[2] शरैस्सह ॥ ३९

पितामहं शान्तनवं महात्मा
द्वाभ्यां शराभ्यामभिवाद्य वीरः ।
द्रोणं कृपं चैव कुरूंश्च मान्यान्
शरैर्विचित्रैरभिवाद्य सङ्ख्ये ॥ ४०

1. क-ख-घ-म—तानर्जुनो दूरतरं विभज्य ।
2. ख-घ-म—शनैस्सः ।

दुर्योधनस्योत्तमरत्नचित्रं
　　चिच्छेद पार्थो मकुटं शरौघैः ॥ ४०॥

[1]धनञ्जयं नागमिव प्रभिन्नं
　　विसृज्य शत्रून् परिवर्तमानम् ।
गास्ता विजित्याभिमुखं प्रयान्तं
　　ना [2]शक्नुवंस्ते कुरवोऽभिसर्तुम् ॥ ४१॥

धनञ्जयं सिंहमिवात्तवक्त्रं
　　गा वै विजित्याभिमुखं प्रयान्तम् ।
उदीक्षितुं पार्थिवास्ते न शेकुर्
　　यथैव मध्याह्नगतं हि सूर्यम् ॥ ४२॥

रक्तानि वासांसि च तानि गृह्य
　　रणोत्कटो नाग इव प्रभिन्नः ।
जित्वा च वैराटिमुवाच पार्थः
　　प्रहृष्टरूपो रथिनां वरिष्ठः ॥ ४३॥

---

1. ङ—अराजवंशस्य किमर्थमेतच्चित्रं नु धार्यं मकुटं त्वयेति।
　　सम्पातितं भूमितले सरत्नं प्रीतस्तदा मात्स्यसुतो बभूव॥
　　[अधिकः पाठः].
2. क-म—शक्नुवन्तः कुरवः प्रयातुम्। घ—न शक्नुवुस्ते कुरवः प्रयातुम्।
　　घ—न शक्नुवंस्ते प्रमुखे प्रयातुम्।

अर्जुनः—

आवर्तयाश्वान् पशवो जितास्ते
यातः परे प्रैहि पुरं प्रवेष्टुम् ।
उद्घुष्यतां ते विजयोऽद्य शीघ्रं
गात्रं तु ते सेवतु गन्धमाल्यम् ॥ ४४॥
माता तु ते नन्दतु बान्धवाश्च
त्वामद्य दृष्ट्वा समुदीर्णहर्षम् ॥ ४५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

॥ ४० ॥ गोग्रहणपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[अस्मिन्नध्याये ४५ श्लोकाः]

---

## ॥ षष्टितमोऽध्यायः ॥

अर्जुनेनोत्तरं प्रति युधिष्ठिरादितत्त्वप्रकाशनप्रतिषेधनम् ॥ १ ॥ तथा श्मशानमेत्य शमीतरौ गाण्डीवादिनिधानपूर्वकं पुनर्बृहन्नलावेषपरिग्रहेण सारथ्यकरणम् ॥ २ ॥ उत्तरेणार्जुनचोदनया स्वजयोद्घोषणाय नगरं प्रति दूतप्रेषणम् ॥ ३ ॥

---

वैशम्पायनः—

ततो विजित्य सङ्ग्रामे कुरून् गोवृषभेक्षणः ।
समानयामास तदा विराटस्य धनं महत् ॥ १

गतेषु च प्रभग्नेषु धार्तराष्ट्रेषु सर्वशः ।
वनान्निष्क्रम्य गह्नाद् बहवः कुरुसैनिकाः ॥ २
भयात् सन्त्रस्तमनसस् समाजग्मुस्ततस्ततः ॥ २॥
मुक्तकेशाः प्रदृश्यन्ते स्थिताः प्राञ्जलयस्तदा ।
क्षुत्पिपासापरिश्रान्ता विदेशस्था विचेतसः ॥ ३॥
ऊचुः प्राञ्जलयस्सर्वे ब्रूहि किं करवामहे ॥ ४
प्राणानन्तर्मनोयातान् प्रयाचिष्यामहे वयम् ।
वयं चार्जुन ते दासा ह्यनुरक्ष्या ह्यनाथकाः ॥ ५

अर्जुनः—

अनाथान् दुःखितान् दीनान् कृशान् वृद्धान् पराजितान् ।
न्यस्तशस्त्रान् निराशांश्च नाहं हन्मि कृताञ्जलीन् ॥ ६
भवन्तो यान्तु विस्रब्धा निर्भया ह्यकुतोभयाः ।
मम पादरजो[1] लक्ष्म्या जीवन्तु सुचिरं भुवि ॥ ७

वैशम्पायनः—

तस्य तामभयां वाचं श्रुत्वा योधास्समागताः ।
आयुःकीर्तियशोभिस्ते तमाशीर्भिरपूजयन् ॥ ८

स कर्म कृत्वा परमार्यकर्मा
[2]निवर्त्य शत्रून् द्विषतां निहन्ता ।

---

1. क-घ-ङ-म—रक्ष्या ।
2. क-घ-म—विजित्य । ख-ब—निहत्य ।

[1]यातो महामेघ इवातपान्ते
विद्राव्य पार्थः कुरुसैन्यमेकः ॥ ९

तं मात्स्यपुत्रं द्विषतां निहन्ता
वचोऽब्रवीत् सम्परिगृह्य राजन् ॥ ९॥

अर्जुनः—

पितुस्सकाशे तव तात सर्वे
वसन्ति पार्था विदितं त्वयेति ।
तान् मा स्म शंसीर्नगरं प्रविश्य
[2]भीतः प्रणश्येत् स च मत्स्यराजः ॥ १०॥

मया जिता सा ध्वजिनी कुरूणां
मया हि गावो विजिता द्विषद्भ्यः ।
एवं तु कामं नगरं प्रविश्य
त्वमात्मना कर्म कृतं ब्रवीहि ॥ ११॥

उत्तरः—

यत् ते कृतं कर्म न वारणीयं
तत् कर्म कर्तुं न ममास्ति शक्तिः ।
न त्वां प्रवक्ष्यामि पितुस्सकाशे
यावन्न मां वक्ष्यसि सव्यसाचिन् ॥ १२॥

---

1. क-ङ—चातो यथा मेघमिवा । ख-ग-म—चातो महामेघमिवा ।
2. अ-च—पादपञ्चकं नास्ति ।

**वैशम्पायनः—**

स शत्रुसेनां तरसा विजित्य
आच्छिद्य सर्वं च धनं कुरूणाम् ।
श्मशानमागम्य पुनश्शमीं ताम्
अभ्येत्य तस्थौ शरविक्षताङ्गः ॥ १३॥

ततस्स वह्निप्रतिमो महाकपिस्
सहैव भूतैर्दिवमुत्पपात ।
तथैव माया विहिता बभूव सा
ध्वजं च सिंहं युयुजे रथे पुनः ॥ १४॥

निधाय तच्चायुधमाजिमर्दनः
कुरूत्तमानामिषुधीन् ध्वजांस्तदा ।
प्रायात् स मात्स्यो नगरं प्रवेष्टुं
किरीटिना सारथिना महात्मा ॥ १५॥

पार्थश्च कृत्वा परमार्यकर्म
निहत्य शत्रून् द्विषतां निहन्ता ।
विधाय भूयश्च तथैव वेषं
जग्राह रश्मीन् पुनरुत्तरस्य ॥ १६॥

[1]बृहन्नलावेषमथो विधाय

प्रायात् स मात्स्यं नगरं प्रवेष्टुम् ॥ १७

पन्थानमुपसङ्क्रम्य फल्गुनो वाक्यमब्रवीत् ॥ १७॥

अर्जुनः—

यतो निवृत्ताः कुरवः प्रभग्नाश्शममास्थिताः ॥ १८

[2]राजपुत्र प्रपद्यस्व समानीतानि सर्वशः ।
गोकुलानि महाबाहो वीर गोपालकैस्सह ॥ १९

ततोऽपराह्णे यास्यामो विराटनगरं प्रति ।
आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः ॥ २०

गच्छन्तु त्वरितं दूता गोपालाः प्रेषितास्त्वया ।
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ २१

वैशम्पायनः—

उत्तरस्त्वरमाणोऽथ दूतानाज्ञापयत् ततः ।
वचनादर्जुनस्यैव आचक्षध्वं जयं मम ॥ २२

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि षष्ठितमोऽध्यायः ॥ ६० ॥
॥ ४७ ॥ गोग्रहणपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

---

1. म—इदमर्धं नास्ति ।
2. ख-ङ—परस्परमवेक्ष्यैव जग्मुस्ते हृतवाससः । [अधिकः पाठः]

## ॥ एकषष्टितमोऽध्यायः ॥

विराटेन युधिष्ठिरादिभिः सह सुशर्मादिजयानन्तरं पुरं प्रत्यागमनम् ॥ १ ॥ तथा उत्तरस्य कुरुविजयाय सह बृहन्नलया गमनश्रवणेन तद्रक्षणाय विराटेन सेनाचोदना ॥ २ ॥ अत्रान्तरे विराटाय दूतैरुत्तरजयनिवेदनम् ॥ ३ ॥ उत्तरजयश्रवणहृष्टेन विराटेन युधिष्ठिरेण सह द्यूतदेवनम् ॥ ४ ॥ विराटेनोत्तरप्रशंसने कङ्केन बृहन्नलया कुरुपराजयकथनम् ॥ ५ ॥ ततो रुष्टेन विराटेन कङ्कस्य कर्णमूलेऽक्षेणाभिहननम् ॥ ६ ॥ सैरन्ध्र्या क्षतात् प्रस्रवतो रक्तस्य निजोत्तरीयेण ग्रहणम् ॥ ७ ॥ तथा विराटेन तद्ग्रहणप्रश्ने तत्कथनम् ॥ ८ ॥

वैशम्पायनः—

[1]अवजित्य धनं चैव विराटो वाहिनीपतिः ।
प्राविशन्नगरं हृष्टश् चतुर्भिस्सह पाण्डवैः ॥ १
जित्वा त्रिगर्तान् सङ्ग्रामे गाश्चैवानाय्य केवलाः ।
अशोभत महाराजस् सह पार्थैश्श्रिया वृतः ॥ २
तमासनगतं वीरं सुहृदां नन्दवर्धनम् ।
उपतस्थुः प्रकृतयस् समस्तैर्ब्राह्मणैस्सह ॥ ३
सभाजितस्स ताभिस्तु प्रतिनन्द्य स मत्स्यराट् ।
विसर्जयामास तदा द्विजांश्च प्रकृतीस्तदा ॥ ४
ततस्स राजा मात्स्यानां विराटो वाहिनीपतिः ।
[2]उत्तरं परिपप्रच्छ क यात इति चाब्रवीत् ॥ ५

1. क-म—विजित्य गोधनं चापि । ख—विजित्य च धनं चापि ।
2. ख—प्रविश्यान्तः पुरं रम्यं स्त्रीशतैरुपशोभितम् । [अधिकः पाठः]

[1]आचख्युस्तस्य संहृष्टास् स्त्रियः कन्याश्च वेश्मनि ।
अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम् ॥ ६
ताञ्जेतुमतिसंरब्ध एक एवातिसाहसात् ।
बृहन्नलासहायश्च निर्यातः पृथिवीञ्जयः ॥ ७
उपयातानतिरथान् द्रोणं शान्तनवं कृपम् ।
कर्णं दुर्योधनं चैव द्रोणपुत्रं च षड्रथान् ॥ ८

ततो विराटः परमाभितप्तः
पुत्रं निशम्यैकरथेन यातम् ।
बृहन्नलासारथिमाजिमर्दनं
प्रोवाच सर्वानथ मन्त्रिमुख्यान् ॥ ९

राजा—

गवां शतसहस्राणि अभिभूयं ममात्मजम् ।
कुरवः कालयन्ति स्म सर्वे युद्धविशारदाः ॥ १०
तस्माद्गच्छन्तु मे योधा बलेन महता वृताः ।
उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ॥ ११

वैशम्पायनः—

हयांश्च नागांश्च रथांश्च शीघ्रं
वादित्रसङ्घांश्च ततः प्रभूतान् ।
प्रस्थापयामास सुतस्य हेतोर्
विचित्रनानाभरणोपपन्नान् ॥ १२

---

1. क—कुमारमाशु आनीयाद् यदि जीवति वा न वा । [अधिकः पाठः]

एवं स राजा मात्स्यानां महानक्षौहिणीपतिः ।
न्यादिदेशाथ स क्षिप्रं वाहिनीं चतुरङ्गिणीम् ॥ १३

विराटः—

कुमारमाशु जानीत यदि जीवति वा न वा ।
यस्य यन्ता गतष्षण्डो मन्येऽहं न स जीवति ॥ १४

वैशम्पायनः—

तमब्रवीद्धर्मसुतो विराटम्
आर्तं विदित्वा कुरुभिः प्रतप्तम् ॥ १४॥

कङ्कः—

बृहन्नला सारथिश्चेन्नरेन्द्र
परे न नेष्यन्ति तवाद्य गाश्च ॥ १५

सर्वान् महीपान् सहितान् कुरूंश्च
तथैव देवासुरनागयक्षान् ।
अलं विजेतुं समरे सुतस्ते
स्वनुष्ठितस्सारथिना हि तेन॥ १६

सर्वथा कुरवश्चापि ये चान्ये वसुधाधिपाः ।
त्रिगर्तान् निर्जितान् श्रुत्वा न स्थास्यन्ति कथञ्चन ॥ १७

वैशम्पायनः—

अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः ।
विराटनगरं प्राप्य [1]जयमावेदयंस्तदा ॥ १८

राजानं तत आचख्युर् मन्त्रिभिर्जयमुत्तमम् ।
पराजयं कुरूणां चाप्युपायान्तं तथोत्तरम् ॥ १९

---

1. क-ख-म—जयं प्रावेदयंस्तदा । 　 घ—जयमाघोषयंस्तदा ।

दूताः—

सर्वा विनिर्जिता गावः कुरवश्च पराजिताः ।
उत्तरस्सह सूतेन कुशली च परन्तपः ॥ २०

कङ्कः—

दिष्ट्या ते निर्जिता गावः कुरवश्च पराजिताः ।
दिष्ट्या [1]जीवति ते पुत्रश् श्रूयते पार्थिवर्षभ ॥ २१

नाद्भुतं त्विह मन्येऽहं यत् ते पुत्रोऽजयत् कुरून् ।
ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नला ॥ २२

[2]देवेन्द्रसारथिश्चैव मातलिर्लघुविक्रमः ।
कृष्णस्य सारथिश्चैव न बृहन्नलया समौ ॥ २३

वैशम्पायनः—

ततो विराटो नृपतिस सम्प्रहृष्टतनूरुहः ।
श्रुत्वा तु विजयं तस्य कुमारस्यामितौजसः ॥ २४
सन्तोषयित्वा दूतांस्तान् धनरत्नैश्च सर्वशः ॥ २४॥

[3]गते त्वनुबले तस्मिन् दूतवाक्यं निशम्य तु ।
उत्तरस्य जयं प्रीतो विराटः प्रत्यभाषत ॥ २५॥

विराटः—

राजमार्गाः क्रियन्तां वै पताकाभिरलङ्कृताः ।

---

1. ख—ते कुशली पुत्रश् । म—जीवति पुत्रस्ते ।

2. क-च-म—नास्त्ययं श्लोकः ।

3. ख—गते त्वनुजने तस्मिन् । म—हर्षेण महताऽऽविष्टो ।

पुष्पोपहारैरर्च्यन्तां देवताश्चापि सर्वशः ॥ २६॥

कुमारा योधमुख्याश्च गणिकाश्च स्वलङ्कृताः ।
वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम ॥ २७॥

भवन्तु ते लब्धजये सुते मे
पौराश्च नार्यश्च [1]परे च मर्त्याः ।
ते शुक्लवस्त्राः प्रभवन्तु मार्गे
सुगन्धमाल्याभरणाश्च नार्यः ॥ २८॥

भजन्तु सर्वा गणिकास्सुतं मे
नार्यश्च [2]सर्वास्सहसोदराश्च ।
स्वलङ्कृतास्ता सुभगा[3]स्सुवेषाः
पुत्रस्य पन्थानमनुव्रजन्तु ॥ २९॥

घण्टापणवकश्शीघ्रं मत्तमारुह्य वारणम् ।
शृङ्गाटकेषु सर्वेषु समाख्यातु जयं मम ॥ ३०॥

उत्तरा च कुमारीभिर् बह्वाभरणभूषिता ।
सखीं विजितसङ्ग्रामां प्रत्युद्यातु बृहन्नलाम् ॥ ३१॥

वैशम्पायनः—

श्रुत्वा तु वचनं राज्ञः पौरास्स्वस्तिकपाणयः ।

---

1. क-ख-म—पुरे ।
2. क-ग—कन्याः सह सैनिकाभिः । ख-म—सर्वाः सहसैनिकाश्च ।
3. क-ख-ग—श्च वेश्याः ।

[1]सर्वे सुप्रीतमनसः प्रतिजग्मुर्यथोचितम् ॥ ३२॥

सूताश्च सर्वे सह[2]सैनिकाश्च
दृष्ट्वा विराटस्य जयं जनौघाः ।
[3]भेरीश्च तूर्याणि च वारिजांश्च
वेषैः परार्ध्यैः प्रमदाजनाश्च ॥ ३३॥
वन्दिप्रवादाः पणवादिकाश्च
तथैव वाद्यानि च वंशशब्दाः ।
[4]सकांस्यतालं मधुरं च गीतम्
आदाय नार्यो नगरान्निरीयुः ॥ ३४॥
प्रत्युद्ययुः पुत्रमनन्तवीर्यं
ते ब्राह्मणाश्शान्तिपराः प्रधानाः ।
स्वाध्यायवेदाध्ययनक्रमज्ञास्
स्वस्तिक्रियागीतजयप्रधानाः* ॥ ३५॥

प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलङ्कृताः ।
मत्स्यराजो महाप्राज्ञः प्रहृष्ट इदमब्रवीत् ॥ ३६॥

विराट—
अक्षानाहर सैरन्ध्रि कङ्क द्यूतं प्रवर्तताम् ॥ ३७

1. अ-ख-ङ-च-म—कोशेषु इदमर्धं न दृश्यते ।
ख—तथैव चक्रुः संहृष्टाः पौराः स्वस्तिकपाणयः । [पाठान्तरम्]
2. अ-ख-ङ-म—मागधाश्च
3. अ—परार्ध्यवेषैः प्रमदाजनस्य वन्दिप्रवादैः पणवानकैश्च ।
तथैव वाद्यैस्सह शङ्खमुख्यैर् अन्यैश्च वाद्यैर्मधुरप्रणादैः ॥
[पाठान्तरं]
4. म—सकंसतालं । ख—समं सतालं । ङ—समं सतालैर् ।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

वैशम्पायनः—

तं तथावादिनं दृष्ट्वा पाण्डवः प्रत्यभाषत ॥ ३७॥

कङ्कः—

न दीवितव्यं हृष्टेन कितवेनेति नश्श्रुतम् ।

न त्वामद्य मुदा युक्तम् अहं देवितुमुत्सहे ॥ ३८॥

प्रियं तु ते चिकीर्षामि वर्ततां यदि रोचते ॥ ३९

1विराटः—

स्त्रियो गावो हिरण्यं च यच्चान्यद्वसु किञ्चन ।

न मे किञ्चित् त्वया रक्ष्यम् अन्तरेणापि देवितम् ॥ ४०

कङ्कः—

किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद ।

देवने बहवो दोषास् तस्मात् तत् परिवर्जयेत् ॥ ४१

श्रुतस्ते यदि वा दृष्टः पाण्डवो वा युधिष्ठिरः ।

स राज्यं धनमक्षय्यं पणमेकममन्यत ॥ ४२

कृष्णां च भार्यां दयितां भ्रातॄंश्च त्रिदशोपमान् ।

निस्संशयं स कितवः पश्चात् तपति पाण्डवः ॥ ४३

विविधानां च रत्नानां धनानां च पराजये ।

अथ क्षितिविनाशश्च वाक्पारुष्यमनन्तरम् ॥ ४४

अविश्वास्यं बुधैर्नित्यम् एकाह्ना द्रव्यनाशनम् ।

1. ख—ङ—द्यूतं कर्तुं न वाञ्छामि नरेन्द्र जनसंसदि । [अधिकः पाठः]

द्यूते हारितवान् सर्वं तस्माद् द्यूतं न रोचये ॥ ४५
अथवा मन्यसे राजन् दीव्यतां यदि रोचते ॥ ४५॥

वैशम्पायनः—

एवमाभाष्य वादैस्तु क्रीडतस्तौ नरोत्तमौ ।
प्रवर्तमाने द्यूते तु मात्स्यः पाण्डवमब्रवीत् ॥ ४६॥

विराटः—

पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ।
कुरवोऽतिरथास्सर्वे देवैरपि सुदुर्जयाः ॥ ४७॥

वैशम्पायनः—

ततोऽब्रवीद्धर्मराजो द्यूते मात्स्यं युधिष्ठिरः ॥ ४८

युधिष्ठिरः—

दिष्ट्या ते विजिता गावः कुरवश्च पराजिताः ।
अत्यद्भुतमहं मन्ये उत्तरश्चेत् कूरूञ्जयेत् ॥ ४९
[1]यन्ता बृहन्नला यस्य सा कथञ्चिद्विजेष्यते ॥ ४९॥

वैशम्पायनः—

ततो विराटः क्षुभितो मन्युना च परिप्लुतः ।
उवाच वचनं क्रुद्धः परिव्राजमनन्तरम् ॥ ५०॥

विराटः—

तादृशेन तु योधेन महेष्वासेन धीमता ।
कुरवो निर्जिता युद्धे तत्र किं ब्राह्मणाद्भुतम् ॥ ५१॥

1. म—इदमर्धं नास्ति ।

युधिष्ठिरः—

यन्ता तथाविधो यस्य रथे तिष्ठति वीर्यवान् ।
यदि तद्दुष्करं कुर्यात् तत्र किं नाद्भुतं भवेत् ॥ ५२॥

विराटः—

पुमांसो बहवो दृष्टास् सूताश्च बहवो मया ।
विक्रम्य यन्ता योद्धा च न मे दृष्टः कथञ्चन ॥ ५३॥

विप्रियं नाचरेद्राज्ञाम् अनुरूपं प्रियं वदेत् ।
आचरन् विप्रियं राज्ञां न जातु सुखमेधते ॥ ५४॥

वयस्यत्वात्तु ते सर्वम् अपराधमिमं क्षमे ।
नेदृशीं प्रवदेर्वाचं यदि जीवितुमिच्छसि ॥ ५५॥

वैशम्पायनः—

ततोऽब्रवीत् पुनः कङ्कः प्रहस्य कुरुवर्धनः ॥ ५६

कङ्कः—

बृहन्नलाया राजेन्द्र घुष्यतां नगरे जयः ।
उत्तरेण तु सारथ्यं कृतं नूनं भविष्यति ॥ ५७

निमित्तं किञ्चिदुत्पन्नं तर्कश्चापि दृढो मम ।
यतो जानामि राजेन्द्र नान्यथा तद्भविष्यति ॥ ५८

कुरवोऽपि महावीर्या देवैरपि सुदुर्जयाः ।
ससोमवरुणादित्यैस् सकुबेरहुताशनैः ॥ ५९

यत्र शान्तनवो भीष्मो द्रोणकर्णौ च दुर्जयौ ।

अश्वत्थामा विकर्णश्च सोमदत्तो जयद्रथः ॥ ६०

भूरिश्रवाश्शलो भूरिर् जलसन्धश्च वीर्यवान् ।

दुर्योधनो दुष्प्रसहो दुश्शासनविविंशती ॥ ६१

वृषसेनोऽश्वसेनश्च वातवेगसुवर्चसौ ।

बाह्लीकश्शूरसेनश्च युयुत्सुश्च परन्तपः ॥ ६२

सौबलश्शकुनिश्चैव द्युमत्सेनश्च साल्वराट् ।

अन्ये च बहवश्शूरा नानाजनपदेश्वराः ॥ ६३

कृपेणाचार्यमुख्येन सहिताः कुरवो नृप ।

सज्जकार्मुकनिस्त्रिंशा रथिनो रथयूथपाः ॥ ६४

अन्ये चैव महावीर्या राजपुत्रा महारथाः ॥ ६४॥

मरुद्गणैः परिवृतस् साक्षादपि पुरन्दरः ।

तद्बलं न जयेत् क्रुद्धो भीष्मद्रोणादिभिर्वृतम् ॥ ६५॥

कस्तद्बृहन्नलादन्यो मनुष्यः प्रतियोत्स्यति ॥ ६६

1वैशम्पायनः

तेन संक्षुभितो राजा दीर्यमाणेन चेतसा ।

अब्रवीद्वचनं तात अजानन् वै युधिष्ठिरम् ॥ ६७

विराटः—

कङ्क मा त्वं ब्रवीर्वाक्यं प्रतिकूलं द्विजोत्तम ।

---

1. ख-घ-ङ—यस्य बाहुबले तुल्यो न भविष्यति कश्चन ।
अतीव समरं दृष्ट्वा हर्षो यस्याभिवर्धते ॥
किमेवं पुरुषो लोके दिवि वा भुवि विद्यते ।
[अधिकः पाठः]

बहुशः प्रतिषिद्ध[1]स्सन् न चेद्वाचं नियच्छसि ॥ ६८
नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ॥ ६८॥

वैशम्पायनः—

ततः प्रक्षुभितो राजा सोऽक्षेणाभ्यहनद्भृशम् ॥ ६९
[2]ततस्तक्षकभोगाभं बाहुमुद्यम्य दक्षिणम् ।
[3]विराटः प्राहरत् क्रुद्धः कर्णमाश्रित्य दक्षिणम् ॥ ७०
मुखे युधिष्ठिरं कोपान्मैवमित्यवभर्त्सयन् ॥ ७०॥
बलवत् प्रतिविद्धस्य ततश्शोणितमागमत् ॥ ७१
अक्षेणाभिहतो राजा विराटेन महीपतिः ।
तूष्णीमासीन्महाबाहुः कृष्णां सम्प्रेक्ष्य दुःखितः ॥ ७२
तस्य रक्तोत्पलनिभं शिरसश्शोणितं तदा ।
प्रावर्तत महाबाहोर् अभिघातान्महात्मनः ॥ ७३
तदप्राप्तं महीं पार्थः पाणिभ्यां [4]समधारयत् ।
अवैक्षत च धर्मात्मा द्रौपदीं पार्श्वतास्स्थिताम् ॥ ७४
सा वेदनामभिज्ञाय भर्तुश्चित्तवशानुगा ।
सा विषण्णा च भीता च क्रुद्धा च द्रुपदात्मजा ॥ ७५
बाष्पं नियम्य [5]दुःखेन भर्तुर्निश्श्रेयकारिणी ।

1. क-ख-घ-म —स्त्वं ।
2. क-ङ—बाहुं तक्षकभोगाभमुत्क्षिप्य समलङ्कृतम् । ख-म—तस्य ।
3. अ-ङ-च-म—इदमर्धं नास्ति । 4. क-व—समवारयत् ।
5. क-व—दुःखं च । म—दुःखं च भर्तृनि ।
ख—कृच्छ्रेण भर्तुर्निश्श्रेयसैषिणी ।

उत्तरीयेण सूक्ष्मेण तूर्णं जग्राह शोणितम् ॥ ७६

निगृह्य रक्तं वस्त्रेण सैरन्ध्री दुःखमोहिता ।
सौवर्णं गृह्य भृङ्गारं शोणितं तदपामृजत् ॥ ७७
युधिष्ठिरस्य राजेन्द्र द्रुपद[1]स्यात्मजा तदा ॥ ७७॥

विराटः—
सैरन्ध्रि किमिदं रक्तम् उत्तरीयेण गृह्यते ।
कोऽत्र हेतुर्विशालाक्षि तन्ममाचक्ष्व तत्त्वतः ॥ ७८॥

सैरन्ध्री—
रक्तबिन्दूनि कङ्कस्य यावन्ति धरणीं ययुः ।
तावद्वर्षाणि ते राष्ट्रेष्वनावृष्टिर्भविष्यति ॥ ७९॥
एतन्निमित्तं मात्स्येन्द्र कङ्कस्य रुधिरं मया ।
गृहीतमुत्तरीयेण विनाशो मा भवेत् तव[2] ॥ ८०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

॥ ४७ ॥ गोग्रहणपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[अस्मिन्नध्याये ८०॥ श्लोकाः]

---

1. क-ख-घ-म—स्य सुता ।
2. ख-घ—यतीनां यो विहन्येत तस्यायुर्विनशिष्यति ।
यो यतीनां नियम्येत सहस्रं यातना यमे ॥
यतौ रक्तं दर्शयति यावत्पांसुरगृह्यत ।
तावन्तः पितृलोकस्थाः पितरः प्रपतन्त्यधः ॥
इति ज्ञात्वा विराटेन्द्र धृतं रक्तं च वाससा ।
मया तव हितार्थाय त्वयि प्रणयकारणात् ॥ [अधिकः पाठः]

## ॥ द्विषष्टितमोऽध्यायः ॥

अर्जुनकुरुयुद्धदिदृक्षया समागतैर्देवैरर्जुनं श्लाघमानैः सद्भिः पुनस्स्वर्गं प्रति गमनम् ॥ १ ॥ उत्तरेण सर्वादिक्षघोषं पौरैः प्रत्युद्गम्यमानेन स्वनगरप्रवेशनम् ॥ २ ॥ उत्तरेण राजाभ्यनुज्ञयाऽन्तःपुरमेत्य तदभिवादनम् ॥ ३ ॥ युधिष्ठिरव्रणावलोकनभीतोत्तरचोदनया विराटेन युधिष्ठिरक्षमापणम् ॥ ४ ॥ ततोऽर्जुनस्यान्तःपुरप्रवेशः ॥ ५॥ उत्तरस्यैव जेतृत्वभ्रमहृष्टेन विराटेन तत्प्रशंसनम् ॥ ६ ॥ तेन तं प्रति कस्यचिद्देवपुत्रस्यैव जेतृत्वकथनम् ॥ ७ ॥ ततोऽर्जुनेनोत्तराप्रभृतिभ्यः कुरुवस्त्रप्रदानम् ॥ ८ ॥ भीमार्जुनादिभी रात्रौ युधिष्ठिरसमीपगमनम् ॥ ९ ॥ युधिष्ठिरेण सहर्षं स्वानभिभाषणे अर्जुनेन भीमं प्रति तत्कारणप्रश्नः ॥ १० ॥ युधिष्ठिरेण तं प्रति विराटेनाक्षताडनस्य तत्कारणत्वकथनम् ॥ ११ ॥ भीमादिभिः क्रोधाद्विराटवधाध्यवसाये युधिष्ठिरेण हेतुकथनेन तत्प्रतिषेधनम् ॥ १२ ॥

जनमेजयः—

युद्धं त्वमानुषं द्रष्टुम् आगतास्त्रिदशेश्वराः ।
किमकुर्वन्त ते पश्चात् कथयस्व ममानघ ॥ १

वैशम्पायनः—

वासवप्रमुखास्सर्वे देवास्सर्षिपुरोगमाः ।
यक्षगन्धर्वसङ्घाश्च गणा ह्यप्सरसां तथा ॥ २
युद्धं त्वमानुषं दृष्ट्वा कुरूणां फल्गुनस्य च ।
एकस्य च बहूनां च रौद्रमत्युग्रदर्शनम् ॥ ३
अस्त्राणामथ दिव्यानां प्रयोगानथ सङ्ग्रहान् ।
लघु सुष्ठु च चित्रं च कृतीनां च प्रयत्नतः ॥ ४
भीष्मं शारद्वतं द्रोणं कर्णं गाण्डीवधन्वना ।

जितांश्चान्यान् भूमिपालान् दृष्ट्वा जग्मुर्दिवौकसः ॥ ५
सर्वे ते परितुष्टाश्च प्रशस्य च मुहुर्मुहुः ।
असङ्गगतिना तेन विमानेनाशुगामिना ॥ ६
प्रतिजग्मु[1]रसङ्गेन त्रिदिवं च दिवौकसः ॥ ६॥
[2]कुरवोऽर्जुनबाणैश्च ताडिताश्शराविक्षताः ।
कुरूनभिमुखा यातास् समग्रबलवाहनाः ॥ ७॥
विराटनगराच्चैव गजाश्वरथसङ्कुलाः ।
योधैः क्षत्रियदायादैर् बलवद्भिरधिष्ठिताः ॥ ८॥
विराटप्रहिता सेना नगराच्छीघ्रयायिनी ।
उत्तरं सह सूतेन प्रत्ययात् तम[3]नन्तरम् ॥ ९॥
तस्मिंस्तूर्यशताकीर्णे हस्त्यश्वरथसङ्कुले ।
प्रहर्षस्त्रीकुमाराणां तुमुलस्समपद्यत ॥ १०॥
अर्जुनस्तु ततो दृष्ट्वा सैन्यरेणुं समुत्थितम् ।

---

1. क-च—रसङ्ग्येन । ख—रसङ्गास्ते ।
2. ख-च—कुरवो निर्जितास्सर्वे भीष्मद्रोणकृपादयः ।
अजय्यास्त्रिदशैस्सर्वैः सेन्द्रैस्सर्वैस्सुरासुरैः ॥
पार्थेनैकेन सङ्ग्रामे विस्मयो नो महानहो ।
कस्मिन् मुहूर्ते सञ्जातः कस्य धर्मस्य वा फलम् ॥
किमाश्चर्यं फल्गुनेऽस्मिन् यो रुद्रेण न्ययोधयत् ।
निवातकवचानाञ्च यस्त्रिंशत्कोटिसम्मितान् ॥
तस्य चैतत् किमाश्चर्यं स्तुवन्त इति ते सुराः ।
जग्मुस्सुरालयं दृष्टा विस्मयाविष्टचेतसः ॥ [अधिकः पाठः]
3. क-ख-च—रिन्वमम् ।

सैन्यध्वजं निशाम्याथ वैराटिं समभाषत ॥ ११॥

अर्जुनः—

नगरे तुमुलश्शब्दो रेणुश्चाक्रमते नभः ।
किं नु खल्वपयातास्ते नगरं कुरवो गताः ॥ १२॥
ते चैव निर्जिताऽस्माभिर् महेष्वासास्सुतेजसः ।
आमुञ्च कवचं वीर चोदयस्व च वाजिनः ॥ १३॥
जवेनाभिप्रपद्यस्व विराटनगरं प्रति ॥ १४
न तावत् तलनिर्घोषं गाण्डीवस्य च निस्वनम् ।
ध्वजं वा दर्शयिष्यामि कदाचित् स्वजनो भवेत् ॥ १५

उत्तरः—

सेनाग्रमेतन्मात्स्यानां गणिकाश्च स्वलङ्कृताः ।
कन्या रथेषु दृश्यन्ते योधा विविधवाससः ॥ १६
उत्तरामत्र पश्यामि सखीभिः परिवारिताम् ।
अनीकानि प्रकाशन्ते हस्तिनोऽश्वाश्च वर्मिताः ॥ १७
पादाता रथिनश्चैव बहवो न च शस्त्रिणः ।
विराटवचनात् सर्वे संहृष्टाः प्रति[1]भान्ति मे ॥ १८
न च मेऽत्र प्रतीघातश् चित्तस्य स्वजने यथा ॥ १८॥

वैशम्पायनः—

ततश्शीघ्रं समागम्य उत्तर[2]स्स्वजनं विभुः ।

---

1 क-ख-घ—भाति ।

2. क—स्वजनो बहु । परस्परमभिजघ्नं सस्वजे तं समागतम् ।
ख-घ-ङ-म—स्वजनं बहु ॥ परस्परमभिलघ्नः सस्वजे तं समागतम् ॥

परस्परमभिघ्नन्स् सस्वजे तं समागतः ॥ १९॥

प्रीतिमान् पुरुषव्याघ्रो हर्षयुक्तः पुनः पुनः ॥ २०

जना:—

दिष्ट्या जयसि भद्रं ते दिष्ट्या सूता बृहन्नला ।

दिष्ट्या सङ्ग्राममागम्य भयं तव न किञ्चन ॥ २१

उत्तरः—

अजैषीदेष ताञ्जिष्णुः कुरूनेकरथो रणे ।

[1]एतस्य बाहुवीर्यं तद् येन गावो जिता मया ॥ २२

कुरवो निर्जिता यस्मात् सङ्ग्रामेऽमिततेजसः ।

अकार्षीदेष तत् कर्म देवपुत्रोपमो युवा ॥ २३

एष तत् पुरुषव्याघ्रो विक्षोभ्य कुरुमण्डलम् ।

गावः प्रसह्य जितवान् रणे मां चाभ्यपालयत् ॥ २४

वैशम्पायनः—

उत्तरस्य वचश्श्रुत्वा शंसमानस्य चार्जुनम् ।

चोदिता राजपुत्रेण जयं मङ्गलवादिनः ॥ २५

ततो गन्धैश्च माल्यैश्च धूपैश्च वसुसम्भृतैः ।

कन्याः पार्थममित्रघ्नं किरन्त्यस्समपूजयन् ॥ २६

आपूर्यमाणो माल्यैश्च गन्धैश्च विविधैश्शुभैः ।

सम्पूज्यमानो लोकेन नगरद्वारमागमत् ॥ २७

---

1. अ-ङ-च—एकस्य युधि वीर्येण युधि

भेर्यश्च तूर्याणि च वेणवश्च
[1]विचित्रवेषाः प्रमदाजनाश्च ।
विराटराजस्य महाबलस्य
निष्क्रम्य भूमिञ्जयमभ्यनन्दन् ॥ २८

प्रशस्यमानस्तु जयेन तत्र
पुत्रो विराटस्य न हृष्यति स्म ।
सम्भाष्यमाणस्तु जयेन तेन
सोऽन्तर्मना: पाण्डवमीक्षमाणः ॥ २९

[2]पुत्र्या विराटस्य ततो वराणि
वस्त्राण्यदात् पाण्डुसुतस्सखीभ्यः ।
सभाजयंश्चापि समागतास्ता
दृष्ट्वा जयं तच्च बलं कुमार्यः* ३०

सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैरपि ।
आसाद्यान्तःपुरद्वारं पित्रे सम्प्रत्यवेदयत् ॥॰ ३१

ततो द्वास्स्थस्समागम्य प्रणिपत्य कृताञ्जलिः ।
वर्धयित्वा जयाशीर्भिर् इदं वचनमब्रवीत् ॥ ३२

---

1. क—पुरा विराटस्य महाबलस्य ।
निष्क्रम्य भूमिञ्जयमभ्यनन्दन् बृहन्नलासारथिनं प्रशस्य ॥
2. क-ख-ङ—पुत्र्यै । [ इति पाठान्तरम् ]
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

द्वास्थः—

राजन् पृथुयशाः पुत्रो जित्वा शत्रून् समागतः ।
उत्तरस्सह सूतेन द्वारि तिष्ठति वारितः ॥ ३३

कुमारैर्योधमुख्यैश्च गणिकाभिश्च संवृतः ।
पौरजानपदैर्युक्तः पूज्यमानो जयाशिषा ॥ ३४

वैशम्पायनः—

ततो हृष्टो महीपालः क्षत्तारमिदमब्रवीत् ॥ ३४॥

विराटः—

प्रवेशयोभौ तूर्णं तौ दर्शनेप्सुरहं तयोः ॥ ३५

वैशम्पायनः—

क्षत्तारं कुरुराजस्तु शनैः कर्णे [1]उवाच ह ॥ ३५॥

कङ्कः—

उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नला ॥ ३६
एतस्य हि महाबाहोर् व्रतं नित्यं महात्मनः ॥ ३६॥
यो ममाङ्गे व्रणं कुर्याच् छोणितं वा प्रदर्शयेत् ।
अन्यत्र सङ्ग्रामगतान्न स जीवेत् कथञ्चन ॥ ३७॥
न्यक्तं भृशं सुसङ्क्रुद्धो मां दृष्ट्वैव सशोणितम् ।
विराटं हि सहामात्यं हन्यात् सबलवाहनम् ॥ ३८॥

---

1. क-ख-ङ-च-म—उपाजपत् । व—उपादिशत् ।

इन्द्रं वाऽपि कुबेरं वा यमं वा वरुणं तथा ।
मम शोणितकर्तारं मृद्गीयात् किं पुनर्नरम् ॥ ३९॥

क्षणमात्रं स तत्रैव द्वारि तिष्ठतु वीर्यवान् ॥ ४०

वैशम्पायनः—

इति प्रोवाच धर्मात्मा युधिष्ठिर उदारधीः ॥ ४०॥

इत्युक्त्वा क्षमया युक्तो धर्मराजो युधिष्ठिरः ।
सभायां सह मात्स्येन तूष्णीमुपविवेश ह ॥ ४१॥

ततो राजसुतो ज्येष्ठः प्राविशत् पृथिवीञ्जयः ॥ ४२
[1]अभिवाद्य पितुः पादौ धर्मराजस्य पश्यतः[2] ।

---

1. क-ख-म—सोऽभिवाद्य । ख—ववन्दे स ।
2. ख-च—पश्यन् युधिष्ठिरं दृष्ट्या वक्रया चरणौ पितुः ।
सोऽभिवाद्य ततो दृष्ट्वा कङ्कस्य रुधिरप्लुतम् ॥
हृदयेऽदह्यत तदा मृत्युमस्य ब्रुवोत्तरः ॥
को वा जिगमिषुर्मृत्युं केन स्पृष्टः पदोरगः ॥
कौशिको ब्राह्मणश्रेष्ठ इन्द्रासनरतिक्षमः ।
पूजनीयोऽभिवाद्यश्च न प्रताड्योऽयमीदृशः ॥

वैशम्पायनः—

स पुत्रस्य वचश्श्रुत्वा विराटो राष्ट्रवर्धनः ।
प्रत्युवाचोत्तरं वाक्यं साध्वसाद् ध्वस्तमानसः ॥

विराटः—

पुत्र ते विजयं श्रुत्वा प्रहृष्टोऽहं महाभुज ।
अक्षक्रीडनयाऽनेन कालक्षेपमकारिषम् ॥
तदाऽजयत कुरून् सर्वान् उत्तरो राष्ट्रवर्धनः ।

ततो रुधिरसिक्ताङ्गं [1]धर्मराजमपश्यत ॥ ४३

भूमावेकान्त आसीनं सैरन्ध्र्या समुपस्थितम् ॥ ४३॥

ततः पप्रच्छ राजानं त्वरमाण इवोत्तरः ॥ ४४

उत्तरः--

केनायं ताडितो विप्रः केन पापमिदं कृतम् ॥ ४४॥

2 विराटः—

मयाऽयं ताडितो जाल्मो न चाप्येतावदर्हति ।

मया प्रशस्यमानेऽपि त्वयि षण्डं प्रशंसति ॥ ४५॥

ताडितोऽयं मया पुत्र दुरात्मा शत्रुपक्षकृत् ।

बृहन्नलाप्रशंसाभिर् [3]असूया मे महत्तमा ॥ ४६॥

4उत्तरः—

अकार्यं त्वत्कृतं राजन् क्षिप्रमेष प्रसाद्यताम् ।

---

पूर्वतोऽनुवृत्तम्—

इत्युक्तं हि मया पुत्र नेति कङ्को बृहन्नला ॥
अजयत् सा कुरून् सर्वान् इति मामब्रवीन्मुहुः ॥
प्रशंसिते मया पुत्र विजये तव विश्रुते ।
बृहन्नलाया विजयं कङ्कोऽस्तुवत वै रुषा ॥ [अधिकः पाठः]

1. क-ख-ङ-म—अनेकाग्रमनागसम् ।
2. ख—को वा जिगमिषुर्मृत्युं केन स्पृष्टः पदोरगः । [अधिकः पाठः]
3. क-ख-ग-च-म—अभ्यसूयाम्यहं भृशम् ।
4. ख-च—श्रुत्वा पितुर्भृशं क्रुद्धः पितरं वाक्यमब्रवीत् । [अधिकः पाठः]

मा त्वा ब्रह्मद्विषं घोरं समूलमुपनिर्दहेत् ॥ ४७॥

[1]वैशम्पायनः—

[2]पुत्रस्य वचनं श्रुत्वा विराटो राष्ट्रवर्धनः ।
क्षमयामास कौन्तेयं छन्नं ब्राह्मणतेजसा ॥ ४८॥

क्षमयन्तं तु राजानं पाण्डवः प्रत्यभाषत ॥ ४९

कङ्कः—

चिरं क्षान्तं मया राजन् मन्युर्मम न विद्यते ॥ ४९॥
यदि स्म तत् पतेद्भूमौ रुधिरं मम पार्थिव ।
सराष्ट्रस्त्वमिहोच्छेदम् आपद्येथा नरर्षभ ॥ ५०॥
न दूषयामि राजेन्द्र यस्तु हन्याददूषकम् ।
फलं तस्य महाराज क्षिप्रं दारुणमाप्नुयात् ॥ ५१॥

वैशम्पायनः—

शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नला ।
अभिवाद्य महाराजं कङ्कं चाप्युपतिष्ठत ॥ ५२॥

---

1. ख-च—यावन्न क्षयमायाति कुलं सर्वमशेषतः ।
स्फीतं वृद्धं च मात्स्यानाम् अयं तावत् प्रसाद्यताम् ॥
प्रणम्य पादयोरस्य दण्डवत् क्षितिमण्डले ।
प्रगृह्य तावत् पाणिभ्याम् अयं तावत् प्रसाद्यताम् ॥
दक्षेण पाणिना स्पृष्ट्वा शपे त्वां क्षमितं मया ।
इति यावद्वदेत् कङ्क अयं तावत् प्रसाद्यताम् ॥ [अधिकः पाठः]

2. क-च-म—स पुत्रस्य वचः ।
ख—पुत्रेणैवमभिहितो विराटस्साध्वसाकुलः । [पाठान्तरम्]

क्षमयित्वा तु कौरव्यं रणादुत्तरमागतम् ।
परिष्वज्य दृढं राजा प्रवेश्य भवनोत्तमम् ॥ ५३॥
प्रशशंस ततो मात्स्यश् शृण्वतस्सव्यसाचिनः ॥ ५४

विराटः—

त्वया दायादवानस्मि [1]कैकेय्यानन्दवर्धन ।
त्वया मे सदृशः पुत्रो न भूतो न भविष्यति ॥ ५५
पदं पदसहस्रेण यश्चरन्नापराप्नुयात् ॥ ५५॥
[2]शूरश्च लघुहस्तश्च कर्णो लघुपराक्रमः ।
तेन कर्णेन ते तात कथमासीत् समागमः ॥ ५६॥
[3]पर्वतं यो विभिन्द्यात् तु राजपुत्रो वरेषुभिः ।
दुर्योधनेन ते तात कथमासीत् समागमः ॥ ५७॥
आचार्यो वृष्णिवीराणां पाञ्चालानां च यः प्रभुः ।
सर्वक्षत्रस्य चाचार्यस् सर्वशस्त्रभृतां वरः ॥ ५८॥
तेन द्रोणेन ते तात कथमासीत् समागमः ॥ ५९
[4]रणे यं प्रेक्ष्य सीदन्ति हतवीर्यपराक्रमाः ।
[5]कृपेण तेन ते तात कथमासीत् समागमः ॥ ६०

---

1. क-ख-ङ-च-म—कैकेयीनन्दि ।
2. म—इदमर्धं नास्ति ।
3. म—रणे यं प्रेक्ष्य सीदन्ति हतवीर्यपराक्रमाः ।
कृपेण तेन ते तात कथमासीत् समागमः ॥ [अधिकः पाठः];
4. म—इदमर्धं अत्र नास्ति । 5. अ—इदमर्धं न दृश्यते

यस्य तद्विश्रुतं लोके ब्रह्मचर्यं सुदुष्करम् ।
पितुः कृते कृतं घोरं महद्व्रतमनुत्तमम् ॥ ६१
येन युद्धं कृतं पूर्वं जामदग्न्येन वै सह ।
भीष्मेण पुरुषव्याघ्र न च युद्धे पराजितः ॥ ६२
पराक्रमे च दुर्धर्षो विद्वान् शूरो जितेन्द्रियः ।
क्षिप्रकारी दृढावेधी विश्रुतस्सर्वकर्मसु ॥ ६३
तेन ते सह भीष्मेण कुरुवृद्धेन संयुगे ।
युद्धमासीत् कथं तेन सर्वमेतद् ब्रवीहि मे ॥ ६४
आचार्यपुत्रो यश्शूरस् सर्वशस्त्रभृतां वरः ।
तेन वीरेण ते तात कथमासीत् समागमः ॥ ६५
सर्वे चैव महावीर्या धार्तराष्ट्रा महाबलाः ।
तैश्च वीरैश्च ते तात कथमासीत् समागमः ॥ ६६

उत्तरः—

न मया निर्जिता गावो न मया कुरवो जिताः ।
कृतं च कर्म तत् सर्वं देवपुत्रेण केन चित् ॥ ६७
स हि भीतं द्रवन्तं मां [1]भीष्मद्रोणमुखान् कुरून् ।
[2]दृष्ट्वा विषण्णं सङ्ग्रामे देवपुत्रो न्यवारयत् ॥ ६८
स ह्यतिष्ठद्रथोपस्थे वज्रहस्तनिभो युवा ।
तेन ते निर्जिता गावः कुरवस्तेन निर्जिताः ॥ ६९

---

1. अ-क-ख-ङ-च-म—देवपुत्रो न्यवारयत् ।
2. इदमर्धं ख-कोश एव वर्तते

तस्य तत् कर्म वीरस्य न मया तात तत् कृतम् ॥ ६९॥
स हि शारद्वतं द्रोणं द्रोणपुत्रं च वीर्यवान् ।
सूतपुत्रं च भीष्मं च चकार विमुखान् शरैः ॥ ७०॥
दुर्योधनं च समरे प्रभिन्नमिव कुञ्जरम् ।
[1]प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलम् ॥ ७१॥

देवपुत्रः—

न हास्तिनपुरे त्राणं तव पश्यामि किञ्चन ।
व्यायामेन परीप्सस्व जीवितं कौरवात्मज ॥ ७२॥
[2]न हास्तिनपुरे शक्या भोक्तुं भोगाः पलायता ।
न मोक्ष्यसे पलायंस्त्वं राजन् युद्धमना भव ॥ ७३॥
पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि ॥ ७४

उत्तरः—

स निवृत्तो नरव्याघ्रो मुञ्चन् वज्रनिभान् शरान् ।
सचिवैस्संवृतो राजा भीष्मद्रोणकृपादिभिः ॥ ७५
तत्र मे रोमहर्षोऽभूद् ऊरुस्तम्भश्च मेऽभवत् ।
यदभ्रघनसङ्काशम् अनीकं व्यधमच्छरैः ॥ ७६
तत् प्रणुद्य रथानीकं सिंहदर्पसमो युवा ।
तान् कुरून् द्रावयद्राजन् रणे नाग इव श्वसन् ॥ ७७
एकेन तेन शूरेण षड्रथाः परिनिर्जिताः ।
शार्दूलेनेव मत्तेन मृगास्तृणचरा यथा ॥ ७८

---

1. अ-ङ-च—प्रच्छन्न । 2. म—इदमर्धं नास्ति ।

हयानां च गजानां च शूराणां च धनुष्मताम् ।
निहतानि सहस्राणि भग्ना च कुरुवाहिनी ॥ ७९

सूतपुत्रं शरैर्विद्ध्वा हयान् हत्वा महारथः ।
देवपुत्रसमस्सङ्ख्ये रक्तं वस्त्रं समाददे ॥ ८०

चतुर्भिः पुनरानर्च्छेद् भीष्मं शान्तनवं रणे ।
स तं विद्ध्वा हयांस्तस्य नास्य वस्त्रं समाददे ॥ ८१

दुर्योधनं च बलवान् बाणैर्विव्याध सप्तभिः ।
तं स विद्ध्वा हयांश्चास्य पीतं वस्त्रं समाददे ॥ ८२

द्रोणं कृपं च बलवान् सोमदत्तं जयद्रथम् ।
भूरिश्रवसमिन्द्राभं शकुनिं च महारथम् ॥ ८३

त्रिभिस्त्रिभिश्शरैर्विद्ध्वा दुश्शासनमुखानपि ।
विविधानि च वस्त्राणि महार्हाण्याजहार सः ॥ ८४

द्वाभ्यां शराभ्यां विद्ध्वा तु तथाऽऽचार्यसुतं रणे ।
चापं छित्त्वा विकर्णस्य नीले चादत्त वाससी ॥ ८५

विराटः—

क स वीरो महाबाहुर् देवपुत्रो महायशाः ।
यो ममामोचयत् पुत्रं कुरुभिर्ग्रस्तमाहवे ॥ ८६

इच्छामि तममित्रघ्नं द्रष्टुमर्चितुमेव च ।
येन मे त्वं च गावश्च मोक्षिता देवसूनुना ॥ ८७

[1]तस्मै दास्यामि तां पुत्रीं ग्रामांश्चैव तु हाटकान् ।
स्फुरितं कटिसूत्रं च स्त्रीसहस्रशतानि च ॥ ८८

उत्तरः—
अन्तर्धानं गतस्तात देवपुत्रः प्रतापवान् ।
अद्य श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ॥ ८९

वैशम्पायनः—
एवमाख्यायमानं तु छन्नं [2]वस्त्रेण पाण्डवम् ।
वसन्तं तत्र नाज्ञासीद् विराटः पार्थमर्जुनम् ॥ ९०

ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना ।
सह पुत्रेण मात्स्यस्य मन्त्रयित्वा धनञ्जयः ॥ ९१
[3]इत्येवं ब्रूहि राजानं विराटं च युधिष्ठिरम् ॥ ९१॥
इत्युक्त्वा सहसा पार्थः प्रविश्यान्तःपुरं शुभम् ।
ददौ रत्नानि वस्त्राणि विराटदुहितुस्स्वयम् ॥ ९२॥
उत्तरा तु महार्हाणि वस्त्राण्याभरणानि च ।
प्रगृह्य तानि सर्वाणि प्रीता सानुचराऽभवत् *॥ ९३॥

प्रदाय वस्त्राणि किरीटमाली
विराटगेहे मुदितस्सखीभ्यः ।

1. अ-क-घ-च-म—कोशेषु-अयं श्लोको न दृश्यते।
2. अ-क-ख-च-म—सत्वेण
3. अ-क-ख-घ-ङ-च—मन्दिरं प्रविशन्तं तमनुगम्य स मात्स्यजः।
आमन्त्रयित्वा कौन्तेयमुत्तरो वाक्यमब्रवीत् ॥
इति राज्ञः प्रवक्ष्यामि धर्मराजं युधिष्ठिरम्।
[अधिकः पाठः]

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते।

कृत्वा महत् कर्म तदाऽऽजिमध्ये
दिदृक्षया सोऽभिजगाम पार्थम् ॥　　९४॥

[1]सम्प्रेक्षमाणस्स तु धर्मराजं
पप्रच्छ पार्थोऽथ स भीमसेनम् ॥　　९५

अर्जुनः—

किं धर्मराजो हि यथापुरं मां
मुखं प्रतिच्छाद्य न चाह किञ्चित् ॥　　९५॥

वैशम्पायनः—

तमेवमुक्त्वा [2]प्रतिशङ्कमानं
दृष्ट्वाऽर्जुनं भीमसेनं च राजा ।
तत्राब्रवीत् तावभिवीक्ष्य राजन्
युधिष्ठिरस्तत् परिमृज्य रक्तम् ॥　　९६॥

युधिष्ठिरः—

दुरात्मना त्वय्यभिपूज्यमाने
विराट[3]राजेन हतोऽस्मि पार्थ ।
तस्मात् प्रहाराद्रुधिरस्य बिन्दून्
पश्यन्न चेमे पृथिवीं स्पृशेयुः ॥　　९७॥

इति प्रतिच्छाद्य मुखं ततोऽहं
मन्युं नियच्छन्नुपविष्ट आसम् ॥　　९८

1. क-ख-ङ-म—तं प्रेक्षमाणस्त्वथ ।
2. क-ख-म—परि ।　　3. क-ख-म—राज्ञाऽभि ।

[1]क्रुद्धे तु वीरे त्वयि चाप्रतीते
राजा विराटो न लभेत शर्म ।
अजानता तेन च शौर्यमग्र्यं
छन्नस्य [2]ते पार्थ बलं च वीर्यम् ॥ ९९

इदं विराटेन [3]तदा प्रयुक्तं
त्वां वीक्षमाणो न गतोऽस्मि हर्षम् ॥ ९९॥

वैशम्पायनः—

तेनाप्रमेयेन महाबलेन
तस्मिंस्तथोक्ते शममागतेन ।
तं भीमसेनो बलवानमर्षी
धनञ्जयं क्रुद्ध उवाच वाक्यम् ॥ १००॥

भीमः—

न पार्थ नित्यं क्षमकालमाह
बृहस्पतिर्ज्ञानवतां वरिष्ठः ।
क्षमी हि सर्वैः परिभूयते स्म
यथा भुजङ्गो विषवीर्यहीनः ॥ १०१॥

विराटमद्यैव निहत्य शीघ्रं
सपुत्रपौत्रं सकुलं ससैन्यम् ।

---

1. ख-च—शुभाहं राष्ट्रं तु खिलीकृतं भवेद् ।
वयं तु यस्मिन् सुखिनो भवामः । [अधिकः पाठः]

2. क-ख-म—सत्त्वेन बलं च पार्थ ।

3. क—मयि प्रयुक्तं तदीक्ष । ख—मयि प्रवृत्तं । घ-ङ-म—मयि ।

योक्ष्यामहे धर्मसुतं तु राज्ये
अद्यैव शीघ्रं [1]त्वरिरेष मात्स्यः ॥ १०२॥

अनेन पाञ्चालसुताऽथ कृष्णा
उपेक्षिता कीचकेनानुयाता ।
तस्मादयं नार्हति राजशब्दं
राजा भव त्वं नृप पार्थवीर्यात् ॥ १०३॥

राजा कुरूणां च युधिष्ठिरोऽयं
मात्स्येषु राजा भवतु प्रतीतः ।
तं मात्स्यदेहं शतधा भिनद्मि
कुम्भं घनेनेव यथाऽम्बुपूर्णम् ॥ १०४॥

अर्जुनः—

भवतः क्षमया [2]चैव सर्वे दोषाश्च नोऽभवन् ॥ १०५
तस्मादेनं च हत्वा वै सबलं सहबान्धवम् ।
पश्चाच्चैव कुरून् सर्वान् [3]हनिष्यामो न संशयः ॥ १०६

वैशम्पायनः—

भीमसेनश्च ये चान्ये तथैवेति [4]तमब्रुवन् ॥ १०६॥

तमब्रवीद्धर्मसुतो महात्मा
क्षमी वदान्यः कुपितं च भीमम् ॥ १०७

---

1. क-ख-ङ—रिपुरेष ।　2. क-ख-ब-म—राजन् ।
3. अ-ङ-च-म—हनिष्यामि
4. अ-ङ-च—तथाऽब्रुवन् ।

युधिष्ठिरः—

न प्रत्युपस्थास्यति चेत् सदारः
प्रसादने सम्यगथास्तु वध्यः ॥ १०७॥

न हन्तव्यो दुरात्माऽयं विराटश्चापि तेऽर्जुन ।
श्वः प्रभाते प्रवेक्ष्यामस् सभां सिंहासनेष्विह ॥ १०८॥

राजवेषेण संयुक्तान् यदि तत्र न मंस्यते ।
[1]पश्चाद्वध्यामहे सर्वान् विराटेन सबान्धवान् ॥ १०९॥

वैशम्पायनः—

इतिकर्तव्यतां सर्वे मन्त्रयित्वाऽथ पाण्डवाः ।
न्यवसंश्चैव तां रात्रिं पाण्डवा धर्मवत्सलाः ॥ ११०॥

पुत्रेण सह मात्स्यस्तु सम्प्रहृष्टो नराधिपः ।
तां रात्रिमवसद्धीमान् सम्प्रहृष्टेन चेतसा ॥ १११॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ ४० ॥ गोग्रहणपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

[अस्मिन्नध्याये १११॥ श्लोकाः]

[समाप्तं गोग्रहणपर्व]

---

1. ख—विराटो यदि तत्रस्थान् राजालङ्कारशोभितान् ।
रजालक्षणसम्पन्नान् यदि तत्र न मंस्यते ॥ [अधिकः पाठः]

## ॥ त्रिषष्टितमोऽध्यायः ॥

( वैराटीवैवाहिकपर्व )

कुरुविजयदिनात् परेद्यवि प्रभाते युधिष्ठिरादिभी राजलक्षणधारणेन सिंहासनादिषूपवेशनम् ॥ १ ॥ ततः सहोत्तरेण सभामागतवता विराटेन युधिष्ठिरं प्रति राजासनोपवेशनाक्षेपः ॥ २ ॥ अर्जुनेन तं प्रति युधिष्ठिरस्य याथातथ्यकथनेन तदीयगुणानुवर्णनपूर्वकं तस्य राजासनारोहणार्हत्व-प्रतिपादनम् ॥ ३ ॥

---

वैशम्पायनः—

ततो द्वितीये दिवसे भ्रातरः पञ्च पाण्डवाः ।
स्नाताश्शुक्लाम्बरधरास् सर्वे सुचरितव्रताः ॥ १

युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः ।
अभिपन्ना यथा नागा भ्राजमाना महारथाः ॥ २

विराटस्य सभां प्राप्य भूमिपालासनेष्वथ ।
निषेदुः पावकप्रख्यास् सर्वे धिष्ण्येष्विवाग्नयः ॥ ३

तेषु तत्रोपनिष्टेषु विराटः पृथिवीपतिः ।
[1]आजगाम सभां राजा उत्तरेण सह प्रभो ॥ ४

स तान् दृष्ट्वा महासत्वान् ज्वलतः पावकानिव ।
राजवेषानुपादाय पार्थिवो विस्मितोऽभवत् ॥ ५

---

1. ख—तस्यां रात्र्यां व्यतीतायां प्रातः कृत्यं समाप्य च ।
गोसुवर्णादिकं दत्वा ब्राह्मणेभ्यो यथाविधि ॥ [अधिकः पाठः]

किमिदं को विधिस्त्वेष [1]इत्येवं विस्मितोऽभवत् ।
पुरुषप्रवरान् दृष्ट्वा विषादमगमन्नृपः ॥ ६

अथ मात्स्योऽब्रवीत् कङ्कं देवराजमिव स्थितम् ।
मरुद्गणैः [2]परिवृतं त्रिदशानामिवेश्वरम् ॥ ७

विराटः—

स किलाक्षनिवापस्त्वं सभास्तारो मया कृतः ।
अथ राजासने कस्माद् उपविष्टोऽस्यलङ्कृतः ॥ ८

वैशम्पायनः—

परिहासेच्छया राज्ञो विराटस्य निशम्य तत् ।
स्मयमानोऽब्रवीद्वाक्यम् अर्जुनः परवीरहा ॥ ९

अर्जुनः—

इन्द्रस्यार्धासनं राजन्नयमारोढुमर्हति ।
ब्रह्मण्यश्श्रुतवांस्त्यागी सर्वलोकाभिपूजितः ॥ १०

अयं कुरूणामृषभः कुन्तीपुत्रो युधिष्ठिरः ।
यस्य कीर्तिस्स्थिता लोके सूर्यस्ये[3]वोद्यतः प्रभा ॥ ११

संसरन्ति दिशस्सर्वा यशसोऽस्य गभस्तयः ।
उदितस्येव सूर्यस्य तेजसोऽनु गभस्तयः ॥ १२

---

1. क-ख-घ-म—भयार्त इव पार्थिवः ।    ङ—पार्थिवो ।
2. क-ख—उपासीनं ।  घ—समासीनं ।  म—सहासीनं ।
3. अ-च—व प्रभा यथा ।  ङ—सूर्यस्येवोद्यता प्रभा ।

एनं त्रिंशत्सहस्राणि कुञ्जराणां तरस्विनाम् ।
अन्वयुः पृष्ठतो राजन् यावदध्यावसत् कुरून् ॥ १३

त्रिंशच्चैव सहस्राणि रथानां रथिनां वरम् ।
सदश्वैरुपपन्नानि पृष्ठतोऽनुययुः पुरा ॥ १४

वाजिनां च शतं राजन् सहस्राण्ययुतं तथा ॥ १४॥

इममष्टशतं शूरास् सुमृष्टमणिकुण्डलाः ।
तुष्टुवुर्मागधैस्सार्धं सूताश्शक्रमिवर्षयः ॥ १५॥

इमं नित्यमुपातिष्ठन् कुरवः किङ्करा यथा ।
सर्वे चैव नृपा राजन् धनेश्वरमिवामराः ॥ १६॥

एष सर्वान् महीपालान् करमाहारयत् तदा ।
वैश्यानिव महाराज विवशान् स्ववशानपि ॥ १७॥

अष्टाशीतिसहस्राणि स्नातकानां महात्मनाम् ।
उपजीवन्ति राजानम् एनं सुचरितव्रतम् ॥ १८॥

एष वृद्धाननाथांश्च व्यङ्गान् पङ्गूंश्च वामनान् ।
पुत्रवत् पालयामास प्रजाधर्मेण [1]च प्रजाः ॥ १९॥

एष धर्मे दमे चैव दाने सत्ये रतस्सदा ।
महाप्रसादो ब्रह्मण्यस् सत्यवादी च पार्थिवः ॥ २०॥

श्रीप्रभावेण वै यस्य तप्यते वै सुयोधनः ।

1. क—चाभि भोः। ख-ब-म— चाभिभूः।

सगणस्सह कर्णेन सौबलेन च वीर्यवान् ॥ २१॥

[1]न शक्यन्ते गुणास्तस्य प्रसङ्ख्यातुं नरेश्वर ।
एष धर्मपरो नित्यम् अनृशंसी च पाण्डवः ॥ २२॥

एवं युक्तो महाराजः पाण्डवः [2]परवीरहा ।
कथं नार्हति राजार्हम् आसनं पृथिवीपतिः ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ ४८ ॥ वैराटीवैवाहिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये २३॥ श्लोकाः]

---

## ॥ चतुष्षष्टितमोऽध्यायः ॥

---

अर्जुनेन विराटप्रश्नाद्बल्लवादीनां भीमसेनादित्वकथनम् ॥ १ ॥ उत्तरेण विराटं प्रति अर्जुनपराक्रमवर्णनम् ॥ २ ॥ ततो विराटेन सप्रणामं युधिष्ठिराभिप्रसादनम् ॥ ३ ॥

---

विराटः—

यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः ।
कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली ॥ १

---

1. क-ख-ङ-म—न शक्यमेतस्य गुणान् ॥
   ख—न शक्यते त्वस्य गुणान् ।
2. क-ख-घ-म—पुरुषर्षभः ।

नकुलस्सहदेवो वा द्रौपदी वा यशस्विनी ।
यतोऽ[1]क्षैर्निर्जिता ह्येते नान्तरा श्रूयते कथा ॥ २

अर्जुनः—

य एष वल्लो ब्रूते सूपकारश्च ते नृप ।
एष भीमो महाभाग भीमवेगपराक्रमः ॥ ३

एष क्रोधवशान् हत्वा पर्वते गन्धमादने ।
सौगन्धिकानि पुष्पाणि कृष्णार्थे समुपानयत् ॥ ४

गन्धर्व एष वै हन्ता कीचकानां दुरात्मनाम् ।
व्याघ्रान् ऋक्षान् गजांश्चैव [2]हतवान् वै पुरे तव ॥ ५

हिडिम्बं च बकं चैव किम्मीरं च जटासुरम् ।
हत्वा निष्कण्टकं चक्रे अरण्यं सर्वतस्सुखम् ॥ ६

यश्चासीदश्वबन्धस्ते नकुलोऽयं परन्तपः ।
गोसङ्ख्यस्सहदेवश्च माद्रीपुत्रौ महाबलौ ॥ ७

शृङ्गारवेषाभरणौ रूपवन्तौ मनस्विनौ ।
नानारथसहस्राणां समर्थौ भरतर्षभौ ॥ ८

[3]जितवन्तौ महेष्वासौ शक्रतुल्यपराक्रमौ ॥ ८॥

---

1. म—ह्यक्षैर्जिता लोके । क-ख-ङ—ह्यक्षै र्जिता ।
घ—यदा ह्यक्षैर्जिता ह्येते न श्रूयन्ते वनं गताः ।
2. ख-च—हतवांश्च । घ—हतवांस्त्रिपुरे । ङ-म—हतवांस्त्रीपुरे ।
3. म—इदमर्धं नास्ति ।

एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी ।
सैरन्ध्री द्रौपदी राजन् यत्कृते कीचका हताः ॥ ९॥

द्रुपदस्य प्रिया पुत्री धृष्टद्युम्नस्य चानुजा ।
अग्निकुण्डात् समुद्भूता द्रौपदी त्ववगम्यताम् ॥ १०॥

भीमः—
अस्त्रज्ञो दुर्लभः कश्चित् केवलं पृथिवीमनु ।
धनुर्भृतां तथा श्रेष्ठः कौन्तेयोऽयं धनञ्जयः ॥ ११॥

[1]एतेन खाण्डवं ह्येतद् अकामस्य शतक्रतोः ।
दग्धं नागवनं चैव सह नागैर्नराधिप ॥ १२॥

वर्षं च शरवर्षेण वारितं दुर्जयेन वै ।
करमाहारितास्सर्वे पार्थिवाः पृथिवी[2]तले ॥ १३॥

स्त्रीवेषं कृतवानेष तव राजन् निवेशने ।
बृहन्नलेति यामाहुर् अर्जुनं जयतां वरम् ॥ १४॥

उषितास्स्म सुखं सर्वे तव राजन् निवेशने ।
अज्ञातवासे [3]निभृता गर्भवास इव प्रजाः ॥ १५॥

---

1. म—एकेन खाण्डवं येन अकामस्य। अ—एकेन।
क—एतेन खाण्डवं दग्ध्वा अकामस्य।
ख—एतेन खाण्डवं यस्य अकामस्य।
घ-ङ—एतेन खाण्डवं दग्धं अकामस्य।
2. क-ख-घ-ङ—पते। म—पतेः।
3. ख-ङ-म—निहिता। घ—वासो निहितो।

वैशम्पायनः—

यदाऽर्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः ।
तदाऽर्जुनस्य वैराटिः कथयामास विक्रमम् ॥ १६॥

उत्तरः—

अयं स द्विषतां मध्ये मृगाणामिव केसरी ।
अचरद्रथवृन्देषु निघ्नंस्तेषां परावरान् ॥ १७॥

अनेन विद्धा मातङ्गा महामेघोपमास्तदा ।
हिरण्यकक्ष्यास्सङ्ग्रामे दन्ताभ्यामगमन्महीम् ॥ १८॥

अनेन विजिता गावो निर्जिताः कुरवो युधि ।
अस्य शङ्खप्रणादेन कर्णौ मे बधिरीकृतौ ॥ १९॥

[1]जायते रोमहर्षो मे संस्मृत्यास्य धनुर्ध्वनिम्[2] ॥ २०

[3]अनेन राजन् वीरेण भीष्मद्रोणमुखा रथाः ।

---

1. च-म—नास्तीदमर्धम् ।
2. च—नानारथसहस्राणां समयौ रक्षणे उभौ ।　[अधिकः पाठः]
3. ख—ध्वजस्य वानरं भूतैर् आक्रोशन्तं सहानुगैः ।
नाददानं शरान् घोरान् न मुञ्चन्तं शरोत्करान् ॥
न कार्मुकं विकर्षन्तम् एनं पश्यामि संयुगे ॥
एतद्धनुःप्रमुक्ताश्च शराः पुङ्खानुपुङ्खिनः ।
नालक्ष्येषु रणे पेतुर् नाराचा रक्तभोजनाः ॥
तीक्ष्णनाराचसङ्कृत्तशिरोबाहूरुवक्षसाम् ।
कलेबराणि दृश्यन्ते योधानां साश्वसादिनाम् ॥
अनेन तटिनी तत्र शोणिताम्बुप्रवाहिनी ।
प्रवर्तिता भीमरूपा यां स्मृत्वाऽद्यापि मे मनः ॥
प्रकम्पते चण्डवायुकम्पिता कदली यथा ॥　[अधिकः पाठः]

दुर्योधनेन सहिता निर्जिता भीमकर्मणा ॥ २१

अयं भीतं द्रवन्तं मां देवपुत्रो न्यवारयत् ।
अस्य बाहुबलेनास्मि जीवन् प्रत्यागतः पुरम् ॥ २२

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा मात्स्यराजः प्रतापवान् ।
धनञ्जयं परिष्वज्य पाण्डवानपि सर्वशः ॥ २३

नमस्कृत्य तु राजानं राजा राज्येऽभिषेचितः ।
नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः ॥ २४

सम्प्रहृष्टो महाराजं युधिष्ठिरमथाब्रवीत् ॥ २४॥

विराटः—

दिष्ट्या भवन्तस्सम्प्राप्तास् सर्वे कुशलिनो वनात् ।
दिष्ट्या च चरितं कृच्छ्रम् अज्ञातं तैर्दुरात्मभिः ॥ २५॥

इदं राज्यं च नस्सर्वं यच्चापि वसु किञ्चन ।
अभक्तमेतद्भवतां नोत्कण्ठां कर्तुमर्हथ[1] ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
॥ ४८ ॥ वैराटीवैवाहिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये २६॥ श्लोकाः]

---

1. च—अविभक्तं भवद्भिर्मे न सन्देहो नराधिपाः । [अधिकः पाठः]

## ॥ पञ्चषष्टितमोऽध्यायः ॥

उत्तरेण विराटं प्रति युधिष्ठिरादिकृतोपकारस्मारणपूर्वकमुत्तरायाः प्रदानेन तत्प्रसादनचोदना ॥ १ ॥ युधिष्ठिरेणोत्तरायाः पुरस्कारेण समर्णामं प्रसाद्यते विराटायाभयप्रदानम् ॥ २ ॥

वैशम्पायनः—

विराटस्य वचश्श्रुत्वा पार्थस्य च महात्मनः ।
उत्तरः प्रत्युवाचेदम् अभिपन्नो युधिष्ठिरे ॥ १

उत्तरः—

प्रसादनं प्राप्तकालं पाण्डवस्याभिरोचये ।
तेजस्वी बलवान् शूरो राजराजेश्वरः प्रभुः ॥ २

उत्तरां च वरारोहां पार्थस्यामित्रकर्शन ।
प्रणिपत्य प्रयच्छामस् [1]तस्य शिष्या भवामहे ॥ ३

वयं च सर्वे सामात्याः कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसाद्य ह्युपतिष्ठामो राजन् किं करवामहे ॥ ४

राजंस्त्वमसि सङ्ग्रामे गृहीतस्तेन मोक्षितः ।
एतेषां बाहुवीर्येण गावश्च विजितास्त्वया ॥ ५

कुरवो निर्जिता यस्मात् सङ्ग्रामेऽमिततेजसः ।
एष तत् सर्वमकरोत् कुन्तीपुत्रो युधिष्ठिरः ॥ ६

1. क-ख-म—ततश्शिष्टा। ख-च—ततस्तुष्टा।

[1]आर्याः पूज्याश्च मान्याश्च प्रत्युद्गम्याश्च पाण्डवाः ।
अर्च्याश्चैवाभिवाद्याश्च प्राप्तकालं च मे मतम् ॥ ७

पूज्यन्तां पूजनीयाश्च महाभागाश्च पाण्डवाः ।
न ह्येते कुपिताऽशेषं कुर्युराशीविषोपमाः ॥ ८

तस्माच्छीघ्रं प्रपद्यामः कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसादयाम भद्रं ते सह पार्थैर्महात्मभिः ॥ ९

उत्तरामग्रतः कृत्वा शिरस्स्नातामलङ्कृताम् ॥ ९॥

जानाम्यहमिदं सर्वम् एषां तु बलपौरुषम् ।
कुले च जन्म महति फल्गुनस्य च विक्रमम् ॥ १०॥

वैशम्पायनः—

उत्तरात् पाण्डवान् श्रुत्वा विराटो दुःखमोहितः ।
उत्तरं चापि सम्प्रेक्ष्य प्राप्तकालमचिन्तयत् ॥ ११॥

ततो विराटस्सामात्यस् सकलत्रस्सबान्धवः ।
उत्तरामग्रतः कृत्वा शिरस्स्नातां कृताञ्जलिः ॥ १२॥

भूमौ निपतितस्तूर्णं पाण्डवस्य समीपतः ॥ १३

विराटः—

प्रसीदतु महाराजो धर्मपुत्रो युधिष्ठिरः ।
प्रच्छन्नरूपवेषत्वान्नाभिदृष्टस्तृणैर्वृतः ॥ १४

---

1. क-ख-म—अर्घ्याः पूज्याश्च मान्याश्च प्रत्युत्थेयाश्च ।

शिरसाऽभिप्रपन्नोऽस्मि सपुत्रपरिचारकः ॥ १४॥
यदस्माभिरजानाद्भिर् अधिक्षिप्तो महीपतिः ।
अवमत्य कृतं सर्वम् अयुक्तं प्राकृतो यथा ॥ १५॥
क्षन्तुमर्हसि तत् सर्वं धर्मज्ञो बन्धुवत्सलः ॥ १६
यदिदं मामकं राष्ट्रं पुरं राज्यं च पार्थिव ।
सदण्डकोशं विसृजे तव भृत्योऽस्मि पार्थिव ॥ १७
वयं च सर्वे सामात्या भवन्तं शरणं गताः ॥ १७॥

वैशम्पायनः—

तं धर्मराजः पतितं महीतले
सबन्धुवर्गं प्रसमीक्ष्य पार्थिवम् ।
उवाच वाक्यं परलोकदर्शनः
प्रनष्टमन्युर्गतशोकमत्सरः ॥ १८॥

युधिष्ठिरः—

न ते भयं पार्थिव विद्यते मयि
प्रतीतरूपोऽस्म्यनुचिन्त्य [1]पार्थिव ।
एतत् त्वया सम्यगिहोपपादितं
द्विजैरमात्यै[2]स्सदृशैश्च पण्डितैः ॥ १९॥
इमां च कन्यां समलङ्कृतां भृशं
समीक्ष्य तुष्टोऽस्मि नरेन्द्रसत्तम ॥ २०

---

1. क—भात्मनः। ख-म—मानसम्। घ—मानः।
2. क—स्सुहृदैश्च। अ— स्सचिवैश्च पण्डितैः। घ-म—स्सुहृदा च।

क्षान्तमेतन्महाबाहो यन्मां वदसि पार्थिव ।
न चैव किञ्चित् पश्यामि विकृतं ते नराधिप ॥ २१

वैशम्पायनः—

ततो विराटः परमाभितुष्टस्
समीक्ष्य राज्ञा समयं चकार ।
राज्यं च सर्वं विससर्ज तस्मै
सदण्डकोशं सपुरं महात्मा ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
॥ ७८ ॥ वैराटीवैवाहिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

## ॥ षट्षष्टितमोऽध्यायः ॥

विराटेनार्जुनं प्रति स्वकुमार्या उत्तराया भार्यात्वेन प्रतिग्रहणप्रार्थने तं प्रत्यर्जुनेन सहेतुकथनं स्नुषात्वेन परिग्रहाङ्गीकरणम् ॥ १ ॥ दुर्योधनेन युधिष्ठिरं प्रति दूतमुखेन त्रयोदशवत्सरस्यासम्पूर्णावेवार्जुनेनात्मप्रकाशनात् पुनर्वनवासविधेयतानिवेदनम् ॥ २ ॥ युधिष्ठिरेण तं प्रति तेनैव दूतेन भीष्ममुखात् सन्देहस्य परिहरणीयताप्रतिनिवेदनम् ॥ ३ ॥ भीष्मेण विचार्य निर्धारणपूर्वकं सङ्केतकालस्य पूर्णत्वोक्तिः ॥ ४ ॥

विराटः—

यच्च वक्ष्यामि [1]ते सर्वं मा शङ्केथा युधिष्ठिर ॥ १
इदं सनगरं राष्ट्रं [2]सवनं सवधूजनम् ।

1. क-ख-घ-ङ-म—तत् । 2. क-ख-ङ-च-म—सधनं । घ—सजनं ।

युष्मभ्यं सम्प्रदास्यामि भोक्ष्याम्युच्छिष्टमेव च ॥ १॥

अहं वृद्धश्चिरं राजन् भुक्तभोगश्चिरं सुखम् ।
राज्यं दत्त्वा तु युष्मभ्यं प्रव्रजिष्यामि काननम् ॥ २॥

उत्तरां प्रतिगृह्णातु सव्यसाची धनञ्जयः ।
अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः ॥ ३॥

वैशम्पायनः—

एवमुक्तो धर्मराजः पार्थमैक्षद्धनञ्जयम् ।
ईक्षितं चार्जुनो ज्ञात्वा मात्स्यं वचनमब्रवीत् ॥ ४॥

अर्जुनः—

वयं वनान्तरात् प्राप्ता न ते राज्यं गृहामहे ।
किन्तु दुर्योधनादीनां राज्ञां राज्यं गृहामहे ॥ ५॥

प्रतिगृह्णाम्यहं राजन् स्नुषां दुहितरं तव ।
[1]युक्तो ह्यावां च सम्बन्धो मात्स्यभारतवंशयोः ॥ ६॥

विराटः—

किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम ।
प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि ॥ ७॥

अर्जुनः—

अन्तःपुरेऽहमुषितस् सदा पश्यन् सुतां तव ।
रहस्यं च प्रकाशं च विश्वस्ता पितृवन्मयि ॥ ८॥

प्रियो बहुमतश्चासं नर्तने गीतवादिते ।

---

1. म—युक्तोऽयं वां हि । क—युक्तरूपो हि (घ) युक्तो युवां हि ।

आचार्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ९॥
वयस्यया तया राजन् सह संवत्सरोषितः ॥ १०
अतिशङ्का ततोऽस्थाने तव लोकस्य च प्रभो ।
तस्मादामन्त्रये त्वां हि पुत्रार्थं वै विशाम्पते ॥ ११
शुद्धं जितेन्द्रियं मन्ये तस्याश्शुद्धिः कृता मया ॥ ११॥
स्नुषायां दुहितुर्वाऽपि पुत्रे वाऽऽत्मनि वा पुनः ।
अतिशङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥ १२॥
अभिषङ्गादहं भीतो मिथ्याचारात् परन्तप ।
स्नुषार्थमुत्तरां राजन् प्रतिगृह्णामि ते सुताम् ॥ १३॥
[1]स्वस्रीयो वासुदेवस्य साक्षा[2]द्देवसुतोपमः ।
दयितश्चक्रहस्तस्य बलवानस्त्रकोविदः ॥ १४॥
अभिमन्युर्महाबाहुः पुत्रो मम विशाम्पते ।
जामाता तव युक्तो वै भर्ताऽथ दुहितुस्तव ॥ १५॥

विराटः—

उपपन्नं कुरुश्रेष्ठ कुन्तीपुत्रे धनञ्जये ।
[3]यदेवं धर्मनित्यश्च ज्ञातज्ञेयश्च पाण्डवः ॥ १६॥

---

1. च—इतः सार्धश्लोको नास्ति।
2. क-घ-म—देवशिशुर्यथा। ख—देवसुतो यथा।
3. अ—तदेवं धर्मनित्यञ्च ज्ञातज्ञानञ्च पाण्डवे। ख—सदैव।
क-च—यदेवं धर्मनित्यश्च शास्त्रज्ञानं च पाण्डव।
घ—तदेव धर्मयुक्तस्य ज्ञानज्ञानस्य पाण्डव।

यत् कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरम् ।
सर्वे कामास्समृद्धा मे सम्बन्धी यस्य मेऽर्जुनः ॥ १७॥

वैशम्पायनः—
एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः ।
अन्वजानत सम्बन्धं समये कृष्णमात्स्ययोः ॥ १८॥

दूतान् मित्रेषु सर्वेषु वासुदेवे च भारत ।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः ॥ १९॥

प्रतिगृह्य स्नुषार्थं वै दर्शयन् वृत्तमात्मनः ।
शीलशौचसमाचारं लोकस्यावेद्य फल्गुनः ॥ २०॥

लोके [1]विख्याप्य माहात्म्यं यशसश्च परन्तप ।
कृतार्थश्शुचिरव्यग्रस् तुष्टिमानभवत् तदा ॥ २१॥

युधिष्ठिरः—
राजन् प्रीतोऽस्मि भद्रं ते सखा मेऽसि परन्तप ।
सुखमध्युषितास्सर्वे अज्ञातास्त्वयि पार्थिव ॥ २२॥

वैशम्पायनः—
विराटनगरे राजा धर्मात्मा संशितव्रतः ।
पूजितश्चाभिषिक्तश्च रत्नैश्च शतशश्चितः ॥ २३॥

तथा ब्रुवन्तं प्रसमीक्ष्य राजा
परं प्रहृष्टस्स्वजनेन तेन ।

1. ख-ङ-म—विख्याप्य माहात्म्यं यशश्चास्य परन्तपः ।

स्नेहात् परिष्वज्य नृपो भुजाभ्यां
दददौ तमर्थं कुरुपाण्डवानाम् ॥ २४॥

युद्धात् प्रयाताः कुरवो हि मार्गे
समेत्य सर्वे हितमेव तत्र ।
आचार्यपुत्रश्शकुनिश्च राजा
दुर्योधनस्सूतपुत्रश्च कर्णः ॥ २५॥

[1]समेत्य राजा सहितास्समर्थं
समादिशन् दूतमथो समग्राः ॥ २६

युधिष्ठिरश्चापि सुसम्प्रहृष्टो
दुर्योधनाद्दूतमपश्यदागतम् ।
स चाब्रवीद्धर्मराजं समेत्य
युधिष्ठिरं पाण्डवमुग्रवीर्यम् ॥ २७

दूत—

धनञ्जयेनासि पुनर्वनाय
प्रव्राजितस्समये तिष्ठ पार्थ ।
त्रयोदशे ह्येष किरीटमाली
संवत्सरे पाण्डवेयोऽद्य दृष्टः ॥ २८

1. क—समेत्य राजन् सहिताः सुहृद्भिः ।
ख—संमन्त्र्य राजन् सहिताः समर्थाः ।
घ-म—समेत्य राजन् सहिताः समर्थाः ।

**वैशम्पायनः—**

ततोऽब्रवीद्धर्मसुतः प्रहस्य
क्षिप्रं गत्वा ब्रूहि सुयोधनं तम् ।
पितामहश्शान्तनवो ब्रवीतु
यद्यत्र पूर्णो [1]न त्रयोदशो नः ॥ २९

संवत्सरान्ते तु धनञ्जयेन
विष्फारितं गाण्डिवमाजिमध्ये ।
पूर्णो न पूर्णो न इति ब्रवीतु
यदस्य सत्यं मम तत् प्रमाणम् ॥ ३०

तेनैवमुक्तस्स निधृत्य दूतो
दुर्योधनं प्राप्य शशंस सर्वम् ॥ ३०॥

समेत्य दूतेन स राजपुत्रो
दुर्योधनो मन्त्रयामास तत्र ।
भीष्मेण कर्णेन कृपेण चैव
द्रोणेन भूरिश्रवसा च सार्धम् ॥ ३१॥

सम्मन्त्र्य रात्रौ बहुभिस्सुहृद्भिर्
भीष्मोऽब्रवीद्धार्तराष्ट्रं महात्मा ॥ ३२

**भीष्मः—**

तीर्णप्रतिज्ञेन धनञ्जयेन
विष्फारितं गाण्डिवमाजिमध्ये ॥ ३२॥

---

1. क-म—ऽत्र । ख—न तु तत्र यत्स्यात् । घ—यद्यपूर्णो नु ।

1वैशम्पायनः—

ते धार्तराष्ट्रास्समयं निशम्य
तीर्णप्रतिज्ञस्य धनञ्जयस्य ।
सञ्चिन्त्य सर्वे सहितास्सुहृद्भिस्
सपार्थिवास्स्वानि गृहाणि जग्मुः ॥ ३३॥

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

॥ ४८ ॥ वैराटीवैवाहिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये ३३॥ श्लोकाः ]

---

1. ख—नेच्छन्त्यसत्येन सुरेन्द्रलोकं
पाण्डोस्सुता ब्रह्मणश्चापि लोकम् ।
तथ्यं च ते पथ्यमहं ब्रवीमि
स्वर्ग्यं यशस्यं परलोकपथ्यम् ॥
कुन्तीसुतैस्त्वं समुपैहि सन्धि
भुङ्क्ष्व स्वराज्यं सह पाण्डवेयैः ।
युध्यस्व नो चेत् स्थिरबुद्धिराजौ
कुन्तीसुतैर्यद्यपि राज्यमिच्छेः ॥
आर्तं न शक्यं कपटेन भोक्तुं
राज्यं परेषां महतां बलीनाम् ।
जित्वा शत्रून् भुङ्क्ष्व राज्यं समग्रं
हतो भवान् भोक्ष्यति वा त्रिलोकम् ॥
वैशम्पायनः—
ततस्स भागीरथिसूनुवाक्यं
निशम्य गान्धारितनूद्भवो नृपः ।
उवाच भीष्मं प्रमुखे च पित्रोर्

## ॥ सप्तषष्टितमोऽध्यायः ॥

अज्ञातवासपरिसमापनानन्तरमुपप्लाव्यनगरे वसद्भिः पाण्डवैर्दूतमुखेन समाहूतै रामकृष्णादिभिः सुभद्राभिमन्युप्रभृतिभिः सहोपप्लाव्यं प्रत्यागमनम् ॥ १ ॥ तथा द्रौपदेयादिभिः सह द्रुपदादीनमागमनम् ॥ २ ॥ तत उत्तराया अभिमन्योश्च विवाहः ॥ ३ ॥

वैशम्पायनः—

ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ।
उपप्लाव्ये विराटस्य वासं चक्रुः पुरोत्तमे ॥ १
[1]विराटेन सपुत्रेण पूज्यमानास्समावसन् ॥ १॥

ततो मित्रेषु सर्वेषु ज्ञातिसम्बन्धिकेष्वपि ।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः ॥ २॥

तेषु तत्रोपविष्टेषु प्रेषितेषु ततस्ततः ।
तत्रागमन्महाबाहुर् वनमाली हलायुधः ॥ ३॥

[2]तस्मिन् काले निशम्याथ दूतवाक्यं जनार्दनः ।
दयितं स्वस्रियं पुत्रं सुभद्रायास्सुमानितम् ॥ ४॥

---

पूर्वतोऽनुवृत्तम्—

मह्यं न दद्यामणुमात्रिकामपि ॥
निहत्य पाण्डूदरसम्भवान् वा
हतोऽस्मि तैर्वा सुरलोकमेमि । [अधिकः पाठः]

1. अ-क-घ-च-म—नास्तीदमर्धम् ।
2. अ-क-घ-च-म—सार्धश्लोकद्वयमिदं न दृश्यते ।

अभिमन्युं समादाय रामेण सहितस्तदा ।
सर्वयादवमुख्यैश्च संवृतः परवीरहा ॥ ५॥
शङ्खदुन्दुभिनिर्घोषैर् विराटनगरं ययौ ॥ ६
कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः ।
अनाधृष्टिस्तथाऽक्रूरस् साम्बो निशठ एव च ॥ ७
प्रद्युम्नश्च महाबाहुर् उल्मुकश्च महाबलः ।
अभिमन्युमुपादाय सह मात्रा परन्तपाः ॥ ८
[1]*कृष्णेन सहितास्सर्वे पाण्डवान् द्रष्टुमागताः ॥ ८॥
इन्द्रसेनादयश्चैव रथैस्तैस्सुसमाहितैः ।
उपेयुस्सादिनस्सर्वे परिसंवत्सरोषिताः ॥ ९॥
[2]शतनागसहस्राणि रथानां च शतायुतम् ।
[3]हयानामर्बुदं पूर्णं निखर्वं च पदातयः ॥ १०॥
वृष्ण्यन्धकाश्च शतशो भोजाश्च परमौजसः ।
अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिम् ॥ ११॥
[4]वासुदेवं तदाऽऽयान्तं श्रुत्वा पाण्डुसुतास्तदा ।

---

1. अ-क-घ-च-म—उपेयुस्सहितास्सर्वे परिसंवत्सरोषिताः ।
[अधिकः पाठः]

* अ-क-घ-च-म—अयं सार्धश्लोको नास्ति ।

2. क-ख-ङ-च—दशनागसहस्राणि हयानां च ।

3. क-ख-घ-ङ-च—रथाना ।

4. अ-क-घ-च-म—सार्धैकादशश्लोका न दृश्यन्ते ।

मात्स्येन सहितास्सर्वे प्रत्युद्याता जनार्दनम् ॥ १२॥
शङ्खदुन्दुभिनिर्घोषैर् मङ्गलैश्च जनार्दनम् ।
ववन्दुर्मुदितास्सर्वे पादयोस्तस्य पाण्डवाः ॥ १३॥
मात्स्येन सहितास्सर्वे आनन्दाश्रुपरिप्लुताः ॥ १४

पाण्डवाः—

तव कृष्ण प्रसादाद्धि वर्षाण्येतानि सर्वशः ।
त्रयोदशोऽपि दाशार्ह यथा स समयः कृतः ॥ १५
उषितास्स्मो जगन्नाथ त्वं नाथो नो जनार्दन ॥ १५॥
रक्षस्व देवदेवेश त्वामद्य शरणं गताः ॥ १६

वैशम्पायनः—

तान् वन्दमानान् सहसा परिष्वज्य जनार्दनः ।
विराटस्य सहायांस्तान् सर्वयादवसंवृतः ॥ १७
यथार्हं पूजयामास मुदा परमया युतः ॥ १७॥
वृष्णिवीराश्च तान् सर्वान् यथार्हं प्रतिपेदिरे ।
कृष्णा च देवकीपुत्रं ववन्दे पादयोस्तथा ॥ १८॥
तामुद्यम्य सुसंहृष्टो नयने परिमार्ज्य च ।
उवाच वाक्यं देवेशस् सर्वयादवसन्निधौ ॥ १९॥

श्रीभगवान्—

मा शोकं कुरु कल्याणि धार्तराष्ट्रान् समाहितान् ।
अचिराद्घातयित्वाऽहं पार्थेन सहितः क्षितिम् ॥ २०॥
युधिष्ठिराय दास्यामि यातु ते मानसो ज्वरः ॥ २१
अभिमन्युना च पार्थेन रौक्मिणेयेन ते शपे ।

सत्यमेतद्वचो मह्यम् अवेहि त्वमनिन्दिते ॥ २२

**वैशम्पायनः—**

इत्युक्त्वा तां विसृज्याथ प्रीयमाणो युधिष्ठिरम् ।
अन्वास्त सह शार्दूलस् सह वृष्ण्यन्धकैस्तदा ॥ २३
[1]काशिराजश्च शैब्यश्च भजमानौ युधिष्ठिरम ।
अक्षौहिणीभ्यां सहितावागतौ पृथिवीपते ॥ २४
अक्षौहिणीभिः पाञ्चालस् तिसृभिश्च महावलः[2] ।
[3]*द्रौपद्याश्च सुता वीराश् शिखण्डी चापराजितः ॥ २५
धृष्टद्युम्नश्च दुर्धर्षस् सर्वशस्त्रभृतां वरः ।
उपप्लाव्यं ययुश्शीघ्रं पाण्डवार्थे महावलाः ॥ २६
ततश्शतसहस्राणि प्रयुतान्यर्बुदानि च ।
समीपमभिवर्तन्ते योधा यौधिष्ठिरं वलम् ॥ २७
समुद्रमिव घर्मान्ते स्रोतश्श्रेष्ठाः पृथक् पृथक् ।
आपूरयन् महीपालास् सर्वे पाण्डुसुतं तदा ॥ २८
[4]वेदावभृथसम्पन्नाश् शूरास्सर्वे तनुत्यजः ॥ २८॥

---

1. क-घ-च-म—इन्द्रसेनमुखाश्चैव रथैस्तैस्सुसमाहितैः ।
मययुस्सादिनस्सर्वे परिसंवत्सरोषिताः॥ [अधिकः पाठः]

2. क—द्रुपदस्य सुतौ वीरौ शिखण्डी च महारथः। [अधिकः पाठः]

*अ-क-घ-च-म—अर्धद्वयमिदं नास्ति ।

3. अ-क-घ-च-म—सह पुत्रैर्महावीर्यैर् धृष्टद्युम्नशिखण्डिभिः।
[अधिकः पाठः]

4. अ-क-घ-च-म—सार्धश्लोको न दृश्यते !

तानागतानभिप्रेक्ष्य पार्थो ज्ञानभृतां वरः ।
पूजयामास विधिवद् यथार्हं राजसत्तमान् ॥　　२९॥
पारिबर्हं ददौ कृष्णः पाण्डवानां महात्मनाम् ।
स्त्रियो रत्नानि वासांसि पृथक्पृथगनेकशः ॥　　३०॥
[1]राजानो राजपुत्राश्च निवृत्ते समये तथा ।
यथार्हं पाण्डवश्रेष्ठे ह्यवर्तन्ताभिपूजिताः ॥　　३१॥
आसन् प्रहृष्टमनसः पारिबर्हं ददुस्तदा ॥　　३२
तेषु तत्रोपविष्टेषु राजभिर्वृष्णिभिस्सह ।
विवाहो विधिवद्राजन् ववृधे कुरुमात्स्ययोः ॥　　३३
ततश्शङ्खा मृदङ्गाश्च गोमुखा डिण्डिमास्तदा ।
पार्थैस्संयुज्यमानस्य नेदुर्मात्स्यस्य वेश्मनि ॥　　३४
उच्चावचां[2]स्तदा जघ्नुर् वाद्यसङ्घान् सहस्रशः ।
भक्ष्यभोज्यान्नपानानि [3]भूतानभ्यवहारयत् ॥　　३५
गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।
स्तुवन्तस्तानुपातिष्ठन् सूताश्च सह मागधैः ॥　　३६
स्त्रियो वृद्धाः कुटुम्बिन्य उत्सवज्ञाश्च मङ्गले ।
द्रौपद्यन्तःपुरे चैव विराटस्य गृहे स्त्रियः ॥　　३७
सुदेष्णां तु पुरस्कृत्य मत्स्यानां केवलास्त्रियः ।

---

1. अ-क-ख-च-म—सार्धश्लोको नोपलभ्यते ।
2. क-ख-घ-ङ-म—न्मृगान् जघ्नुर्मेध्यांश्च शतशः पशून् ।
3. म—भूतान्यभ्यवहारयत् । क-ख-घ-ङ-च—प्रभूतानभ्यवहारयत् ।

आजग्मुश्चारुपीनाङ्ग्यस् सुमृष्टमणिकुण्डलाः ॥ ३८
वर्णोपपन्नास्ता नार्यो रूपवत्यस्स्वलङ्कृताः ।
सर्वाश्चाभ्यभवत् कृष्णा रूपेण वपुषा श्रिया ॥ ३९
परिवार्योत्तरां श्लाघ्यां राजपुत्रीमलङ्कृताम् ।
सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे ॥ ४०
[1]भृङ्गारं तु समादाय सौवर्णं जलपूरितम् ।
पार्थस्य हस्ते सहसा सुतामिन्दीवरेक्षणाम् ॥ ४१
स्नुषार्थं प्राक्षिपद्वारि विराटो वाहिनीपतिः ॥ ४१॥
तां प्रत्यगृह्णात् कौन्तेयस् सुतस्यार्थे महामनाः ।
सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा ॥ ४२॥
तत्रातिष्ठन्महाराजो रूपमिन्द्रस्य धारयन् ।
स्नुषां तां परिगृह्णानः कुन्तीपुत्रो युधिष्ठिरः ॥ ४३॥
द्रुपदश्च विराटश्च शिखण्डी च महायशाः ।
काशिराजश्च शैब्यश्च धृष्टद्युम्नश्च सात्यकिः ॥ ४४॥
सप्तैतेऽक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ।
पाण्डवं परिवार्योथ निवासं चक्रिरे तदा ॥ ४५॥
तत्रस्थायां तु सेनायां विराटो जगतीपतिः ।
प्रीतो दुहितरं गृह्य प्रददावभिमन्यवे ॥ ४६॥
मुदा गृह्योत्तरां पार्थे आनाय्य च जनार्दनम् ।

1. ख-ङ—कोशयोरेवेदमर्धमयं दृश्यते

विवाहं कारयामास सौभद्रस्य महात्मनः ॥ ४७॥
ततो विवाहो ववृधे स्थितस्सर्वगुणान्वितः ।
सौभद्रस्याद्भुतश्चैव पितुस्तव पितुस्तदा ॥ ४८॥
[1]धौम्यशिष्यैः परिवृतो जुहावाग्नौ विधानतः ।
अग्निं प्रदक्षिणीकुर्वन् सौभद्रः पाणिमग्रहीत् ॥ ४९॥
ततस्सभार्यस्संहृष्टो मात्स्यराजो धनं महत् ।
तस्मै [2]शतसहस्राणि हयानां वातरंहसाम् ॥ ५०॥
[3]द्वे गजानां शते मुख्ये विराटः प्रददौ मुदा ॥ ५१
[4]प्रादान्मात्स्यपतिर्हृष्टः कन्याधनमनुत्तमम् ॥ ५१॥
पारिबर्हं च पार्थस्य प्रददौ मात्स्यपुङ्गवः ।
कृष्णेन सह कौन्तेयः प्रत्यगृह्णात् परन्तप ॥ ५२॥
कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ।
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ॥ ५३॥
गोसहस्राणि रत्नानि वस्त्राणि विविधानि च ।
भूषणानि च सर्वाणि यानानि शयनानि च ॥ ५४॥
[5]पट्टवासांसि चित्राणि दासीदासान् बहून् ददौ ।
नागरान् प्रीतिभिर्दिव्यैस् तर्पयामास भूपतिः ॥ ५५॥
तन्महोत्सवसङ्काशं हृष्टपुष्टजनाकुलम् ।

---

1. ख-ङ-कोशयोरेवायं श्लोको वर्तते　　2. ख—सह।
3. म—द्वे च नागशते मुख्ये वि
ख-ङ-च—द्वे च नागशते मुख्ये धनं बहुविधं तदा।
4. अ-क-ख-च-म—इदमर्धं नास्ति।
5. अ-क-ख-च-म—श्लोकोऽयं नास्ति।

नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ॥ ५६॥

[1]पुरोहितैरमात्यैश्च पौरैर्जानपदैस्सह ।

विराटो नृपतिश्श्रीमान् सौभद्रायाभिमन्यवे ॥ ५७॥

तां सुतामुत्तरां दत्त्वा मुमुदे परमां तदा ॥ ५८

जनमेजयः—

वृत्ते विवाहे हृष्टात्मा यदुवाच युधिष्ठिरः ।

तत् सर्वं कथयस्वेह कृतवन्तो यदुत्तरम् ॥ ५९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ ४८ ॥ वैराटीवैवाहिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ५९ श्लोकाः]
॥ वैराटीवैवाहिकपर्व समाप्तम् ॥ ॥ समाप्तं च विराटपर्व ॥ ४ ॥
॥ अस्मिन् विराटपर्वणि श्लोकाः ३५००* ॥

---

अतः परमुद्योगपर्व भविष्यति । तस्यायमाद्यः श्लोकः ।

कृत्वा विवाहं तु कुरुप्रवीरास्
तदाऽभिमन्योर्मुदितास्सपक्षाः ।
विश्रम्य रात्रावुषसि प्रतीतास्
सभां विराटस्य ततोऽभिजग्मुः ॥ १

---

1. अ-क-घ-ब-म—सार्धश्लोकोऽयं न दृश्यते ।

* यद्यप्यध्यायक्रमेण श्लोकगणनायां ३२८३ श्लोका एव भवन्ति ; तथाऽपि तत्र तत्राधः प्रदर्शितानां समीचीनानाम् २१७ अधिकपाठश्लोकानां सम्मेळनेन ३५०० श्लोका भवन्तीति ज्ञेयम् ।

# मूलतया ग्राह्याणामधिकपाठानां प्रदर्शनम् ॥

| पुटम् | अधिकपाठ-प्रदर्शकसंख्या | ग्राह्य-श्लोक-संख्या | पुटम् | अधिकपाठ-प्रदर्शकसंख्या | ग्राह्य-श्लोक-संख्या |
|---|---|---|---|---|---|
| २ | १ | १ | ११२ | १ | ॥ |
| ३ | १ | ॥ | ११८ | २ | १ |
| ४ | १ | ॥ | १२८ | १ | ॥ |
| | ३ | १ | | २ | ६॥ |
| | ४ | ॥ | १२९ | १ | ॥ |
| ७ | २ | ॥ | १४१ | १ | ॥ |
| १० | १ | ॥ | १४९ | १ | १ |
| १३ | १ | ॥ | १५३ | २ | १ |
| १६ | १ | ॥ | १५६ | * | १ |
| १८ | १ | ॥ | १६१ | २ | ॥ |
| | ५ | ॥ | १६६ | १ | ॥ |
| १९ | २ | २ | १७२ | १ | २ |
| २१ | १ | ॥ | १७४ | २ | ॥ |
| २४ | ४ | ॥ | १७५ | २ | १ |
| | ५ | ॥ | १७६ | १ | १ |
| २५ | १ | ॥ | १७९ | ३ | १२ |
| २६ | २ | १॥ | १८५ | २ | १ |
| ३५ | १ | ॥ | १८७ | २ | २॥ |
| | २ | १ | १८८ | २ | १० |
| ४१ | २ | २ | १९१ | १ | ३॥ |
| ४४ | १ | ॥ | | २ | १ |
| | ३ | ॥ | १९४ | १ | ॥ |
| ४८ | १ | ॥ | १९७ | २ | १ |
| ७३ | २ | ॥ | १९८ | १ | १ |
| | ३ | ॥ | २०० | १ | १ |
| ८८ | २ | ॥ | | ३ | ॥ |
| ८९ | २ | ४ | २०२ | २ | ॥ |
| १०० | १ | १ | | ३ | ॥ |
| १०३ | १ | ॥ | | ५ | ॥ |
| १०५ | १ | ॥ | २०८ | १ | २॥ |

| पूटम् | अधिकपाठ-प्रदर्शकसंख्या | ग्राह्य-श्लोक-संख्या | पुटम् | अधिकपाठ-प्रदर्शकसंख्या | ग्राह्य-श्लोक-संख्या |
|---|---|---|---|---|---|
| २१४ | ३ | ॥ | ३०२ | ३ | ॥ |
| २२३ | १ | ॥ | ३१० | १ | १ |
| | ३ | ॥ | ३१२ | २ | ॥ |
| २२९ | १ | २ | ३१९ | ३ | १ |
| २३३ | २ | ॥ | | ५ | ॥ |
| २३६ | १ | २॥ | | ६ | ॥ |
| २३७ | १ | ॥ | ३२७ | १ | १ |
| २३९ | १ | ॥ | ३२८ | ४ | ॥ |
| २४५ | १ | १ | ३२९ | २ | ॥ |
| २४८ | १ | ३॥ | | ४ | १ |
| २४९ | २ | १ | ३३५ | ४ | १ |
| २५३ | १ | १॥ | ३४६ | २ | १॥ |
| २६५ | १ | ॥ | ३५३ | ३ | २॥ |
| २६६ | २ | १ | ३६४ | २ | ॥ |
| | ३ | २॥ | ३७१ | १ | ॥ |
| २६७ | ३ | ४ | ३९० | १ | १॥ |
| २६८ | १ | ५ | ३९४ | १ | ॥ |
| २७२ | १ | ८॥ | | ४ | १ |
| २७८ | ७ | ॥ | ३९८ | २ | ३ |
| २८० | १ | १ | ३९९ | १ | २ |
| २८१ | १ | १ | | २ | २॥ |
| २८५ | २ | २ | ४०० | ३ | २ |
| २८६ | ३ | १ | ४०८ | २ | ७ |
| २८७ | १ | १ | ४०९ | १ | ३॥ |
| २८८ | २ | १ | ४११ | २ | २ |
| २९४ | १ | १॥ | ४१९ | २ | ॥ |
| २९७ | १ | ॥ | | ३ | २ |
| | ३ | १ | ४२० | १ | ३ |
| २९८ | २ | १ | | ३ | ॥ |
| २९९ | १ | ॥ | ४२१ | २ | ४* |
| | २ | ३ | ४२४ | २ | ॥ |

* अत्र "नाक्षाणां" "अङ्गुलं द्व्यङ्गुलं वाऽपि" इत्यर्धद्वयं विहाय शिष्टं ग्राह्यम् ।

| पुटम् | अधिकपाठ-प्रदर्शकसंख्या | ग्राह्य-श्लोक-संख्या | पुटम् | अधिकपाठ-प्रदर्शकसंख्या | ग्राह्य-श्लोक-संख्या |
|---|---|---|---|---|---|
| ४२४ | ४ | ॥ | ४६८ | २ | ॥ |
| ४४३ | १ | १ | | ४ | ॥ |
| ४४८ | २ | ॥ | ४६९ | १ | ३ |
| ४४९ | २ | ॥ | ४७४ | ३ | १॥ |
| ४५० | १ | ॥ | ४७६ | १ | ॥ |
| ४५५ | १ | ॥ | ४७८ | १ | ॥† |
| ४५८ | १ | १॥ | ४७९ | १ | १ |
| ४६० | २ | ३ | ४८५ | ३ | ५ |
| ४६२ | २ | ४ | ४८६ | १ | ॥ |
| ४६७ | २ | ७॥ | ४९६ | १ | ४॥ |
| | | | | आहत्य श्लोकाः | २१७ |

† पूर्वार्धमेव ग्राह्यम्।

# माकोशस्थितानामधिकपाठानां सूचनम् ॥

| पुटम् | स्थलम् | अधिक श्लोक संख्या | पुटम् | स्थलम् | अधिक-श्लोक-संख्या |
|---|---|---|---|---|---|
| २ | F १ | १ | २०८ | १ | २॥ |
| ३ | १ | १ | २०८ | २ | १ |
| ४ | १ | ॥ | २१४ | ३ | ॥ |
| २४ | ४ | ॥ | २२३ | १ | ॥ |
| ,, | ५ | ॥ | ,, | ३ | ॥ |
| ३५ | १ | ॥ | २२९ | १ | २ |
| ,, | २ | १ | २६६ | ३ | ॥ |
| ४४ | १ | ॥ | २७४ | ३ | ॥ |
| ,, | ३ | ॥ | २८० | १ | १ |
| ७३ | २ | ॥ | ३०२ | ३ | ॥ |
| ८९ | २ | ४ | ३१० | १ | १ |
| १०५ | १ | ॥ | ३७१ | १ | ॥ |
| १०९ | १ | १ | ४१९ | २ | ॥ |
| १२२ | २ | १ | ,, | ३ | २॥ |
| १५३ | २ | १ | ४२० | १ | ३ |
| १७४ | २ | ॥ | ४२१ | २ | ५ |

॥ श्रीरस्तु ॥

# महाभारतविराटपर्वविषयाणाम्
# अक्षरमातृकाक्रमेण सूचनम्

---


| | अध्यायः-पुटम् |
|---|---|
| अज्ञातवासार्थं प्रस्थानं कुर्वतां पाण्डवानां मङ्गलार्थं धौम्येन होमपूर्वकं मन्त्रजपः | ६—३६ |
| अर्जुनस्य षण्डवेषपरिग्रहेण विराटसभाप्रवेशः | ९—६८ |
| अर्जुनस्य विराटस्य च सल्लापः | ९—७० |
| अर्जुनस्य विराटेन कन्यानाटने नियोजनम् | ९—७३ |
| अर्जुनमुद्दिश्य द्रोणभीष्मकर्णादीनामुक्तयः | ३४-२७० |
| अर्जुनचोदनयोत्तरस्य शमीमारुह्य गाण्डीवाद्यायुधाहरणप्रयत्नः | ३४-२७६ |
| अर्जुनस्य उत्तरसारथीकरणपूर्वकं रथारोहणेन युद्धायाभियानम् | ३८-२९५ |
| अर्जुनस्य शङ्खादिशब्दश्रवणवित्रस्तमुत्तरं समाश्वास्य रणायाभियानम् | ३९-२९९ |
| अर्जुनाभिहतस्य कर्णस्य रणात् पलायनम् | ५१-३७४ |
| अर्जुनबाणाहतिविषण्णे द्रोणे अश्वत्थाम्ना तद्रक्षणायार्जुनं प्रत्यभियानम् | ५२-३८७ |
| अर्जुनदत्तावकाशेन द्रोणेन रणादपयानम् | ५२-३८७ |
| अर्जुनस्य भीष्मद्रोणादिभिस्सह सम्भूय युद्धम् | ५४-३९५ |
| अर्जुनयुद्धविशेषवर्णनम् | ५४-३९६ |
| अर्जुनस्योत्तरं समाश्वास्य दुर्योधनं प्रति रथयापनचोदनम् | ५८-४२५ |
| अर्जुनदुर्योधनयुद्धम् | ५८-४२७ |
| अर्जुनगर्हणेन दुर्योधनस्य पुनः परावृत्य अर्जुनेन सह युद्धायाभियानम् | ५९-४३४ |
| अर्जुनस्य जयेन रणादपयानम् | ५९-४३९ |
| अर्जुनस्य विराटपुरं प्रति जयेनागमनम् | ५९-४४४ |

अध्यायः-पुटम्

अर्जुनस्य श्मशानशमीतरौ गाण्डीवाद्यायुधानि निक्षिप्य पुनर्बृहन्नलावेषपरिग्रहेण सारथ्यकरणम् ६०-४४७
अर्जुनप्रेरणया उत्तरेण नगरे जयोद्घोषणाय दूतप्रेषणम् ६०-४४८
अर्जुनकुरुयुद्धदिदृक्षया समागतैर्देवैरर्जुनं श्लाघमानैः पुनस्स्वर्गं प्रति गमनम् ६२-४६१
अर्जुनस्य विराटान्तःपुरप्रवेशः ६२-४६९
अर्जुनस्य युधिष्ठिरदिदृक्षया तत्समीपं ग .त्य तेन पूर्ववदनभिभाषणेन भीमं प्रति प्रश्नः ६२-४७५
अर्जुनेन युधिष्ठिरं प्रति स्वेन नपुंसकवेषपरिग्रहेण राजकन्यानाटनादिकथनम् ३—१८
अर्जुनेन सारथ्यकरणाय कवचधारणानभ्यासाभिनयः ३२-२५५
अर्जुनेन पलायत उत्तरस्य केशेषु ग्रहणम् ३३-२६६
अर्जुनेनाहं कुरून् योत्स्ये मम त्वं सारथिर्भवेति उत्तरसमाश्वासनेन गाण्डीवाद्यायुधाहरणाय श्मशानशमीसमीपगमनम् ३३-२६८
अर्जुनेनोत्तरं प्रति शमीमारुह्य गाण्डीवाद्यायुधाहरणचोदनम् ३४-२७३
अर्जुनेनोत्तरं प्रति युधिष्ठिराद्यायुधानां पृथक्पृथङ् निर्देशेन तत्तत्स्वामिकत्वकथनम् ३६-२८१
अर्जुनेनोत्तरं प्रति स्वस्यार्जुनत्वकथनपूर्वकं कङ्कादीनां युधिष्ठिरादित्व .थनम् ३७-२८६
अर्जुनेनोत्तरं प्रति धैर्यावलम्बार्थं स्वमाहात्म्यवर्णनम् ३७-२९०
अर्जुनेनोत्तरं प्रति स्वस्य क्लीबत्वप्राप्तिहेतुकथनम् ३८-२९४
अर्जुनेन युद्धप्रस्थानसमये उत्तररथात् सिंहध्वजावरोपणपूर्वकं स्वध्यानसंनिहितस्य हनुमद्ध्वजस्य रथे स्थापनम् ३९-२९८
अर्जुनेन सेनामध्ये दुर्योधनादर्शनेन उ .र प्रति तत्पार्श्वमनु रथयापनचोदनम् ४७-३३४
अर्जुनेन भीष्मद्रोणादीनां शराभ्यामभिवादनम् ४७-३३५
अर्जुनेन सेनामध्ये दुर्योधनानवलोकनेन तस्य गवामादानेन गमनसम्भावनया रथेन गवाग्रं प्रत्यभियानम् ४८-३३७

अध्यायः-पुटम्

अर्जुनेन गवान्तिकमुपगम्य तद्रक्षिणां बाणैरभिहननेन गवां विनिवर्तनम् ४८-३४१
अर्जुनेनोत्तरं प्रति द्रोणकर्णादिरथानामसाधारणध्वजचिह्नानि प्रदर्श्य तत्तन्नामनिर्देशेन तत्तत्पराक्रमवर्णनम् ४९-३४४
अर्जुनेन दुर्योधनसैन्यविध्वंसनम् ५०-३५०
अर्जुनेन कर्णपराभवस्य सङ्ग्रहेण कथनम् ५०-३५८
अर्जुनेनोत्तरं प्रति कर्णाभियानचोदनम् ५१-३६०
अर्जुनेन विकर्णादिकर्णरक्षकाणां भङ्गः ५१-३६३
अर्जुनेन कर्णभ्रातुश्शोणाश्ववाहस्य हननम् ५१-३६५
अर्जुनेनोत्तरं प्रति द्रोणायाभियानचोदना ५२-३७७
अर्जुनेनाश्वत्थामजयः ५३-३८८
अर्जुनेन पराजितस्य कृपस्याश्वत्थामरथारोहणम् ५४-३९४
अर्जुनेन सव्यक्ताडितस्य भीष्मस्य सारथिनाऽन्यत्र नयनम् ५५-४०९
अर्जुनेनोत्तरं प्रति भीष्मादिसमीपे रथप्रापणप्रेरणापूर्वकमुत्तराप्यायनाय स्वपराक्रमप्रकथनम् ५७-४१४
अर्जुनेन दुश्शासनादिपराभवपूर्वकं भीष्मादिभिस्सहायोधनम् ५७-४१७
अर्जुनेनोत्तरं प्रति अश्वत्थामानमुद्दिश्य याहीति परिचोद्य अर्धक्रोशपर्यन्तं धावनम् ५८-४२३
अर्जुनेन दुर्योधनगर्हणम् ५८-४३२
अर्जुनेन सम्मोहनास्त्रप्रयोगः ५९-४३७
अर्जुनेन शङ्खध्मानम् ५९-४३७
अर्जुनेनोत्तरं प्रति उत्तरानिदेशानुसारेण कौरवाणां वस्त्राभरणाद्यानयनाज्ञा ५९-४३८
अर्जुनेन दुर्योधनकिरीटस्य बाणेनापहरणम् ५९-४४२
अर्जुनेन कौरवसैनिकानामभयप्रदानम् ६०-४४५
अर्जुनेनोत्तरं प्रति युधिष्ठिरादितत्त्वप्रकाशनप्रतिषेधनं त्वया मयैव गावो विजिता इति च वक्तव्यमित्युक्तिः ६०-४४६
अर्जुनेनोत्तरायै कुरुवध्वाभरणादीनां दानम् ६२-४७४

| | अध्यायः-पृष्टम् |
|---|---|
| अर्जुनेन विराटं प्रति युधिष्ठिरस्य याथातथ्यकथनेन तदीयगुणानुवर्णनपूर्वकं तस्य राजासनारोहणार्हत्वप्रतिपादनम् | ६३-४८१ |
| अर्जुनेन विराटप्रश्नाद्बल्लादीनां भीमसेनादित्वकथनम् | ६४-४८२ |
| अर्जुनं सहसाऽऽगच्छन्तं प्रेक्ष्य दुर्योधनस्य द्रोणादिशरणागतिः | ५८-४३२ |
| अश्वत्थाम्ना कर्णस्य उपालम्भः | ५०-३४८ |
| अश्वत्थामानं प्रति युद्धाय गच्छन्तमर्जुनमुद्दिश्य अर्जुनो भयादपयातीति कर्णस्य शङ्का | ५६-४१० |
| इन्द्रेण सुदर्शननामनि कामगामिनि प्रासादे देवगणानध्यारोप्य अर्जुनकुरुयुद्धावलोकनाय गगनाङ्गणावतरणम् | ४६-३३१ |
| उत्तरया बृहन्नलां प्रति कुरून् विजित्य वस्त्राभरणान्यानयेत्युक्तिः | ३२-२५६ |
| उत्तरस्य युद्धाय गमनकाले पौरैर्मङ्गलाचरणम् | ३२-२५७ |
| उत्तरस्य कुरुसेनावलोकनमात्रेण भयाद्रथादवप्लुत्य पलायनम् | ३३-२५९ |
| उत्तरस्य पलायतो ग्रहणायार्जुनस्यानुधावनम् | ३३-२६२ |
| उत्तरमनुधावन्तमर्जुनमुद्दिश्य द्रोणादीनामयमर्जुनएव स्यादिति सम्भावनम् | ३३-२६४ |
| उत्तरप्रत्ययार्थं स्वनामदशककथनपूर्वकं तन्निर्वचनम् | ३७-२८७ |
| उत्तरस्य गाण्डीवास्त्रादिना भीतस्यार्जुनेन समाश्वासनम् | ५२-३७५ |
| उत्तरस्य कुरुविजयाय बृहन्नलया सह गमनश्रवणेन तद्रक्षणाय विराटेन सेनाप्रेषणम् | ६१-४५० |
| उत्तरस्यैव जेतृत्वभ्रमहृष्टेन विराटेन तत्प्रशंसनम् | ६२-४७० |
| उत्तरागमनस्य विराटाय दूतस्थेन निवेदनम् | ६२-४६५ |
| उत्तराप्रार्थितया बृहन्नलया सारथ्यकरणाङ्गीकरणम् | ३२-२५० |
| उत्तराया अभिमन्योश्च विवाहः | ६७-५०० |
| उत्तरे समुचितसारथेरभावेन खिद्यमाने अर्जुनेन द्रौपदीं प्रति उत्तरायै बृहन्नलायाः सारथ्यकौशलनिवेदनचोदना | ३२-२४५ |
| उत्तरेण कौरवाणां वस्त्राभरणाद्यानयनम् | ५९-४३९ |
| उत्तरेण बृहन्नलायाः कवचधारणम् | ३२-२५६ |
| उत्तरेणार्जुननिकटे मुञ्च मुञ्चेति प्रलापः | ३३-२६७ |
| उत्तरेणार्जुनं प्रति पाण्डवानुद्दिश्य प्रश्नः | ३७-२८५ |

| | अध्यायः-पुटम् |
|---|---|
| उत्तरेण बृहन्नलाया अर्जुनत्वविज्ञानेन तं प्रति अज्ञान-मूलकभूतपूर्वस्वापराधक्षामणम् | ३८-२९२ |
| उत्तरेण सवाद्यघोषं पौरैः प्रत्युद्गम्यमानेन स्वनगरप्रवेशनम् | ६२-४६४ |
| उत्तरेण राजानुज्ञयाऽन्तःपुरमेत्य तदभिवादनम् | ६२-४६७ |
| उत्तरेण विराटं प्रति कस्यचिद्देवपुत्रस्यैव जेतृत्वकथनम् | ६२-४७१ |
| उत्तरेण विराटं प्रति अर्जुनपराक्रमवर्णनम् | ६४-४८५ |
| उत्तरेण विराटं प्रति युधिष्ठिरादिकृतोपकारस्मारणपूर्वक-मुत्तरायाः प्रदानेन तत्प्रसादनचोदना | ६५-४८७ |
| कङ्कव्रणावलोकनभीतोत्तरचोदनया विराटेन कङ्कक्षामणम् | ६२-४६८ |
| कङ्केन द्यूतनिषेधनम् | ६१-४५५ |
| कङ्केन द्वास्स्थं प्रति बृहन्नलाया अप्रवेश्यत्वकथनम् | ६२-४६६ |
| कर्णमभियान्तमर्जुनं प्रति चित्राङ्गदादिप्रधावनम् | ५१-३६१ |
| कर्णस्य अर्जुनबाणाभिहत्या युद्धान्नीतस्य अर्जुनो दृष्टः पुनर्वनं यातु अर्जुनो वेगेनागच्छति दुर्योधनं सम्परिवार्य गच्छाम इत्युक्तिः | ५८-४२१ |
| कर्णभीष्मादिभिर्दुर्योधनस्य रक्षणम् | ५९-४२५ |
| कर्णार्जुनयुद्धम् | ५१-३६५ |
| कर्णार्जुनयोः परस्परं वाचोपालम्भः | ५१-३६९ |
| कर्णेनात्मश्लाघनपूर्वकमर्जुनपराभवनमिथ्याप्रतिज्ञानम् | ४१ ३०९ |
| कर्णेन कृपकृतगर्हणममृष्यता तदुपालम्भः | ४२-३१७ |
| कर्णेन स्वपराक्रमवर्णनम् | ५०-३४९ |
| कर्णोपालम्भासहिष्णुनाऽश्वत्थाम्ना समर्मोद्घाटनं कर्ण-दुर्योधनोपालम्भः | ४३-३१८ |
| कीचकाय सुदेष्णया सुराहरणव्याजेन तद्गृहं प्रति द्रौपदी-प्रेषणप्रतिज्ञानम् | १५-११५ |
| कीचकगृहं प्रति प्रस्थितया द्रौपद्या तेन स्वस्या अदूषणाय सूर्यादिदेवताप्रार्थना | १६-११९ |
| कीचकप्रार्थनाया द्रौपद्याऽनङ्गीकारेण रोषात् कीचकेन द्रौपद्याः पादेन ताडनम् | १६-१२२ |

अध्यायः-पुटम्

कीचकवधोद्यतं भीमं प्रति युधिष्ठिरेण इङ्गितेन तत्प्रतिषेधः १६-१२३
कीचकमारणाभावे द्रौपद्या स्वप्राणविमोक्षणप्रतिज्ञा १७-१४७
कीचकसहोदराणां सभापालकृतशब्देनागमनम् २०-१८१
कीचकसहोदरैः कीचकवधामर्षेण द्रौपद्याः कीचकेन सह चरमविमानसमारोपणेन श्मशानप्रापणम् २१-१८२
कीचकनिधनवार्तायाः देशेषु सर्वत्र प्रचारः २३-१९६
कीचकेन सुदेष्णां प्रति द्रौपद्याः स्ववशीकरणप्रार्थना १५-१११
कीचकेन द्रौपदीं प्रति स्ववशीभवनयाचनम् १६-१२०
कीचकोत्पत्तिकथनम् १६-१३७
कीचकं जिघांसन्त्या द्रौपद्या रात्रौ महानसमेत्य स्वपतो भीमस्य प्रबोधनम् १७-१४२
कुरुविजयदिनात् परेद्यवि प्रभाते युधिष्ठिरादिभी राजलक्षणधारणेन सिंहासनादिषूपवेशनम् ६३-४७९
कृपाचार्येण दुर्योधनं प्रति नीत्युपदेशव्याजेन पाण्डवैस्सन्धिविधानचोदनम् २६-२१०
कृपार्जुनयुद्धम् ५४-३९१
कृपेणार्जुनं प्रशस्य कर्णगर्हणम् ४२-३१३
कृपेण स्वेषु एकैकेनार्जुनस्य दुर्जयत्वकथनेन सम्भूयाभियाननिर्धारणम् ४२-३१६
कौरवाणामपजयेन पुरगमनकाले अर्जुनेन बाणैः द्रोणादीनामभिवादनम् ५९-४४२
कौरवसैनिकानां मध्येमार्गं अर्जुनशरणागतिः ६०-४४५
गोपालेन केनचित् विराटपुरमेत्य उत्तरं प्रति कुरुभिर्गोग्रहणस्य निवेदनम् ३१-२४३
दुर्योधनस्य अर्जुनगवेषणम् ५८-४२३
दुर्योधनस्य युद्धात् पलायनम् ५८-४२९
दुर्योधनेन पाण्डवान्वेषणाय कर्णादिभिस्समालोचनम् २४-२०१
दुर्योधनेन कीचकवधस्य भीमसेनकृतत्वसम्भावनया पाण्डवानां विराटनगरस्थितिसम्भावना २६-२१२

अध्यायः–पुटम्

दुर्योधनेन प्रथमं सुशर्मणा विराटगोग्रहणकर्तव्यतानिर्देशपूर्वकं कुरुभिरपरस्मिन्नहनि विराटगोग्रहणम् २६–२१७
दुर्योधनेन भीष्मद्रोणादिभिस्सह विराटनगरमेत्य उत्तरभागे गवां ग्रहणम् ३१–२४२
दुर्योधनेनार्जुनदर्शने पुनर्द्वादशवत्सरारण्यवासावश्यकर्तव्यत्वनिर्धारणेन अवश्यं युद्धं करणीयमिति निश्चयेन च द्रोणानादरपूर्वकं दुर्निमित्तानामन्यथा गतिकल्पनेन सैन्यप्रोत्साहनम् ४०–३०४
दुर्योधनेन कृपद्रोणक्षामणम् ४५–३२४
दुर्योधनेन कर्णं प्रति अर्जुनास्तित्वाज्ञानात् विराटगोग्रहणं कृतम्. अत इदानीमस्माभिरवश्यं योद्धव्यमेव अन्यथा अयशस्स्यादिति कथनम् ५०–३४९
दुर्योधनेन जित्वा गच्छन्तमर्जुनमुद्दिश्य भीष्मादीन् प्रति पुनर्युद्धकरणचोदनम् ५९–४४०
दुर्योधनेन युधिष्ठिरं प्रति दूतमुखेन त्रयोदशवत्सरस्यासम्पूर्तावेवार्जुनेनात्मप्रकाशनात् पुनर्वनवासविधेयतानिवेदनम् ६६–४९४
द्रुपदादिभिर्द्रौपदेयादिभिस्सहागमनम् ६७–४९९
द्रोणार्जुनयुद्धम् ५२–३७९
द्रोणेन दुर्योधनं प्रति पाण्डवानां धार्मिकत्वादिगुणशालितया विनाशाभावनिर्धारणेन पुनस्तदन्वेषणविधमनम् २५–२०४
द्रोणेनार्जुनशङ्खनादादिना तस्यार्जुनत्वनिर्धारणेन दुर्योधनं प्रति तन्निवेद्य दुर्निमित्तप्रदर्शनम् ३९–३०१
द्रोणेनार्जुनाभिवादनकुशलप्रश्नादिकौशलश्लाघनम् ४७–३३५
द्रोणेन कर्णशङ्कावारणम् ५६–४१३
द्रौपदीचोदितया उत्तरया उत्तरं प्रति बृहन्नलायास्सारथ्यकरणप्रार्थनचोदनम् ३२–२४८
द्रौपद्या स्वस्यास्सैरन्ध्रीभावेनावस्थानकथनम् ४—२२
द्रौपद्या श्रमार्तया विराटनगरपरिसरदेशे एकरात्रिनिवासप्रार्थना ६—३७

| | अध्यायः-पुटम् |
|---|---|
| द्रौपद्या सैरन्ध्रीवेषधारणेन सुदेष्णायास्समीपगमनम् | १२—८५ |
| द्रौपद्यास्सुदेष्णायाश्च सल्लापः | १२—८८ |
| द्रौपद्या सैरन्ध्रीरूपया सुदेष्णाशुश्रूषया तस्या गृहे वासः | १२—९५ |
| द्रौपद्या स्वात्मानं कामयमानस्य कीचकस्य प्रत्याख्यानम् | १४—१०२ |
| द्रौपद्याः कीचकगृहं प्रति सुदेष्णया सुरानयनाय गमनचोदना | १५—११६ |
| द्रौपद्या कीचकगृहं प्रति गमनानङ्गीकारः | १५—११७ |
| द्रौपद्या भर्तुराज्ञया सुदेष्णागृहगमनम् | १६-१२४ |
| द्रौपद्याऽज्ञानादिव स्वशोकहेतुं पृच्छन्तीं सुदेष्णां प्रति गन्धर्वैः कीचकवधस्य भावित्वकथनम् | १६—१२५ |
| द्रौपद्या भीमनिकटे स्वदुःखावेदनम् | १७—१४५ |
| द्रौपद्या युधिष्ठिरादीन् प्रति प्रत्येकं नामनिर्देशपूर्वकमनुशोचनम् | १७-१४९ |
| द्रौपद्या भीमं प्रति स्ववैभवानुस्मारणेन शोचनपूर्वकं कीचकहननचोदना | १८—१५७ |
| द्रौपद्या भीमं प्रति अवश्यं झटिति कीचको हन्तव्य इति कथनम् | १९—१६५ |
| द्रौपद्या कीचकं प्रति भीमोक्तरीत्या नर्तनागारस्य सङ्केतस्थलत्वकरणम् | २०-१७० |
| द्रौपद्या भीमं प्रति कीचकसङ्केतकथनम् | २०—१७२ |
| द्रौपद्या भीमहतस्य कीचकस्य सभापालेभ्यः प्रदर्शनम् | २०—१८१ |
| द्रौपद्याक्रन्दश्रवणात् पितृवनमुपगतवता भीमेनोपकीचकानां पञ्चाधिकशतस्य पञ्चताप्रापणम् | २१-१८५ |
| द्रौपद्या मासावधिस्ववासाभ्यनुज्ञानप्रार्थनायां सुदेष्णया तदङ्गीकरणम् | २२-१९५ |
| धौम्येन पाण्डवान् प्रति राजगृहवासप्रकारानुशासनम् | ५—२६ |
| नकुलस्य विराटेनाश्वपालने नियोजनम् | १०—७७ |
| नकुलेन युधिष्ठिरं प्रति विराटनगरे स्वस्य अश्वपालकतयाऽवस्थानकथनम् | ४—२० |
| नकुलेन विराटमेत्य स्वस्याश्वशाले कौशलाभिधानम् | १०—७५ |
| पाण्डवकार्मुकाद्यवलोकनविस्मितेनोत्तरकुमारेणार्जुनं प्रति तत्तदायुधवर्णनपूर्वकं तत्तत्स्वामिनां प्रश्नः | ३५—२७७ |

अध्यायः-पुटम्

पाण्डवान्वेषणाय दुर्योधनप्रहितैश्चारैस्सर्वत्रान्विष्य दुर्योधनाय पाण्डवानवगतिनिवेदनपूर्वकं विराटनगरे गन्धर्वैः कीचकवधवार्तानिवेदनम्  २३-१९७
पाण्डवैः स्वसहचरब्राह्मणाभ्यनुज्ञानसम्पादनेन तद्विसर्जनपूर्वकं धौम्येन सह मन्त्राय क्वचिदुपवेशनम्  १—७
पाण्डवैरिन्द्रसेनादीन् प्रति द्वारकादिगमनचोदनम्  ५—२५
पाण्डवैर्धौम्येन सह किञ्चिद्दूरं गत्वा अग्निपरिचरणे धौम्यं नियुज्य विसृज्य च विराटनगरपरिसरगमनम्  ६—३७
पाण्डवैस्सर्वैस्स्वेषामायुधानि वस्त्रेण परिवेष्ट्य धर्मपुत्राय समर्पणम्  ६—४१
पाण्डवैस्स्वायुधानि निक्षिप्य अशीत्युत्तरशतवर्षा अस्मन्माता-मृता-सेयं शमीवृक्षे आबद्धा अस्माकमयं कुलधर्मः-इति वदद्भिरेव-मृतं गोमृगं विप्रकलेबरं च तत्रायुधोपरि सहदेवेनाबध्य-अस्माकं माता मृतेत्युच्चैर्घोषयद्भिर्गमनम्  ६-४६
पाण्डवैः स्वस्वव्यापारैर्विराटपरितोषणम्  १३—९६
पाण्डवैर्विराटस्य जयसम्पादनेन पाण्डवान् प्रति विराटस्य ससन्तोषभाषणम्  ३०-२३८
पाण्डवैरुपप्लाव्यनगरे वसद्भिर्दूतमुखेन अभिमन्युविवाहार्थं समाहूतैः रामकृष्णादिभिस्सुभद्राभिमन्युप्रभृतिभिस्सहोपप्लाव्यं प्रत्यागमनम्  ६७-४९७
बृहन्नलाद्रौपदीसंवादः  २२-१९३
भीमस्य विराटस्य च संवादः  ८—६५
भीमस्य विराटेन पाकाधिकारे नियोजनम्  ८—६७
भीमकीचकयो रात्रौ सङ्केतस्थानगमनेन युद्धम्  २०-१७६
भीमद्रौपदीसंवादः  २२-१९२
भीमादिभिः क्रोधाद्विराटवधाध्यवसाये युधिष्ठिरेण हेतुकथनेन तत्प्रतिषेधः  ६२-४७६
भीमेन युधिष्ठिरसान्त्वनम्  १—६

अध्याय.-पुटम्

भीमेन युधिष्ठिरं प्रति स्वस्य सूदवेषपरिग्रहेण विराटभवने निवासकथनम् ३—१३

भीमेन सूदवेषपरिग्रहेण विराटसभाप्रवेशः ८—६२

भीमेन शङ्करोत्सवे महामल्लमारणम् १३—९७

भीमेन शोचन्तीं द्रौपदीं प्रति परमनारीणां निदर्शनपूर्वकं परिसान्त्वनम् १९-१६१

भीमेन द्रौपदीं प्रति कीचकमुद्दिश्य नर्तनशालायां रात्रावुभयोस्सङ्गमाय आगन्तव्यमिति सङ्केतं कुर्वित्युक्तिः २०-१६८

भीमेन कीचकहननप्रतिज्ञा २०-१७४

भीमेन कीचकहननम् २०-१७९

भीमेन कीचकं हत्वा द्रौपद्यै सम्प्रदर्श्य महानसगमनम् २०-१८०

भीमेन द्रौपद्यास्समाश्वासनेन स्वावासप्रेषणपूर्वकं महानसप्रवेशः २१-१८८

भीमेन युधिष्ठिरचोदनया विराटस्य मोचनपूर्वकं सुशर्मणो ग्रहणम् २९-२३२

भीमेन विराटं प्रति अर्जुनस्वरूपकथनम् ६४-४८४

भीष्मं प्रत्यर्जुनस्याभियानकाले वृषसेनदुश्शासनादीनां पराजयः ५५-३९९

भीष्मार्जुनयो रणाय समागमे देवैस्तयोः प्रशंसनम् ५५-४०१

भीष्मार्जुनयुद्धम् ५५-४०३

भीष्मार्जुनयुद्धमुद्दिश्य चित्रसेनेन गन्धर्वेण इन्द्रेण सह प्रशंसनम् ५५-४०७

भीष्मेण पाण्डवावासदेशस्य लक्षणाभिधानपुरस्सरं तेषां दुर्ज्ञेयत्वस्यापि कथनं २५-२०६

भीष्मेण कर्णकृतद्रोणकृपाधिक्षेपक्रुद्धमश्वत्थामानं प्रति द्रोणादिप्रशंसनेन सान्त्वनम् ४४-३२२

भीष्मेण दुर्योधनं प्रति हेतूपन्यासेन युधिष्ठिरस्य श्रुतवनवासादिकालस्य समाप्तिकथनम् ४५-३२६

भीष्मेण द्रोणवचनाद्द्रोणादिभिस्सह दुर्योधनं प्रस्थाप्य सेनाया व्यूहीकरणेन समरायाभियानम् ४५-३२९

भीष्मेण दुर्योधनं प्रति पुनर्युद्धं न कर्तव्यं हास्तिनपुरं प्रत्येव गन्तव्यमित्युक्तिः ५९-४४०

अध्यायः-पुटम्
भीष्मेण विचार्य निर्धारणेन सङ्केतकालस्य पूर्णत्वोक्तिः  ६६-४९५
भीष्मेणार्जुनप्रशंसनेन दुर्योधनं प्रति पाण्डवैस्सह
सन्धिकरणचोदनेऽपि दुर्योधनेन तत्प्रतिषेधः  ४५-३२८
भीष्मेणार्जुनभावविज्ञानात् सेनया सह तदनुधावनम्  ४८-३३९
यतिरूपस्य युधिष्ठिरस्य विराटभवने निवासः  ७—६१
युधिष्ठिरस्य धौम्येन देवादिनिदर्शनप्रदर्शनेन परिसान्त्वनम्  १—४
युधिष्ठिरस्य यतिवेषपरिग्रहेण विराटसभास्तारीभवननिर्धारणम्  २—११
युधिष्ठिरचोदनया विराटप्रेषितैर्दूतैर्नगरमेत्य जयोद्घोषणम्  ३०-२४१
युधिष्ठिरादिनिहतानां गणनम्  २८-२२७
युधिष्ठिरेण ब्राह्मणाय मृगापहृतारणिभाण्डप्रत्यर्पणम्  १—२
युधिष्ठिरेण ब्राह्मणमध्ये दुर्योधनापनयादिकथनेन शोचनम्  १—३
युधिष्ठिरेण भ्रातृभिस्सह मन्त्रेण विराटनगरे निवासनिर्धारणम्  २—९
युधिष्ठिरेण नकुलसहदेवयोः प्रत्येकं द्रौपद्याः वहननियोजनेऽपि
तयोरपि श्रमार्ततया तदनङ्गीकरणम्  ६—३८
युधिष्ठिरेण द्रौपदीवहने अर्जुननियोजने तेन द्रौपदीवहनम्  ६—३९
युधिष्ठिरेण मन्त्रजपपूर्वकं देवताश्च नमस्कृत्य शमीवृक्षमारुह्य
तत्र स्वायुधनिक्षेपः  ६—४४
युधिष्ठिरेण आपत्सु संज्ञापनाय स्वेषां छद्मनामकरणम्  ६—४८
युधिष्ठिरेण स्वपितृधर्मानुस्मरणेन यतिवेषपरिग्रहेण
विराटसभाप्रवेशः  ७—४९
युधिष्ठिरेण द्रौपद्याः सान्त्वनम्  १६-१२२
युधिष्ठिरेण स्वेषां युद्धकाशलनिवेदनेन भ्रातृभिः सह
समरायाभियानम्  २७-२२२
युधिष्ठिरेण करुणया सुशर्मणो विमोक्षणम्  २९-२३७
युधिष्ठिरेणार्जुनादीन् प्रति विराटेनाक्षाभिहननकथनम्  ६२-४७५
युधिष्ठिरेणोत्तरायाः पुरस्कारेण सप्रणामं प्रसाद्यते
विराटायाभयप्रदानम्  ६५-४८८
युधिष्ठिरेण दुर्योधनं प्रति तेनैव दूतेन भीष्ममुखात् सन्देहस्य
परिहरणीयताप्रतिवेदनम्  ६६-४९५

अध्यायः-पुटम्

युधिष्ठिरेणार्जुनं प्रति तद्वीर्यकथनेन विराटनगरे कथं छन्नो वत्स्यसीति प्रश्नः ३—१६
युधिष्ठिरेणार्जुनं प्रति कुत्रास्माकमायुधानि गोप्तव्यानीति प्रश्नः ६—३९
विराटनगरं प्रति दुर्योधनेन दण्डयात्राकर्तव्यतानिर्धारणम् २६-२१२
विराटगोपैर्द्रुततरमाद्रुत्य विराटं प्रति सुशर्मणा गोग्रहणनिवेदनम् २७-२२०
विराटसुशर्मसैन्ययोर्युद्धम् २८-२२५
विराटसुशर्मणोर्युद्धम् २८-२२८
विराटस्य युधिष्ठिरस्य च सल्लापः ७—५५
विराटस्य कङ्केन द्यूतदेवनम् ६१-४५६
विराटादीनां त्रिगर्तैस्सह युद्धाय निर्गमोद्यमः २७-२२१
विराटाय दूतैरुत्तरजयनिवेदनम् ६१-४५१
विराटेन युधिष्ठिरस्य प्रत्युत्थानादिना सत्कारः ७—५४
विराटेन कीचकस्यादण्डनाद्दुष्टया द्रौपद्या तं प्रत्युपालम्भनम् १६-१२७
विराटेन कीचकानां दहनादेशेन सुदेष्णां प्रति सैरन्ध्र्या बहिर्गमनचोदना २२-१९१
विराटेन युधिष्ठिरादिभिस्सह सुशर्मादिजयानन्तरं पुरं प्रत्यागमनम् ६१-४४९
विराटेन कङ्कं प्रति द्यूतदेवनचोदनम् ६१-४५४
विराटेन सह कङ्कस्य द्यूतकाले विराटेनोत्तरप्रशंसने कङ्केन बृहन्नलाप्रशंसने च कृते विराटेन कङ्कस्याक्षेण अभिहननम् ६१-४५७
विराटेन कङ्कशोणितग्रहणप्रश्ने सैरन्ध्र्या तत्कारणकथनम् ६१-४६०
विराटेन उत्तरेण सह सभामागम्य युधिष्ठिरं प्रति राजासनोपवेशनाक्षेपः ६३-४८०
विराटेन सप्रणामं युधिष्ठिरादिप्रसादनम् ६४-४८६
विराटेनार्जुनं प्रति स्वकुमार्या उत्तराया भार्यात्वेन प्रतिग्रहणप्रार्थने तं प्रत्यर्जुनेन सहेतुकथनं स्नुषात्वेन परिग्रहाङ्गीकरणम् ६६-४९०
विराटेनोत्तरजयश्रवणेन नगराद्यलङ्काराज्ञापनम् ६१-४५२

अध्यायः-पुटम्

विराटं प्रति द्रौपद्या कीचकस्य दण्डनचोदनम् १६-१२५
विराटं प्रति पौरैः सानुजकीचकनिधननिवेदनपूर्वकं
नगराद्द्रौपदीनिष्कासनप्रार्थना २२-१५०
श्मशानसमीपे दुरारोहे शमीवृक्षे अस्माकमायुधानि निक्षिप्य
गूहितव्यानि इत्यर्जुनेन युधिष्ठिरं प्रत्युक्तिः ६—४०
सर्वैर्द्रौपद्याः श्लाघनम् १६-१३१
सहदेवेन गोपालकतया स्वस्य निवासकथनम् ४—२१
सहदेवेन गोपालवेषधारणेन विराटं प्रति गमनम् ११—७८
सहदेवस्य विराटस्य च सल्लापः ११—७९
सहदेवस्य विराटेन गोपालने नियोजनम् ११—८३
सुदेष्णया बलात्कारेण द्रौपदीमुद्दिश्य कीचकगृहगमनचोदना १५-११८
सुदेष्णया सैरन्ध्रीं प्रति राजाज्ञया नगराद्बहिर्गमनचोदना २२-१५४
सुशर्मकर्णादिभिरपि विराटं प्रति दण्डयात्राकर्तव्यतानिर्धारणम् २६-२१४
सुशर्मसैनिकानां विराटगोपालानां च युद्धम् २७-२१९
सुशर्मणा युद्धे विराटस्य ग्रहणम् २९-२३०
सूर्यदूतेन रक्षसा कीचकस्य भूमौ निपातनम् १६-१२२
सूर्येण द्रौपदीरक्षणाय निगूढस्य रक्षसः प्रेषणम् १६-११९
सैरन्ध्र्या कङ्कक्षतात् स्रवतो रक्तस्य निजोत्तरीयेण ग्रहणम् ६१-४६०

---

॥ श्रीः ॥

# महाभारतविराटपर्वस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १२ | २० | दशनीयान् | दर्शनीयान् |
| | | कृशलै | कुशलै |
| १६ | २० | प्रच्छन्नोऽन्नभयाचत | प्रच्छन्नोऽन्नमयाचत |
| १८ | ६ | बाहा | बाह्ना |
| १९ | ५ | परिपातुके | परिपादुके |
| २४ | १३ | नाऽहं | नाहं |
| २८ | १४ | सान्वितो | सान्त्वितो |
| ४३ | १८ | आरोह | आरुह्य |
| | १९ | निक्षिपाद्यायुधानि | निक्षिपान्यायुधानि |
| | २० | चतुतुष्टयं | चतुष्टयं |
| ६८ | १७ | परिपातुके | परिपादुके |
| ७३ | १९ | इदंतुकर्मेसमं नचैतत् | इदं तु कर्म नसमं तचै- [तत् |
| ७९ | १२ | प्रणष्ट | प्रनष्ट |
| १३२ | २१ | भजन्सुत | भजन्त्युत |
| १७८ | १७ | वन्यौन्य | वन्योन्य |
| १९१ | २२ | सस्कारै | संस्कारै |
| १९९ | २ | प्रणष्टास्ते | प्रनष्टास्ते |
| | १९ | प्रणष्टास्ते | प्रनष्टास्ते |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १९९ | १९ | अधिकः पाठः | पाठान्तरम् |
| २१६ | १५ | प्रणष्टास्ते | प्रनष्टास्ते |
| २१८ | २२ | ममितोजसाम् | ममितौजसाम् |
| २६१ | १७ | गृध्रानां | गृध्राणां |
| २६७ | २० | शोर्या | शौर्या |
| २७९ | २ | चाजिह्मगा | चाजिह्मगा |
| २८१ | २ | तत्तत्स्वाकत्व | तत्तत्स्वामिकत्व |
| २८६ | ६ | क नु | क नु |
| २९५ | १९ | प्रणष्टं | प्रनष्टं |
| ३०० | १४ | धनुषश्चैव | धनुषश्चैव |
| ३०५ | १० | तैगृहीतव्यं | तैर्गृहीतव्यं |
| | १३ | मत्स्ये | मात्स्ये |
| ३१६ | १ | आमतं | आगतं |
| ३२७ | ९ | सम्प्राप्ता | सम्प्राप्तान् |
| | १० | गुप्तास् | गुप्तांम् |
| ३३६ | १८ | रथवरान्नदुन् | रथवरान् नुदन् |
| ३५३ | ६ | वडवा | वडवा |
| ३९४ | २ | दशधा: | दशधा |
| ३९९ | १५ | कान्तेयो | कौन्तेयो |
| ४१० | १४ | पयन्त | पर्यन्त |
| ४२१ | १९ | द्रोर्णि | द्रौणिं |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ४५० | १२ | अभिभूयं | अभिभूय |
| ४५२ | १२ | नृपतिस | नृपतिस् |
| ४५४ | १९ | पोराः | पौराः |
| ४६२ | १६ | सैन्द्रै | सेन्द्रै |
| ४६४ | ३ | जना | जनाः |
| ४६६ | १६ | कथञ्जन | कथञ्चन |
| ४७४ | १८ | कौशेषु अयं श्लौको | कोशेषु अयं श्लोको |
| ४७६ | ८ | प्रमेयेन | प्रमेयेण |
| ४७८ | १९ | रजा | राज |
| ४९४ | २० | साहिता | सहिताः |

PRINTED BY V. RAMASWAMY SASTRULU & SONS,
AT THE 'VAVILLA PRESS', MADRAS.—1932.